श्रीमत्कविकुलतिलक-

श्रीमद्वादिराजश्रीमत्पूज्यचरणविरचिता

# युक्तिमल्लिका

भेदसौरभम्

श्रीमत्सत्यप्रमोदतीर्थश्रीचरणविरचितया

## विवृत्या

समलंकृतम्

सम्पादक :- केशव श्रीनिवासाचार्य कट्टि

प्रकाशिका :- जयसत्यप्रमोदनिधिसमितिः

बेंगलूर-४.

१९९२

श्रीमत्कविकुलतिलक

श्रीमद्वादिराजश्रीमत्पूज्यचरणविरचिता

# युक्तिमल्लिका

भेदसौरभम्

श्रीमत्सत्यप्रमोदतीर्थश्रीचरणविरचितया

## विवृत्या

समलंकृतम्

सम्पादक .- केशव श्रीनिवासाचार्य कट्टि

प्रकाशिका — जयसत्यप्रमोदनिधि

बेंगलर-४.

॥ श्री दिग्विजयरामो विजयते ॥

# भूमिका

**पञ्चभेदांश्च विज्ञाय विष्णोः स्वाभेदमेव च ।**
**निर्दोषत्वं गुणोद्रेकं ज्ञात्वा मुक्तिर्न चान्यथा**

इति श्रीभगवत्पादीय वचन मुमुक्षूणा भेदपञ्चकज्ञान सर्वथाऽपेक्षितमित्यनुशास्ति अतीतसौरभाभ्या विष्णो गुणोद्रेको निर्दोषत्व च न्यरूपिषाताम् । अथेदानी साधनचिन्ताऽवसर । साधन चोपासना उपास्योपासकयो भेदमन्तरा नैव सञ्जाघटीति । स च भेदश्चेदपरमार्थ तदाऽसदुपासनाऽनर्थकरी पर्यवस्यति । दूरे पुरुषार्थसाधनम् । तत्पारमार्थ्य-ससिद्धये सर्वज्ञत्वाज्ञतादिविरुद्धधर्मलक्षणविश्वसत्यताऽवश्यमेव साधनीया । न हि सभवति भेदकधर्मा मिथ्या भेदस्तु सत्य इति । व्याघातादेव । अन्ते फलस्वरूपचर्चा अवकाशमासादयति तदेवमतीतसौरभाभ्यामुपक्षेप्यं वर्तिष्यमाणसौरभयो- रुपक्षेपक सौरभमिद सौरभमालाया वैजयन्त्या स्थाने मध्यस्थान समलङ्करोति । अत्रादौ मान्त्रवर्णिकस्य अनन्तशब्दस्य पदपरिकल्पितसर्ववस्त्वात्मकत्वरूपदुरर्थ दूरीकृत्य गुणानन्त्यमर्थो व्यवस्थाप्यते ।

अन्योन्याभावस्य धर्मिस्वरूपता प्रस्ताव्य प्रागभावादित्रयाणा स्वरूपचर्चाऽत्रापूर्वा सहृदयहृदयङ्गमा प्रचकास्ति । प्रागनादित्रय स्वगोत्रकलहप्रिया· । तेषामेकतम स्वस्थितिकाले इतरयोः सत्ता न सहते । सर्वेऽपि स्वसत्तादशाया प्रतियोगिसत्ताऽसहिष्णव । अत एवात्यन्ताभाव· प्रतियोग्य-प्रामाणिकत्वनियत । अन्योन्याभावस्तु यथायथ क्वचित् प्रामाणिकप्रतियोगिकः कुत्रचिदप्रामाणिकप्रतियोगिकोऽपि इति ।

एतद्दर्शितमध्वानमनुरुध्यैवास्माभि "भगवतो निर्दोषत्वलक्षणम्" इत्यनेन ग्रन्थेन अत्यन्ताभावस्य सर्वथाऽप्रामाणिकप्रतियोगिकत्वमेवेति सिद्धान्तसार सुविपुलप्रमाणोदाहरणेन समस्थापि ।

सौरभमिद निरवकाशानामपि भेदप्रमाणाना दुराग्रहमात्रेण परपरिकल्पितदुरर्थान् दूषयति । तत्र तत्र सुदृढतराभि उभयत पाशारज्जुभि कुसमयिन क्लेशयति । सता दुर्मतजनितदुर्वासना नाशयति । भेदामृतसौगन्ध्य सता स्वान्तेषु समन्तत· समावासयति । सिद्धान्ततत्त्वानि पोषयति । युक्तिरसिकान् हर्षयति । प्रौढचर्चासाहित्यश्रृङ्गाररससमिश्रणेन भूषयति । उपास्य श्रीहयग्रीव नितान्त सन्तत सन्तोषयति । अत साध्वेवोच्यते—

"सर्वे सदागमा गाव दोग्धा श्रीवायुनन्दन ।
वत्स श्रीवादिराजार्यो दुग्ध भेदामृत महत् ॥' इति ।

तदिद प्रतिपद स्वादुस्वादु भेदामृत स्वाद स्वाद साधुहृद प्रमोदनैर्भर्यमासादयेयुरिति समाशास्महे ।

**श्री श्रीसत्यप्रमोदतीर्थश्रीचरणाः**

# भेदसौरभम्

## विषयानुक्रमणिका

---

# प्रकाशकानां निवेदनम्

परमपूज्याना श्रीमदुत्तरादिमठाधीशाना श्री श्री १००८ **श्री सत्यप्रमोदतीर्थाना** प्रभूतानुग्रहबलेन तैरेव स्थापितोऽय **"जयसत्यप्रमोदनिधिः"** माध्वसमुदाय विश्वतोमुखा उन्नति निनीषु विधायकाश्च नैकान् उपक्रमान् वितन्वन्,

१) वेदान्ताध्येतृभ्य छात्रेभ्य विद्वद्भ्यश्च धनसहाय,

२) विद्यार्थिवेतन,

३) उपयुक्ताना शास्त्रग्रन्थाना प्रकाशन,

४) धार्मिकाना तथा शैक्षणिकाना शिबिराणा कृते वित्तसहाय,

५) तान्त्रिकशिक्षणप्रपित्सुभ्योऽपि विद्यार्थिभ्य वेतन च विदधाति ।

"श्रीसुधा"मासपत्रिकामाध्यमेन तत्त्वज्ञानस्य प्रचार विदधाति । प्रकृते च स्वामिपादा जयसत्यप्रमोदनिधिद्वारा श्रीवादिराजतीर्थोपनिबद्धाया युक्तिमल्लिकाया भेदसौरभ विवृतिनाम्न्या स्वप्रसूतया टिप्पण्या सहित प्रकाशयन्त शास्त्राध्येतृन् सर्वान् माध्वान् उपाचक्रिरे ।

इम ग्रन्थ प्रकशितवद्भ्य स्वामिपादेभ्य अनन्तान् अनुबन्धसध्रीचीनान् धन्यवादान् समर्पयाम ।

तथा सम्पादकेभ्य श्री कट्टी केशवाचार्येभ्य उचितकाले मुद्रकेभ्य धनजयमहोदयेभ्य तथा पि आर. एम् देसाई महोदयेभ्यश्च नैकान् धन्यवादान् समर्पयामहे ।

अध्यक्ष
एम्. एम्. जोशी.

निर्वाहक धर्मदर्शी
श्रीमुष्णं रङ्गनाथाचार्यः

जयसत्यप्रमोदनिधिः बेङ्गलूरु

॥ श्री दिग्विजयरामो विजयते ॥

# अथ युक्तिमल्लिकायां भेदसौरभम्

**सर्ववस्त्वात्मकत्वं च यदनन्तत्वमीरितम् ।**
**तदयुक्ततमं मन्ये युक्तायुक्तविचारणे ॥ १ ॥**

राम दिग्विजय सुनिर्मलतनु विभ्राजमान सदा
श्रीसीतायुतमूलराममममल सद्वशराम तथा ।
व्यास विठ्ठलमप्रमेयसुसुख मध्व जयीन्द्र गुरून्
अन्यान्मद्गुरुमानमामि सतत मद्योग्यसौख्याप्तये ॥

अथैतेषा कृपालेशमुपजीव्यैव केवलम् ।
बुद्धिशुद्ध्यै यथाबोध विवृण्वे भेदसौरभम् ॥

भगवतो, गुणै सर्वैरुदीर्णत्व, दोषवर्जितत्व च सौरभद्वयेन समर्थितम् । एव वस्तुनिर्णये सञ्जाते किं मया कार्यमिति अधिकारिण· बुद्धिरुत्पद्यते । अथेदानी तस्योपासना नित्यमादरेण कर्तव्येति विधीयते । सा च विष्णोर्जीवजडात्मकात्प्रपञ्चादत्यन्तभिन्नत्वनिश्चये सत्येव सञ्जाघटीति । स अत्यन्तभेद सौरभेऽस्मिन् सौत्रयुक्तिभिरुपपाद्यत इति पूर्वसङ्गति स्वस्मिन्नेकवाक्यता च ।

'सत्य ज्ञानमनन्त' इति मन्त्रवर्णोक्तमनन्तत्वलक्षण 'देशात कालतश्चैव गुणतश्च त्रिधा तति । सा समस्ता हरेरेव न ह्यन्ये पूर्णसद्गुणा· ॥' इति प्रमाणेन परिष्कृतम् । मायिभि तत्त्वप्रदीपिकाया अनन्तशब्दस्यार्थ अन्यथैव वर्णित· । अन्तशब्दस्य देशकालवस्तुपरिच्छिन्नत्वे व्युत्पन्नत्वात् ब्रह्मणि तन्न भवतीत्युक्ते सर्ववस्त्वभेद एव तस्य लभ्यते इति । तदेतदपाकरोति सर्ववस्त्वात्मकत्वमित्यारभ्य तत् त्रिवर्णं पदमिद त्रिविक्रमपदोपममित्यन्तै द्वानवतिश्लोकैः ॥ **अयुक्ततममिति ।** स्वमतविरुद्धत्वात् पूर्वोत्तरविरोधात् प्रमाणान्तरविरोधाच्चेति भावः ॥ १ ॥

**समस्तवस्तुरूपत्वं न तावत्स्वस्य शोभते ।**
**जडानृतविरोधित्वं यद्ब्रह्मणि जगौ स्वयम् ॥ २ ॥**

स्वमतविरुद्धत्व उपपादयति **समस्तेति**। समस्तवस्तुरूपत्वम्। मायिना स्वभाष्ये अनन्तशब्दार्थतया वर्णितमिति शेष । **स्वस्य**– मायिभाष्यकारस्य ॥ न शोभते इति सुकुमारोक्ति ॥ व्याघातदोषापादकतया लज्जाकरमिति भाव ॥ अनृतविरोधतामात्रेण सत्यत्व, जडविरोधितामात्रेण च ज्ञानत्व ब्रह्मण कथयन् अनृतात्मकता जडात्मकता च कण्ठोक्त्या प्रतिषिध्य पुन तत्तद्वस्त्वात्मक अनन्तशब्दार्थत्वेन आचक्षाण कथ न व्याहतभाषी भवेदिति भाव ॥ २ ॥

**श्रुतिः प्राग्ज्ञानमित्याह यतस्तज्जडरूपता ।**
**न तस्याश्च मता नापि शब्दस्य हृदयङ्गमा ॥ ३ ॥**

पूर्वोत्तरविरोधमुपपादयति **श्रुतिरिति**। **प्राक्**= अनन्तत्वकथनात् पूर्वम्। ज्ञानमित्युपलक्षण सत्यमित्यपि ग्राह्यम्। एव यत उत्तरत्र गुणपूर्तिवाचिब्रह्मशब्देन लक्ष्यमाह। **तत्**= तस्मात्। तस्य ब्रह्मण इति वा। **जडरूपता**= अनृतरूपता, अपूर्णता च। **तस्याः**= श्रुते । **न मता**= पूर्वोत्तरविरोधप्रसङ्गान्न विवक्षिता ॥ **शब्दस्य**= अनन्तेत्यस्य **हृदयङ्गमा**= व्युत्पत्तिबललभ्या। अन्तशब्दस्य त्वदुक्तवस्तुत परिच्छेदरूपेऽर्थेऽभिधानाद्यभावादिति भाव ॥ ३ ॥

**यद्देशतो व्याप्तिमाह देशतस्सोन्तशून्यताम्।**
**कालतो व्याप्तिमाचष्ट कालतश्चान्तशून्यताम् ॥ ४ ॥**

**विभोस्तदणुरूपत्वं नित्यस्यानित्यरूपताम्।**
**कथं पुनरसौ ब्रूयान्न हि सस्वात्मघातकः ॥ ५ ॥**

देशत अन्तशून्यत्व नाम परममहत्परिणामवत्त्वम्। एव कालत अन्तशून्यत्व नाम अनादिनित्यत्वम्। एतदुभयाभिधानेन ब्रह्मण अणुमध्यमपरिमाणवद्भ्य· तथा आद्यन्तवद्वस्तुभ्यो भेद· स्फुटमुक्त। पुन·

त्वदुक्तरीत्या वस्तुत परिच्छेदराहित्यकथनेन पूर्वोक्तवस्त्वभेदोक्तौ श्रुते स्वव्याघातेनाप्रामाण्य स्यादित्याह द्वाभ्या **यदित्यादिना** ॥ ४ ॥ ५ ॥

**देशकालव्याप्ततोक्त्या यत्तद्भिन्नमभूत्पुरा ।**
**कथं पुनर्वस्तुरूपात्तत एव तदेकता ॥ ६ ॥**

कि च तिष्ठतु तावदितरवस्तुभेदनिषेध । व्याप्ते भेदसापेक्षतया देशकालयो ब्रह्मणो व्याप्तत्वोक्त्या ताभ्यामेव भेद परेणाङ्गीकार्य इत्याह **देशेति** ॥ ६ ॥

**सकृच्छ्रुतान्तशब्देन परिच्छेदं स्थलद्वये ।**
**वदंस्तदैवभेद च कथमेकत्र वक्ति सः ॥ ७ ॥**

कि चात्रानन्तशब्दघटकोऽन्तशब्द सकृदेव श्रुत । तस्य च तथा स्थलद्वये परिच्छेदोऽर्थ एकत्र भेदरूपोऽर्थ आश्रित । तत्र प्रष्टव्य किमेष सकृदेवार्थद्वय वक्ति उत विलम्बेन । आद्यमाक्षिपति **कथमिति** ॥ ७ ॥

**न हि द्विजिह्वः शब्दोऽसौ नापि त्रिक्षणवर्तिनः ।**
**विरम्य व्यापृतिर्युक्ता नापि सा विदुषा मता ॥ ८ ॥**

तत्र हेतु **न हीति**। **द्विजिह्वः**= व्याहतभाषी । अन्यत्र सर्प । 'द्विजिह्वौ सर्पसूचकौ' इति अमर । द्वितीये दोषमाह **विरम्य व्यापृतिरिति**। पूर्व परिच्छेदमर्थ उक्त्वा पश्चाद्भेदरूपार्थकथनस्य विलम्बितत्वेन आशुतरविनाशिपदस्य तदयोगादिति भाव । यत स्थित्वा स्थित्वा व्यापार चेतनधर्म स चाचेतने शब्दे न सभवतीति भाव । यत्र 'अन्नात्पुरुष' 'स वा एष पुरुषोऽन्नरसमय' इत्यत्र अन्यशब्दस्य प्रसिद्धान्न-परमात्मरूपार्थद्वयाश्रयण तत्र नान्नशब्द सकृत्पठित । नाप्येकया वृत्त्या । परमात्मनि परममुख्यवृत्ते अन्यत्र हीनमुख्यवृत्तेराश्रितत्वात् । रसशब्देन विशेषणरूपज्ञापकसद्भावात् । 'अद्यतेऽत्ति च भूतानि' इति श्रुत्यैवार्थान्तरस्य निर्वचनात् । प्रकृते तु नैवम् । त्वया तस्यैव पदस्य विशेषण

विनाऽपि, एकयैव वृत्त्या, अन्तरेणैव निर्वचनाभिधानादिज्ञापक, परस्परव्याहतस्यार्थद्वयस्य, युगपदेव स्वीकारात् । तदेतदाह **नापीति** ॥ ८ ॥

**देशकालान्तशून्यत्वं देशकाले च वर्तनम् ।**
**यथा वस्त्वन्तशून्यत्वं तथा वस्तुषु वर्तनम् ।**
**भवेत्परं द्विधा नैकपंक्तौ यत्परिवेषणम् ॥ ९ ॥**

'मय्यनन्तगुणेऽनन्ते' इति श्रुत्याद्यनुसारेण अत्र गुणतोऽनन्तत्वमेव लक्षणमभिप्रेतम् । तुष्यत्विति न्यायेन परोक्त वस्तुनोऽनन्तत्वमर्थमभ्युपगम्यापि तदन्तशून्यत्वमित्यस्य, तत्र सर्वत्र वर्तन, तदशेषाधारत्व वा लोकानुगुण अर्थद्वय उपपाद्य तेनैव सिद्धान्ताभिप्रेतमर्थ साधयति द्वाभ्या **देशेत्यादिना** ॥ देशकालौ देशत कालतश्चान्तशून्यावित्युक्त्या तयो सर्वदेशकालयोर्वर्तनरूप व्याप्तत्वमेव लभ्यते । एव परमात्मन वस्तुतोऽन्तशून्यत्वोक्त्याऽपि सर्ववस्तुषु वर्तनरूप सर्ववस्तुव्याप्तत्वमेव श्रुत्यविरुद्धो लोकानुरोधी च मनोंहरोऽर्थोऽस्तु । किं भेदराहित्यरूपदुरर्थोक्तिदुर्व्यसनेन । एव सति प्रायपाठविरोधोऽपि परिहृत स्यादित्याह **द्विधेति** ।

**बहुवस्त्वाश्रयत्वं वा भवेल्लोकनिदर्शनात् ।**
**रत्नतोऽनन्त इत्याहुर्यतो रत्नाकरं जनाः ।**
**तथा गुणानन्तता च स्याद्गुणैः पूर्णता हरेः ॥ १० ॥**

एव तदाधारत्वरूप अर्थान्तरमपि लोकनिदर्शनेन सङ्गमयति **बह्विति** । रत्नतोऽनन्त इत्युक्ते रत्नाकर समुद्रो बहुरत्नाश्रय इति यथा तथा वस्तुन अनन्त इत्युक्ते सकलवस्त्वाश्रयत्वमेव लभ्यते । इद चार्थद्वय "यो मा पश्यति सर्वत्र सर्वं च मयि पश्यति" इति गीताऽनुरोधीति ध्येयम् । अभ्युपगमेनोक्तार्थद्वयस्य सिद्धान्तार्थोक्त्युपयोगमाह **तथेति** । **गुणैः पूर्णतेति** । गुणकर्मकप्रवेशनकर्तृता गुणकर्तृकप्रवेशकर्मता अर्थद्वयानुसारेण ग्राह्या । तदुक्त सुधायाम् "असावोङ्कारस्तस्य जिज्ञास्यस्य गुणैरानन्दाद्यनन्तगुणैर्गुणान्वोतता वक्ति" इति ॥१० ॥

अन्तो नेत्येव शब्दार्थस्स तु योग्यो विमृ(ग्य) श्यते ।
देशतः कालतश्चान्तो नाम देशाच्च कालतः ॥ ११ ॥

परिच्छेदस्स चेयत्ता सा च क्वचिदसङ्गतिः ।
क्वचिच्च सङ्गतिस्ताभ्यां शून्यता सर्वसङ्गमः ॥ १२ ॥

तत्सर्वदेशकालेषु संबन्धोऽनन्तता यथा ।
समस्तगुणसंबन्धो गुणानन्त्यं तथा विभोः ॥ १३ ॥

अतो न पंक्तिभेदोऽस्ति पंक्तिपावनपंक्तिषु ।
अंतस्य तन्निषेधस्य सर्वत्रैकविधत्वतः ॥ १४ ॥

संबन्धश्च यथायोगं संयोगो द्रव्ययोस्तयोः ।
गुणानां गुणिनश्चैवं गुणगुण्यात्मता परम् ॥ १५ ॥

अस्तु वा ब्रह्मणो देशकालयोराधेयत्व गुणान्प्रति त्वाधारत्वमिति कथञ्चित्सबन्धमात्रे विशेष । तथाऽपि योग्यतावशादङ्गीकार्य एष तृतीय गुण एव । तथा सत्येव देशकालगुणव्याप्तिरूपेषु त्रिषु स्थलेष्वपि, अनन्तशब्दस्य परिच्छेदरूपेयत्ताया एकस्यैवार्थस्य, नञा निषेधरूपार्थलाभेन प्रायपाठानुगुण्यम् । देशकालाभ्या भगवत सबन्ध सयोग, गुणैस्तु तादात्म्य इति सबन्धे विशेषस्तु यथायोग्यो गुण एव न दोषावह इत्याह पञ्चभि॰ ॥ **अतो नेत्यादिना** ॥ ११—१५ ॥

शिशोर्वृद्धस्य यूनश्च यथायोग्यं हि भोजनम् ।
भिन्नभिन्नान्नदाने हि पंक्तिभेदं विदुर्बुधाः ॥ १६ ॥

एवरूपस्य विशेषस्य गुणत्वे लोकानुभव निदर्शयति **शिशोरिति** । **भिन्नेति** । योग्यतामनतिक्रम्येत्यादि॰ ॥ १६ ॥

एकान्नस्य यथायोगं दाने को नेति शंसति ।
अतो वस्तुपरत्वोक्तिर्वस्तुतत्वाज्ञतावशात् ॥ १७ ॥

**वस्तुपरत्वोक्तिः=** वस्तुन प्रपञ्चस्य **परत्वोक्तिः** परेण ब्रह्मणा भेदनिषेधेन तादात्म्यार्थकथनम्। **वस्तुतत्वाज्ञतावशात्=** वस्तुन ब्रह्मण तत्त्व स्वातन्त्र्यादिकम्, तथा वस्तुन प्रपञ्चस्य तत्त्व नित्यातादृशत्व तदुभयाज्ञानवशात् ॥ ॥१७॥

**किं चान्तशून्यतैवात्र शक्योर्थो योग्यतावशात्।**
**आनेयमन्यद्योग्यं च नैतदुक्तप्रकारतः ॥ १८ ॥**

**अन्यत्** भेदराहित्यवचनम्। योग्य नेति सबन्ध । प्रमाणविरोधात्, परेण जडाभेदानङ्गीकारात् विशिष्टयोर्जीवपरमात्मनोरभेदानुपगमात्, लक्षणया चिन्मात्रैक्यपरत्वोक्तेश्च पराभिप्रेतनिरङ्कुशमहत्त्वासाधकत्वाच्चेति भाव ॥ १८ ॥

**महत्त्वस्य विरोधित्वादपि नैतदिहोचितम् ॥ १९ ॥**

'ब्रह्मविदाप्नोति परम्' इति प्रतिज्ञावाक्योक्तस्य परस्य ब्रह्मण एव हि अनन्तशब्देन लक्षणोक्ति । तस्य च लक्षणवचनस्य, अपरेण प्रपञ्चेन अभेदपरत्वोक्तौ परस्यैव अपरत्वप्राप्त्या लक्ष्यलक्षणवाक्ययो व्याघात स्फुट एवेत्याह **महत्त्वस्येति** ॥ १९ ॥

**आधारभूतौ यद्देशकालावखिलवस्तुनः।**
**ताभ्यामवध्यभावस्तु तौ द्वौ सर्वौ च नः प्रभोः।**
**आधारभूतावित्यर्थे फलत्याधाररूपिणः ॥ २० ॥**

**गुणाश्चाधेयरूपास्ते तैरवध्युज्झितिर्हरिः।**
**सर्वस्य गुणराशेश्च स्वस्मिन्नाहितता नयेत् ॥ २१ ॥**

'अवध्यभावस्तु' इत्यस्य 'इत्यर्थे फलति' इत्यनेनान्वय । आधाररूपिण इत्यत्र प्रभोरित्यनुकर्ष । गुणाश्चेत्यनेन अन्वय ॥ २० ॥ २१ ॥

**यद्धर्मी स्वयमाधारो धर्मास्त्वाधेयरूपिणः ।**
**अतोन्तशब्दस्त्रिस्थान्यामप्यवध्यर्थको भवेत् ॥ २२ ॥**

देशाकालनिरूपितमाधेयत्व ब्रह्मण उक्तम् । एव तर्हि गुणनिरूपितमपि आधेयत्वमेव सबन्धस्तस्य भवेत् नोक्तरीत्या आधारत्वम् इत्यत प्रागुक्त मा विस्मार्षी इत्याह **यद्धर्मी इति** । इद चाभ्युपगम्योक्तम् । वस्तुतस्तु देशाकालौ प्रत्यपि प्रभोराधारत्वमेव 'एको दाधार भुवनानि विश्वा' 'भर्ता सन् भ्रियमाणो बिभर्ति' इति श्रुते । तदुक्त 'अक्षरमम्बरान्तधृते ' इति ॥ २२ ॥

**नार्थभेदस्ततोऽस्माक मते सुजनसंमते ।**
**वस्तुस्वभावानुगुण्यात्फलं स्वात्यम्बुकार्यवत् ॥ २३ ॥**

अभ्युपगत सबन्धे वैषम्य लोकनिदर्शनेन सङ्गमयति **स्वात्यम्ब्विति** । तदुक्त नीतिशतके 'सन्तप्तायसि सस्थितस्य पयसो नामापि न ज्ञायते । मुक्ताकारतया तदेव नलिनीपत्रस्थित राजते । स्वात्या सागरशुक्तिमध्यपतित तन्मौक्तिक जायते ॥' इति ॥ २३ ॥

**महद्गुणत्वाद्यमनन्तमाहुरिति च स्फुटम् ।**
**यतो भागवते प्रोक्तं ततोप्येतदसङ्गतम् ॥ २४ ॥**

स्वोक्त गुणानन्त्य अर्थ भागवतसमाख्यया सङ्गमयति **महदिति** । **प्रोक्तम्=** आहुरिति विद्वद्रूढिप्रदर्शनपूर्वक प्रकर्षेणोक्तम् ॥ २४ ॥

**अर्थद्वये न सन्देहस्तृतीयेऽर्थे हि संशयः ।**
**अतो विशिष्य तं व्यासो निर्णयायान्ववर्णयत् ॥ २५ ॥**

समाख्यावाक्ये गुणानन्त्यमात्र कुत कथितम्, अनन्तशब्दस्यैव अर्थद्वय देशाकालाभ्यामानन्त्य कुतो नोक्तमित्यतस्तदशे वादिविवादाभावात् देशाकालव्याप्तेरपि गुणत्वेन गुणानन्त्योक्तौ तल्लाभाच्चेत्याह **अर्थेति** ॥ २५ ॥

**सद्भावं यापयेद्यस्मात्सत्यस्तस्मात्किल प्रभुः ।**
**भावप्रधानो निर्देशोस्त्यन्तर्णीतो यतश्च णिच् ॥ २६ ॥**

'सत्य ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्णोक्तानि लक्षणानि विवरीतु सृष्ट्यादि षट् प्रकरणानि प्रवृत्तानि । तत्र आनन्दमयप्रकरण अनन्तशब्दविवरणम् । आनन्दपूर्णता च न सर्वगुणपूर्णता विना घटते 'यो वै भूमा तत्सुख नाल्पे सुखमस्ति' इति श्रुते । एव च गुणपूर्णतैवानन्तशब्दार्थ इति पर्यवसितार्थसमर्थनायोत्तरप्रबन्ध । 'तत्र लक्षणेषु सत्यत्व सृष्ट्या' 'तस्माद्वा एतस्मादात्मन आकाश सम्भूत इति सृष्टिप्रकरणेन उक्तम्' इति सुधोक्तमाह **सद्भावमिति** । सच्छब्द सद्भाववाची । 'सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते' इति गीतायाम् । सद्भावो जन्म । यथोक्त गीताभाष्ये 'सद्भावशब्देन प्रजनन सूचितमि'ति । तथा च जन्मवाचिनि कर्मण्युपपदे यातेरन्तर्णीतण्यर्थादातपेऽनुपसर्गे क इति कप्रत्यये कृतेऽयमस्मयादीनि छन्दसि इत्युपपदस्य भसज्ञाया सत्यमिति भवति' इति । **भावप्रधानः=** पदार्थताऽवच्छेदकमुख्यविशेष्यकबोधजनक ॥ २६ ॥

**सत्त्वं सृष्टिस्संहृतिश्च जीवनं च विदां मते ।**
**कार्यात्मना विशरणं कारणस्य जनिर्मता ॥ २७ ॥**

**सृद्धातोर्विशरणं चार्थ इत्यपि संमतम् ।**
**यतः प्रागसतस्सत्त्वमुत्पत्तिरिति चोच्यते ॥ २८ ॥**

**अवसादनमप्युक्तं तद्धात्वर्थतया यतः ।**
**ततस्सत्त्वं संहृतिश्च भवेच्छब्दविदां मते ॥ २९ ॥**

**विद्यमानत्वमप्याहुस्सत्त्वं जीवनमेव तत् ।**
**इदं चाद्यैः प्रकरणैस्त्रिभिर्विव्रियते किल ॥ ३० ॥**

सत्यशब्द सृष्टिसहर्तृजीवनकर्तृत्वरूपार्थत्रयपरतया निर्वक्ति चतुर्भि श्लोकैः **सत्यमित्यादिना** ॥ सद्भाव. जन्मेत्युक्तम् । तत्कथमित्यत द्वेधा तद्दर्शयति

**कार्यात्मनेति प्रागसत इति च**। कारणात्मना सत कार्यात्मना विकार एव जन्मेत्युक्त भवति। तदनेन असदेवोत्पद्यते इत्यसत्कार्यवादिनः एव सदेवोत्पद्यते इति सत्कार्यवादिनश्च निराकृता वेदितव्या। '**विशरणं** शैथिल्यलक्षणम्। सदे क्विबन्तस्य सत्त्वमिति रूपम्। तस्य सहृतिरर्थ । एव अस्ते शत्रन्तस्य भावप्रधान सत्त्वमिति रूपम्। तस्य जीवनमर्थ । तथा च सत् सत्व जीवन विशरण वा भूताना यापयतीति सत्यमित्युक्त भवति ॥ **इदं**= सत्यशब्दोक्त सृष्टिसहारजीवनहेतुत्वरूप लक्षणत्रयम्। आद्यै ब्रह्मवल्ल्या इत्यादि । **प्रकरणैः** सृष्टिप्रकरण अन्नमयप्रकरण प्राणमयप्रकरण चेत्येतै क्रमेण त्रिभि ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

**यत आत्मन आकाश इति भूतजनिं परात्।**
**आह सृष्टिर्महासृष्टिस्तेन नाल्पेति शंसति ॥ ३१ ॥**

**ब्रह्मणो लक्षणं नोचेत्कुम्भकारेऽपि गच्छति।**
**अबाध्यत्वमपीतो न तत्सृष्टिकथयापि न ॥ ३२ ॥**

'सद्भाव यापयेद्यस्मादि'त्यादिना भाष्यकृता स्वेतरसर्वस्रष्टृत्व लक्षण सत्यशब्दार्थतयोक्तम्। तद्विवृणोति **यत इत्यादिना सार्धश्लोकेन**। अत्र स्रष्टत्व इत्येवोक्तौ कुलालादौ अतिव्याप्ति । अत **सर्वेति** तदाह **महासृष्टिरिति**। आदिकालीनेत्यर्थ । तत्र ज्ञापकमाह **यत इत्यादिना**। तावत्युक्तेऽसभव अत **स्वेतरेति**। अत्र विवक्षितसृष्टे पराधीनविशेषावाप्तिरूपत्वात्। तस्याश्च आत्मशब्दवाच्ये पूर्णे ब्रह्मणि असभवात्। तदेतदुक्त श्रुतौ **आत्मन इति**। पराभिमत सत्यशब्दार्थ निराह **अबाध्यत्वमिति**। **इतः** प्रपञ्चमात्रे अतिव्याप्ते । हेत्वन्तर **सृष्टिकथयेति** न हि अबाध्यत्वोक्ते सृष्टिकथया सङ्गतिरस्ति इति भाव ॥ ॥३१ ॥३२ ॥

**वाग्विश्वं सत्यमित्याद्या यदबाध्यं जगज्जगौ।**
**ततोऽपि न यतोऽन्यत्र गतं प्राहुरलक्षणम्।**
**सूत्रे जन्मादिहेतुत्वलक्षणोक्तेश्च नेतरत् ॥ ३३ ॥**

उक्ता प्रपञ्चेऽतिव्याप्ति प्रमाणयति **वागिति**। सूत्रविरोध च परोक्तार्थस्याह **सूत्रेणेति** ॥ ३३ ॥

**अतः श्रुतिमतं वेत्ति प्राणोऽसौ भारतीपतिः ।**
**अन्यस्तामन्यथीकुर्वच्छून्ये तमसि पात्यते ॥ ३४ ॥**

**अतस्त्वेतरसर्वस्य स्रष्टृता सत्यता भवेत् ॥ ३५ ॥**

भारतीपतिरिति हेतुगर्भ विशेषणम्। भारत्या श्रुत्यभिमानित्वादिति हृदयम् ॥ ३४ ॥ ३५ ॥

**पुनरन्नमयत्वोक्त्या महासंहर्तृतोच्यते ।**
**अद्यतेत्ति च भूतानीत्युक्तेस्संहर्तृताऽन्नता ॥ ३६ ॥**

सर्वजगत्सहर्तृत्व लक्षण अन्यशब्दार्थ उक्त। तत्र सर्वजगदित्यनुक्तौ भेकसहर्तरि सर्पे गतम्। सर्वजगदिति विशेषणे श्रुति प्रमाणयति **भूतानीति**। अत्तीत्यनेन सहर्तृत्व च प्रमापित ज्ञेयम्। अत्र सर्वेति विशेषण यथायोग्यमनुसन्धेयम्। यथोक्त तत्त्वसख्यानटीकाया 'तत्र स्थितिनियमौ सर्वत्र। सृष्टिसहृती नित्यानित्यस्यानित्यस्य च' इत्यादिना ॥ ३६ ॥

**प्राचुर्यार्थो मयट्प्रोक्तस्स्वयं सूत्रकृतैव हि ।**
**सूचनात्खलु तत्सूत्रमतः पंचसु तं नयेत् ॥ ३७ ॥**

सर्वेति विशेषणस्य सूत्रे ज्ञापकमाह **मयदिति**। 'उपलक्षणत्व शब्दानामानन्दमयपूर्विणामि'ति भाष्योक्तमाह **पञ्चस्विति** ॥ **सूचनादिति**। 'लघूनि सूचितार्थानि' इति सूत्रलक्षणोक्तेरिति भाव ॥ ३७ ॥

**इति लक्षणसूत्रोक्तं तृतीयं लक्षणं श्रुतिः ।**
**प्राहान्नमयतावाचा निन्द्यदेहस्तुनिर्न सा ॥ ३८ ॥**

**सूत्रेति।** जन्माद्यस्येति सूत्रेत्यर्थ । **उक्त** तद्भाष्योदाहृतस्कान्दपुराणे उक्तम् । **तृतीयमिति।** 'सृष्टिस्थितिश्च सहारो' इत्यत्र तृतीयतयोक्तमित्याशय । ननु अन्नान्पुरुष इति पूर्वत्र प्रसिद्धान्नपरिणतकोशस्यैव प्रतीते कुतोऽत्र अन्नमयशब्देन सहर्तृत्वरूपापूर्वार्थाश्रयणमित्यत तत्रैव श्रुतावुत्तरत्रोदाहृतश्लोकोक्तस्तुत्यानुगुण्या-दित्याह **प्राहेति।** अस्या श्रुते सकलप्रजास्रष्टृत्वप्राप्यत्वादिमहामहिमवर्णनपराया कथमपि 'देवसज्ञितमप्यन्ते कृमिविड्भस्मसज्ञित' इति भागवते निन्दितस्य कोशाख्यदेहस्य वर्णनपरत्वासभवादित्याह **नेति** ॥ ३८ ॥

**रौद्रव्यापारताशङ्का छेदायास्यादितः कथा ॥ ३९ ॥**

ननु श्रुत्या सृष्टिस्थितिसहारा क्रमशो वर्णनीया । अन्नमयप्रकरणेन सृष्टिसहारयो, पश्चात्प्राणमयप्रकरणेन जीवनरूपस्थितेर्वर्णनमित्येव क्रमोल्लङ्घनेन वर्णने को विशेषहेतुरित्यत वादिविवादसदसद्भावावेत्याह **रौद्रेति।** उपलक्षणम् । चतुर्मुखेत्यपि ग्राह्यम् । विष्णुर्जीवनहेतुरित्यत्र सर्वे सम्प्रतिपद्यन्त इति भाव ॥ ३९ ॥

**प्राणनं जीवन प्रोक्तं प्राचुर्यार्थे यतो मयट् ।**
**अतः प्राणमयत्वोक्त्या महापालकतोच्यते ॥ ४० ॥**

'प्राण देवा अनुप्राणन्ति मनुष्या पशवश्च ये' इति अनुव्याख्यानोक्तदिशा प्राणशब्दस्य प्रागुक्तसत्यशब्दसमानार्थकत्व दर्शयति **प्राणनमिति।** तथा च प्राणन्ति प्रवर्तन्ते जीवन्ति वा सर्वभूतान्यनेनेति निरुक्तिर्ज्ञेया ॥ ४० ॥

**सर्वसामान्यवेत्तृत्वं ज्ञानत्वमिति च श्रुतिः ।**
**मनोमयगिरा प्राह यतो धातुस्स बोधने ॥ ४१ ॥**

मनोमय प्रकरणस्य ज्ञानशब्दार्थत्व स्पष्टयति **सर्वेति।** विज्ञानमयप्रकरणस्य तच्छब्दार्थत्व तु स्पष्टमेव ॥ ४१ ॥

**यतो घटपटत्वादिसामान्यान्यपि वस्तुषु ।**
**सन्ति चित्रेष्वनन्तानि तत्तद्वेत्तापि सर्ववित् ॥ ४२ ॥**

**विशिष्य सर्ववेत्तृत्वं ज्ञानत्वमिति सा पुनः ।**
**विज्ञानमयतोक्त्या वीत्युपसर्गयुताऽब्रवीत् ॥ ४३ ॥**

**प्रागुक्तज्ञानतामात्रं सर्वज्ञत्वेन यत्ततः ।**
**न चेद्घटादिवृत्तेश्च ज्ञानत्वात्स्यादलक्षणम् ॥ ४४ ॥**

'ननु अवबोधने' इति धातोर्भावे असुन्प्रत्यये विहिते मन इति ज्ञानमिति चैकार्थता भवति । अत्र ज्ञान ब्रह्मेति लक्षणेऽभिहिते सकलचेतनसाधारण्या-दलक्षणमेतदित्याशङ्काया नावबोधमात्र ज्ञानमिह विवक्षितम् । किन्तु सकलपदार्थसामान्यविशेषविषयकमित्यतो नातिव्याप्तिरि'ति सुधोक्तिमनुरुध्याह **यत** इत्यादिभिस्त्रिभिः । ज्ञानशब्दस्य वेत्तृत्वार्थत्वाद्वृत्तिज्ञानेऽतिव्याप्तिशङ्का-ऽनवकाश इत्याह **न चेदिति** ॥ ४२ ॥ ४३ ॥ ४४ ॥

**सृष्ट्युक्त्याप्राप्तसार्वज्ञलक्षणस्येदमीरणम् ॥ ४५ ॥**

जन्माद्यष्टके विज्ञानस्यापरिगणिततत्वशङ्का निराह **सृष्टीति** । तदुक्त कर्मनिर्णये 'बुद्धिपूर्वक सर्वकर्तृत्वात्सर्वज्ञत्वादयो गुणा उक्ता' इति । तट्टीकाया च 'कर्तृत्व च कार्यकारकक्रियाफलाभिज्ञानतदिच्छाप्रयत्नपूर्वकः स्पन्द । तत सर्वकर्तेत्युक्ते सर्वज्ञ ' सत्यकाम सत्यसङ्कल्प समस्तशक्तिसमन्वित एवोक्तो भवतीति कथ नानेन ब्रह्मण सगुणत्वसिद्धिरि'ति ॥ ४५ ॥

**आनन्दमयवाचाऽन्ते स्वोक्तानन्तत्वमेव सा ।**
**जगौ किल तदानन्त्यमानन्दादिगुणैर्न किम् ॥ ४६ ॥**

मन्त्रवर्णे अन्ते प्रोक्तस्यानन्तत्वलक्षणस्यैव विवरण आनन्दमयप्रकरणे-नान्तिमेनेति सुस्पष्टमेवेत्याह **किलेति** । अतोऽनन्तशब्दस्य गुणत अपरिच्छेद एवार्थ न त्वेव परोक्त वस्त्वभिन्नत्वरूप प्रकरणविरोधादित्याह **तदिति** ॥ ४६ ॥

**य(द्या)दानन्दो भवेन्नासौ कथं सृज्यं सृजेदिति ।**
**श्रुत्युक्तं सा जगौ सृष्ट्यै पूर्णानन्दाख्यलक्षणम् ॥ ४७ ॥**

'महानन्दत्व एवास्य हेतु कोऽन्यादिति स्फुटम्' इति अनुव्याख्यानोक्त आह **यदीति।** **श्रुत्युक्तं**= श्रुत्या सोपपत्तिक समर्थितम्। विष्णोरनानन्दत्वे जगतो निश्चेष्टकत्वप्रसङ्गनेनेति भाव ॥ ४७ ॥

**सृष्ट्याद्यष्टकमध्यस्थज्ञानमोक्षप्रदत्वयोः ।**
**उपयुक्ततया चैतद् द्वयं सूत्रकृतो मतम् ॥ ४८ ॥**

**एतद् द्वयमिति** ज्ञानप्रदत्वोपयुक्ततया मनोमयविज्ञानमयप्रकरणाभ्या सर्वज्ञत्व मोक्षप्रदत्वोपयोगितया आनन्दमयप्रकरणेव आनन्दपरिपूर्णत्व इत्येव लक्षणद्वय-मिति योज्यम् ॥ ४८ ॥

**व्याप्तत्वसर्वशक्तत्वदयालुत्वादिकान्गुणान् ।**
**सृष्ट्यर्थान्संग्रहीतुं सा प्रागनन्तगुणान् जगौ ॥ ४९ ॥**

'कर्तृत्वात्सगुण' इति प्रागुक्तदिशा सृष्टिरनन्तगुणानाक्षिपतीत्याह **व्याप्तत्वेति** ॥ ४९ ॥

**तत्तत्पूर्त्यै तत्र चैकं गुणं पूर्णमवर्णयत् ॥ ५० ॥**

अनन्तशब्दस्य सकलगुणपरिपूर्णत्वार्थकत्वे तत्प्रपञ्चनपरेणानन्दमय-प्रकरणेन इतरगुणप्रहाणेन आनन्दगुणमात्रस्य पूर्णता कुतोऽभ्यधायीत्यत उपलक्षणतयेत्यवेहीत्याह **तत्तदिति।** कण्ठतस्तद्ग्रहण च सकलगुणमूर्धन्यत्वात्, 'यो वै भूमा तत्सुख नाल्पे सुखमस्ति' इति श्रुत्या तेन सर्वगुणपूर्तिलक्षणस्य भूमत्वस्य स्वत एव लाभाच्चेति भाव ॥ ५० ॥

**जन्मादिकर्तृतोक्त्या च सूत्राभिप्रेतलक्षणम् ।**
**गुणानन्त्यं किल हरेस्ततोऽप्यानन्त्यमाहसा ॥ ५१ ॥**

**ततोऽपि।** जन्मादिहेतुत्वलक्षणस्य ब्रह्मशब्दोक्तप्रधानभूतगुणपूर्णत्वलक्षण-सम्भावकत्वादपि ॥ ५१ ॥

**यद्यप्येकैकसुगुणसंपूर्तिरपि लक्षणम् ।**
**जीवात्यन्तविभेदाय तथापि बहुकीर्तनम् ॥ ५२ ॥**

नन्वनेकलक्षणोक्तिवैयर्थ्यम् । एकैकस्य व्यभिचाराभावादित्यत आह **जीवात्यन्तविभेदायेति ।** सवादेन भेदज्ञाने दार्ढ्यसपादनायेत्यर्थ । विभक्तादपीति ज्ञेयम् ॥ ५२ ॥

**पृथक्पृथग्लक्षणतां वक्तुं वाऽनन्तविस्तृतेः ।**
**अशक्त्या वा सर्व(सि)शुद्ध्यै**
**तत्राद्यगुणशोधनम् ॥ ५३ ॥**

एव तर्हि अतिदार्ढ्यार्थ विशिष्य प्रत्येक अनन्तलक्षणोक्ति स्यादित्यत श्रुतेस्तत्र सामर्थ्याभावादेव नैवमित्याह **पृथगिति** ॥ ५३ ॥

**गुणास्सर्वेऽपि सिद्धास्स्युरानन्दस्य प्रपञ्चने ।**
**इत्यानन्दमयं स्तौति सर्वेयं वाऽन्तिमस्तुतिः ।**
**यदियं षट्प्रकरणी गुणानेवागृणात्प्रभोः ॥ ५४ ॥**

सर्वगुणाना पूर्णानन्दाविनाभाव प्रागुक्त स्मारयति **गुणा इति ॥** प्रकारान्तरेण गशुद्ध्या अनन्तत्वलक्षणविवरणपरेण अन्तिमेन आनन्दमयप्रकरणेन सर्वगुणपूर्णतालाभमाह **सर्वेति ।** सर्वा इय इति पदच्छेद । बुद्धिसन्निहिता सृष्ट्यादि षट्प्रकरणी इत्यर्थ । **अन्तिमस्तुतिः** लक्षणेऽन्ते श्रुतस्य अनन्तत्वलक्षणस्य प्रपञ्चनरूपा । तत्कथमित्यत आह **यदिति । गुणान्** सत्यज्ञानपदोदितान् जगज्जन्मादिकर्तृत्वसर्वज्ञत्वादीन् । कतिपयगुणवर्णन तु अनन्तगुणानामपि लक्षणाय दिग्दर्शनमात्रमिति भाव ॥ ५४ ॥

**साकारत्वविदुःखत्वाप्राकृतत्वास्तितादयः ।**
**एकैकाङ्गबृहत्त्वाद्याः किं न सिद्ध्यन्ति तत्स्तुतौ ।**
**यतः प्रियशिरस्त्वाद्या अपि तस्य स्तुतौ स्तुताः ॥ ५५ ॥**

कि चात्र प्रकरणेषु न केवलमन्नमयादिशब्दनिर्वचनमात्रलब्धाना किन्तु आनुषङ्गिकतयाऽम्नाताना सर्वेषा गुणानामेव ससिद्धिरिति निदर्शनाय लेशातस्तत्प्रकार दर्शयति **साकारत्वेत्यादिना**। पुरुषविधत्वोक्त्या साकारत्व, प्रियमेव शिर इति अप्रियदु खव्यावृत्त्या विदु खत्व, 'विज्ञान यज्ञ तनुते,' 'आनन्द आत्मा' इत्यादिना ज्ञानानन्दरूपत्वोक्त्या अप्राकृतत्व, पञ्चरूपमपि ब्रह्म जीवाद्भिन्न अस्ति इति जानता, 'सन्त एन मुक्तियोग्य सुखिन विदुरि'ति पञ्चप्रकरण्या अर्थसग्राहके श्लोके फलकथनेन जीवात्यन्तभेद, पुच्छस्यापि पूर्णत्वोक्त्या स्वगतभेदवर्जितत्व, आदिपदेन 'सर्वमेव त आयुर्यन्ति' इत्यादिना मोक्षहेतुत्व इत्यादीना गुणाना स्तुतिलाभो यथायथ विभावनीय ॥ ५५ ॥

**यतस्सूत्रकृता मान्त्रवर्णिकं गीयते त्विति।**
**प्रोक्तैकवाक्यता तस्मान्मन्त्रार्थोऽन्यः कथं वद ॥ ५६ ॥**

अनन्तशब्दस्य गुणपूर्त्यर्थकत्व एव व्याख्येयस्य मन्त्रवर्णस्य व्याख्यानभूतपञ्चप्रकरण्याश्च सूत्रोक्त एकवाक्यतालाभो नान्यथेत्याह **यत इति**॥ ॥५६ ॥

**एवं श्रुत्यर्थकुशलास्सर्वत्राप्येकवाक्यताम्।**
**कुर्युस्त्वाचार्यवन्तश्चेत्तिरस्कुर्युर्न चेच्छ्रुतिम् ॥ ५७ ॥**

**आचार्यवन्तः** श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणि प्रपन्ना जयतीर्थादय। अनन्तशब्दस्य वस्त्वपरिच्छेदमर्थ प्रजल्पता वाक्यभेददोषापत्त्या श्रुतितिरस्कार स्फुट एवेत्याह **न चेदिति** ॥ ५७ ॥

**सूत्रोक्तसूचितान्येवं लक्षणानि श्रुतिस्सती।**
**प्राक्प्रस्ताव्यपुनश्चैवं विचार्योपरता किल ॥ ५८ ॥**

**सूत्रोक्तसूचितानि।** जन्मादिसूत्रे उक्तानि तत्सूचितानि च। **सती** मीमासान्यायोपकृतत्वात् प्रबला। प्रस्ताव्येत्यनेन उपक्रम, विचार्य इत्यनेन अभ्यासादीनि उपरता इत्यनेन उपसहार इति तात्पर्यलिङ्गान्युक्तानि ध्येयानि ॥५८ ॥

**प्राक्सर्वकर्तृतां पश्चात्तत्सिद्ध्यै सर्ववेत्तृताम् ।**
**सुखशक्तिकृपाद्याप्त्यै साऽन्ततोनन्ततां जगौ ॥ ५९ ॥**

**प्राक्** सत्यपदेन । **तत्सिद्ध्यै** कर्तृत्वशरीरान्तर्गतत्वेनैव कर्मनिर्णय-टीकोक्तरीत्या सिद्धामिति भाव । जगश्रेष्टकत्वाऽन्यथानुपपत्त्या तद्धेतुव्यपदेशा-दिति सूत्रोक्तन्यायेन सुखशक्त्यो, परप्रयोजनार्थ सृष्टिनिर्वाहाय कृपादे **आप्त्यै** सिद्ध्यै । **सा** मन्त्रवर्णश्रुति । अनेन लक्षणत्रयस्य निर्देशक्रमे उपपाद्योपपादकत्व निमित्तमुक्त ध्येयम् ॥ ५९ ॥

**मुखतस्सूत्रकारोक्तं प्रागुक्तं ब्रह्मलक्षणम् ।**
**पश्चात्तत्सूचिते वा द्वे लक्षणे सान्वशिक्षत ॥ ६० ॥**

निमित्तान्तरमप्याह । **मुखत इति** ॥ **प्रागुक्तम्** । सूत्रे कण्ठत उक्त जगज्जन्महेतुत्व आदौ सत्यपदेनोक्तम् । **द्वे** सर्वज्ञत्वानन्तत्वे ॥ ६० ॥

**इमां हि शास्त्रमर्यादामाचार्यस्तत्ववादिनाम् ।**
**वेद तस्मात्तदुदितं तत्त्वं नान्यदिति स्थितम् ॥ ६१ ॥**

**आचार्यः** कश्छन्दसा योगमावेद इति श्रुत्युक्त· 'क'शब्दवाच्यो भाविचतुर्मुख· ॥ ६१ ॥

**इतोऽप्यनन्तशब्दार्थो न परोदीरितो भवेत् ।**
**अनन्तमिति चैकत्र श्रुतिराह स्थलान्तरे ॥ ६२ ॥**

**आनन्दमिति तत्स्थाने प्राह तेनात्र योग्यता ।**
**गुणस्यैवास्ति तत्त्यागे दोषस्स्यादिति तर्कये ॥ ६३ ॥**

**स्थलान्तरे** शाखान्तरे । **तत्स्थाने** अनन्तपदस्थाने । प्राहेत्यनेन 'सत्य ज्ञानमानन्द' इति समाख्याया निरवकाशत्वमुक्तम् । **योग्यता** समाख्यारूप-

प्रमाणविरोधाभाव । दोषः समाख्योतलङ्घनरूप अनन्तगुणापलापदोषश्च ॥ ६२ ॥ ॥६३ ॥

**यतोऽस्त्येकपदस्यान्येष्वजहत्स्वार्थलक्षणा ।**
**आनन्दादिगुणैस्तस्मादानन्त्यं स्यादिदं प्रभोः ॥ ६४ ॥**

**श्रुत्योरेकार्थतैवं स्यादन्यथा भिन्नवाक्यता ॥ ६५ ॥**

शाखान्तरे उक्तस्य आनन्दपदस्य उपलक्षणतया अनन्तगुणपरत्वम् । अन्यथा श्रुत्यो परस्पर विरोधापत्ति । अतो युक्त वाक्ययोरन्योन्यसमाख्यात्वमित्याह **यत इत्यादिना** । अभ्युपगम्य चेदमुक्तम् । समाख्यावाक्ये आनन्दरूपैकगुणमात्रोक्तावपि परोक्तस्य वस्त्वपरिच्छेदार्थानुपपत्तिरेवेत्यपि ध्येयम् ॥ ६४ ॥ ६५ ॥

**नाल्पे सुखमिति श्रुत्या पूर्णत्वं सुखकारणम् ।**
**यदुच्यते ततो देशकालसद्गुणपूर्णता ॥ ६६ ॥**

**आनन्दत्वस्य सिद्ध्यर्थं हेतुत्वेनेह कीर्त्यते ।**
**इति वा सङ्गतिर्वाच्या समाख्यावाक्ययोस्तयोः ॥ ६७ ॥**

मास्तु लक्षणा । आनन्दप्रयोजकतयैव गुणपूर्णत्व ससिद्ध्यति । अतोऽपि समाख्यात्व श्लिष्टम् । प्रयोज्यप्रयोजकभावश्च श्रुतिसिद्ध इत्याह **नेति** । "यो वै भूमा तत्सुख नाल्पे सुखमस्ति भूमैव सुखम्" इति श्रुतिमनेनाभिप्रैति । अत्र निरुपपदेन सुखशब्देन शाखान्तरे आनन्दशब्देन च पूर्णसुखमेवोच्यते । यदनन्याधीन-पूर्णानन्दसुख स भूमा गुणत पूर्ण- इति व्यत्ययेनान्वय । भूमैव सुखमित्यत्राप्येवम् । अल्पे अपूर्णे सुख पूर्णसुख नेति व्याप्त्युपपादनम् ॥ ६६ ॥ ६७ ॥

**सौन्दर्येण समग्रेण ज्ञानेन च बलेन च ।**
**पूर्णस्य ह्याप्तकामस्य विभोर्नित्यस्य च प्रभोः॥ ६८ ॥**

**सुखमेव भवेत्पूर्णं दुःखस्यावसरोऽपि न ।**
**तत्पूर्णसौख्यसिद्ध्यर्थमानन्त्योक्तिश्च शोभते ॥ ६९ ॥**

**प्रभोः** स्वतन्त्रस्य गुणनियामकस्य । हेतुगर्भं विशेषणम् । तेनैव सर्वदा आनन्दादिसर्वगुणपूर्णत्वस्य दु खादिदोषवर्जितत्वस्य च सिद्धे । तदुक्त अनुव्याख्याने, "यदधीना गुणाश्चैव दोषा अपि हि सर्वश· । गुणास्तस्य कथ न स्यु स्युर्दोषाश्च कथ पुनः ॥" इति ॥ ६८ ॥ ६९ ॥

**अतो देशाश्च कालाश्च गुणतश्चान्तशून्यता ।**
**श्रुत्युक्तं तदनन्तत्वं नान्यत्तत्त्वमिति स्थितम् ॥ ७० ॥**

**अतः** मन्त्रवर्णस्य षट्प्रकरण्याश्चैकवाक्यतासमर्थनेन ॥ ७० ॥

**अनन्तश्रुतितश्चैव ह्यनन्तगुणता यतः ।**
**सिद्धा ततश्च नैर्गुण्यवादो मोदाय नेष्यते ॥ ७१ ॥**

'अनन्तगुणता सिद्धेत्यनेन गुणसौरभेण, नैर्गुण्यवादो मोदाय नेष्यते' इत्यनेन शुद्धिसौरभेण, च अस्य सौरभस्य सङ्गतिरुक्ता ध्येया ॥ नञः अभावो विरोधश्चार्थौ । तथा च सुखाभाव , सुखविरोधिदु खाप्तिश्च नैर्गुण्यवादस्य फले उक्ते भवत· ॥ ७१ ॥

**किञ्चोक्तरीत्या देशाश्च कालाश्च गुणतस्तथा ।**
**नान्त इत्युदिते सर्वदेशकालगुणैस्सदा ।**
**संबन्ध इति शब्दस्य शक्यार्थस्त्वेक एव च ॥ ७२ ॥**

**स च योग्यतया धर्मेऽधर्मधर्मित्वमिष्यते ।**
**संयोगो देशकालाभ्यामिति सर्वस्य संमतम् ॥ ७३ ॥**

**एवं च वस्तुतोऽप्यस्य नान्त इत्युदिते सति ।**
**सर्वैश्च वस्तुभिस्सिद्ध्येत्सदा संबन्ध एव हि ॥ ७४ ॥**

स्वमते व्याप्तित्रयोक्तिर्नान्योन्य गतार्था परमते तु नैवमिति वक्तुमुपक्रमते **किं चेत्यादिना**। तथा हि। स्वमते, देशात अनन्त इत्येवोक्तौ क्षणे, कालत अनन्त इत्येवोक्तौ परमाणौ, उभाभ्यामानन्त्योक्तौ अव्याकृताकाशादौ अतिव्याप्तिपरिहाराय गुणत आनन्त्योक्तिरर्थवती। परमते तु प्रष्टव्यम्। वस्तुत अनन्त इत्युक्ते देशात कालत इत्यत्रेव सकलवस्तुसबन्ध इत्यर्थ प्रायपाठानुरोधिन तावदेष्टव्य ॥ ७२ ॥ ॥७३ ॥ ७४ ॥

**स च कुण्डपटादौ चेत्संयोगो देशकालवत् ॥ ७५ ॥**

**तत्तद्गुणक्रियाद्यैश्चेत्केषाञ्चिद्वादिनां मते।**
**संयुक्तसमवायादिः स्यात्संबन्धोऽपरेऽपि वा ॥ ७६ ॥**

**अयं च देशव्याप्त्युक्त्या गतार्थत्वान्न सार्थकः॥ ७७ ॥**

तत्र वस्तुशब्देन कि कुण्डपटादीनि द्रव्याणि विवक्षितानि उत तद्गतगुणक्रियादीनि, आहोस्विद्भगवन्निष्ठसद्धर्मा एव। नाद्यौ इत्याह **स चेति**। स च सबन्ध द्रव्यै सयोग गुणक्रियादिभिश्च सयुक्तसमवायोऽपरो वा भवतु। स देशात व्याप्तत्वोक्त्यैव सिद्ध इति तेन पुनर्वस्तुतोऽनन्तत्वोक्तिर्गतार्थैव ॥ ७५ ॥ ७६ ॥ ॥७७ ॥

**यदि स्वनिष्ठसद्धर्मैस्संबन्धः शुभवस्तुभिः।**
**तदा स्याद्धर्मधर्मित्वं तच्चानन्त्यं गुणेन हि।**
**अतस्तन्न पृथक्प्रोचुस्तत्त्वज्ञास्तत्त्ववादिनः ॥ ७८ ॥**

न तृतीय इत्याह **तच्चेति**। तथा च घट्टकुटीप्रभातन्याय इति भाव। **तत्** वस्तुतोऽनन्तत्वम्। वस्तुतोऽनन्तत्वोक्तिस्तव सर्वथाऽनर्थजनन्येव इति निष्टङ्कितमिति प्रघट्टिकार्थ ॥ ७८ ॥

**धनैः पूर्णस्तदैव स्याद्धनं च बहुलं यदि।**
**तद्गुणैःपूर्णतावाचा गुणानां पूर्णताप्यभूत् ॥ ७९ ॥**

समस्तगुणसपूर्णमिति गीतातात्पर्यस्य टीकाया, समस्तेत्यनेनापौनरुक्त्याय 'सपूर्णमिति गुणाना प्रत्येक सपूर्णतामाह' इत्युक्तम् । तदिदानी स्मृतियुक्तिभ्या समर्थयति **धनैरित्यादिना**। मणिरत्नकनकादिषु अन्यतमस्यैव बहुत्वे धनेन पूर्ण इत्येव लोको व्यवहरति । न तु धनैरिति । धनैरित्युक्ते तु प्रत्येक मण्यादीना धनाना बहुलत्व ज्ञायते । एव गुणेन पूर्ण इत्युक्तौ यत्किञ्चिदेकतमस्यैव पूर्णता लभ्येत । तावन्मात्र मा लाभि इति गुणैरित्युच्यते । एव एकैकश अपूर्णैर्गुणै साहित्यमात्रविवक्षाया समस्तगुण इत्येव वक्तुमुचितम् । न तु समस्तगुणसपूर्ण इति । गुणै समस्त सपूर्ण इत्युक्तौ तु न केवल गुणाना समस्तत्वलक्षण आनन्त्य कि नाम प्रत्येक ज्ञानानन्दादीना अपि तथात्व लभ्यते इत्याह **गुणानामिति** ॥ ७९ ॥

**अनन्तगुण इत्युक्त्वा प्रागसंख्यान्गुणान्स्मृतिः ।**
**गुणांश्च पूर्णान्सैवाह ह्यनन्तो गुणतस्त्विति ॥ ८० ॥**

स्पष्टस्मृतिबलादप्येवमित्याह **अनन्तेति। स्मृतिः** 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' इति भागवतम् ॥ ८० ॥

**महद्गुणत्वादिति च महत्तामाह तां गुणे ।**
**महत्त्वं त्वपरिच्छित्तिरिति सर्वे विदुर्बुधाः ॥ ८१ ॥**

प्रत्येक गुणाना अपरिच्छिन्नत्वलक्षण महत्त्व स्पष्ट अभिदधत् स्मृत्यन्तर चाह **महदिति**। 'यमनन्तमाहु' इति वाक्यशेष। आहुरिति प्रयोगबाहुल्यकथनेन विद्वद्रूढिरप्यत्र प्रमाणमुक्त ध्येयम्। **महत्त्वमिति**। अपरिच्छिन्नाकाशे एव महाकाशशब्दप्रयोगादिति भाव ॥ ८१ ॥

**यथास्ति देशादानन्त्ये देशस्याप्यन्तशून्यता ।**
**तथा गुणेनानन्त्येऽपि गुणस्याप्यन्तशून्यता ॥ ८२ ॥**

प्रकृतिर्देशतोऽनन्तेत्युक्तिनिर्वाहाय देशस्यैव तावदानन्त्य उररीकरणीयम् । यथोक्त न्यायामृते अनन्तश्रुत्यर्थभङ्गे 'यथा देशाद्यपरिच्छेदाभिप्रायेण आकाशोऽनन्त इत्युक्ते देशादेराकाशतुल्यतया सत्त्वे सत्येव तदपरिच्छेदमात्र सिद्धयति' इत्यादि ।

एव गुणतोऽनन्त इति प्रयोगनिर्वाहायैव प्रत्येक गुणस्यानन्त्य स्वीकर्तव्यमिति युक्त्यन्तरमुक्तार्थे आह **यथेति** ॥ ८२ ॥

**वाच्यावश्यं न चेत्तस्य गुणतोऽनन्ततैव न ।**
**न ह्यल्पबलवान्मर्त्यो बलेनानन्त उच्यते ॥ ८३ ॥**

व्यतिरेकनिदर्शनेन उक्त न्याय द्रढयति **न हीति** ॥ ८३ ॥

**गुणसंख्यावधिर्नेति योऽनन्तगुण ईरितः ।**
**स एव गुणतोऽनन्तः प्रत्येकं गुणपूर्तितः ॥ ८४ ॥**

**इत्येव वाच्यस्स्मृत्यर्थो न चेत्स्यात्पुनरुक्तता ।**
**तत्सिद्धास्स्मृतियुक्तिभ्यां गुणाः पूर्णाः पृथक्पृथक् ॥ ८५ ॥**

'मय्यनन्तगुणे' इति स्मृतौ अनन्तगुणे इति गुणतोऽनन्तविग्रहे इति च द्विवारमनन्तगुणशब्दोऽनन्तशब्दनिर्वचनाय प्रयुक्त । अत एक गुणसख्याया निरवधित्व अपर प्रत्येक गुणपूर्ति चाभिधत्ते इति अवश्यमङ्गीकार्यम् । अन्यथा पौनरुक्त्यापत्तेरिति वक्ति **गुणेति** । फलितमाह **तदिति** ॥ ८४ ॥ ८५ ॥

**न चेत्स क्वचिदज्ञस्स्यात्कदाचिद्वाज्ञता पतेत् ।**
**तद्देशकालव्याप्तस्य धर्मव्याप्तिर्बलादपि ॥ ८६ ॥**

किं च गुणाना प्रत्येक परिच्छिन्नत्व कुत इति प्रष्टव्यम् । गुणिन एव परिच्छिन्नत्वात् उत गुणाना सयोगवदव्यावृत्तित्वात् । नाद्य· इत्याह **देशकालव्याप्तस्येति** । **बलात्** व्याप्तिबलात्, धर्मिणो यावती व्याप्ति धर्मस्यापि तावती, यथा घटगतरूपस्य, इति दर्शनादिति भाव । उपलक्षणतया ज्ञानरूपगुणस्य परिच्छिन्नत्वोक्तौ बाधकमाह **न चेदिति**। देशत परिच्छिन्नत्वोक्तौ क्वचिदिति कालत परिच्छेदोक्तौ कदाचिदिति विवेको द्रष्टव्य· ॥ ८६ ॥

**किं संयोगवदन्येऽपि गुणा रूपरसादयः ।**
**अव्याप्यवृत्तयो धर्मिव्याप्तौ व्याप्ता गुणाश्च तत् ॥ ८७ ॥**

न द्वितीय इत्याह **किमिति**। किं आक्षेपे । सयोगवदिति परमतेनोक्तम् । स्वमते तस्याप्यव्याप्यवृत्तित्वानङ्गीकारात् ॥ ८७ ॥

**सङ्कोचानौचित्यतश्च गुणतोऽनन्तता त्वियम् ।**
**बहुत्वाच्च महत्त्वाच्च गुणानामिति गम्यते ॥ ८८ ॥**

वस्तुतस्तु गुणतोऽनन्त इत्येतावन्मात्रोक्त्यैव 'मुख्यामुख्ययोर्मुख्ये सप्रत्यय इति न्यायेन गुणाना सख्ययेव देशकालाभ्यामपि निरवधिकत्व सिद्ध्यत्येव । समाख्यास्मृत्युदाहरण तु उपष्टम्भकतयैवेत्याह **सङ्कोचेति**। **अनौचित्यत्वतः**= उक्तन्यायविरोधादित्यर्थ ॥ ८८ ॥

**अपरिच्छिन्नधर्माणां तत्सत्यानां खधर्मिवत् ।**
**परिच्छिन्नत्वदज्ञानकल्पितत्वकथा वृथा ॥ ८९ ॥**

**अपरिच्छिन्नधर्माणा** यावद्द्रव्यभाविना देशकालसमव्याप्तत्वात् अभिन्नानामिति भाव । यथोक्त तत्त्वविवेके 'यावद्वस्तु न भेदवत्' इति । तट्टीकाया च 'यत्पुनर्यावद्द्रव्यभावि तत्र भेदो नास्ति । किन्त्वत्यन्ताभेद एवेति' । **तत्** तस्मात् । अपरिच्छिन्नधर्माणा परिच्छिन्नत्वकथा, सत्याना त्वदज्ञानकल्पितत्वकथा इति यथाक्रममन्वय । द्वन्द्वान्ते श्रूयमाण त्वप्रत्यय प्रत्येकमभिसबध्यते । यद्वा परिच्छिन्न यत् कल्पकत्वेनाभिमतस्य तवाज्ञान तेन कल्पितत्वकथा इति योज्यम् । सत्यस्य कल्पितत्वमेव नेति भाव । परिच्छिन्नत्वदज्ञानेति परमतेन स्वरूपकथनम् । यद्वा अज्ञानकल्पितत्व नाम तदुपादेयत्व परमतेऽभिप्रेतम् । अज्ञान च परिच्छिन्नम् । अन्यथा ब्रह्मवत्तन्निवृत्यनुपपत्त्यापातात् । न हि परिच्छिन्नस्य अज्ञानस्य अपरिच्छिन्नधर्मोपादानत्व सङ्गाघटीति । उपादानोपादेययो समानदेशता-नियमादिति दूषण द्रष्टव्यम् ॥ ८९ ॥

**अमायिको हरिस्सिद्धस्तद्धर्मा अप्यमायिकाः ।**
**अणुभ्योऽखिलजीवेभ्यो विभेदश्च विभोरभूत् ॥ ९० ॥**

अज्ञानसामान्यकल्पितत्वनिरासेन तद्विशेषमायाकल्पितशङ्का गर्भस्रावेणैव निरस्तेत्याह **अमायिक इति । विभोः** व्याप्तस्य । हेतुगर्भ विशेषणम् । तथा **विभोः** स्वतन्त्रस्य गुणपूर्णस्य । तदनेन जीवेश्वरौ धर्मिसमसत्ताकभेदवन्तौ, अणुत्वमहत्व, स्वातन्त्र्यपारतन्त्र्यादिविरुद्धधर्माधिकरणत्वात् इति प्रयोग सूचित । अणुभ्य इत्युपलक्षणम् । व्याप्तेभ्य परतन्त्रेभ्य रमाऽव्याकृताकाशप्रकृत्यादिभ्य एव मध्यमपरिमाणेभ्यो भूभूधरादिभ्यो भेदसिद्धिरपि निष्प्रत्यूहा ॥ ९० ॥

**विरूद्धधर्मध्रौव्येण भेदोऽपि ध्रुवतामगात् ।**
**अतोऽनन्तश्रुतिर्वादद्वयस्याप्युत्तरं ददौ ॥ ९१ ॥**

न च विरुद्धधर्मत्यागेनाभेदप्रत्याशा । प्रमाणसिद्धानां ध्रौव्येण त्वद्दुरभिलषिताविवक्षामात्रेण तत्त्यागायोगादेवेत्याह **विरूद्धेति ॥** यथोक्त चन्द्रिकाया निर्दोषश्रुतिसाक्षिभ्या प्रमिते ब्रह्मजीवयो । सर्वशक्त्यल्पशक्तित्वे मिथ्येति च न युज्यते ॥ इति ॥ **वादद्वयस्य** अत्यन्तभेदस्य स्थापनेन अभेदवादस्य भेदाभेदवादस्य च । यद्वा गुणानन्त्यसाधनेन नैर्गुण्यवादस्य अष्टगुणवत्त्वा-भिधायकतार्किकवादस्य इत्यादि बोध्यम् । **ददौ** । समस्तगुणसपूर्ण इति गीतातात्पर्ये नारायण विशिंषन् भाष्यकार । श्रुतिरिति कर्तृत्वोपचारस्युकरणेऽपि निरवकाशत्वरूपातिशयस्फोरणाय ॥ ९१ ॥

**तत् त्रिवर्णं पदमिदं त्रिविक्रमपदोपमम् ।**
**पराजयाय दैत्यानां जयाय च सतामभूत् ॥ ९२ ॥**

**त्रिवर्णं** त्र्यक्षरम् । अन्यत्र रक्तशुभ्रनीलाख्यवर्णत्रयोपेतम् । **इदं पदं** अनन्ताख्यम् । **पदोपमं** चरणसदृशम् । त्रिविक्रमेति 'त्रीणि पदा विचक्रमे' इति श्रुतिं सूचयति । **दैत्यानां** मायावाद्यादीना अन्यत्र बल्यादीनाम् । **पराजयाय** निग्रहाय अन्यत्र ऐश्वर्यभ्रशाय । **सतां** तत्त्ववादिना अन्यत्र इन्द्रादीनाम् । **जयाय**

सिद्धान्तस्थापनाय अन्यत्र त्रैलोक्यैश्वर्यलक्षणोत्कर्षसिद्धये। तदुक्त श्रुतौ 'वसु स्पार्हमुत जेत्रोत दाता' इति। अनेन भेदसौरभोपक्षेपोऽपि कृतो ज्ञेय ॥ ९२ ॥

**सर्वोपनिषदामर्थं निर्णेतुं बादरायणः।**
**निर्ममे ब्रह्मसूत्राणि सूचनात्सूत्रमुच्यते ॥ ९३ ॥**

अत्र मायी प्रत्यवतिष्ठते। अनन्तशब्दस्य न गुणपूर्णत्वमर्थ। न चानन्दमयशब्दसमाख्यया तत्सिद्धि। स्यादेव यदि स शब्द आनन्दप्राचुर्यमभिचक्षीत। न चैवम्।तस्य कोशवाचित्वादेव। सूत्रे तत्पदस्य ब्रह्मणि समन्वयोक्तिरप्ययुक्ता। तत्प्रकरणस्थे श्लोके ब्रह्मण आनन्दमयपुच्छत्वेन 'ब्रह्म पुच्छ प्रतिष्ठा' इत्याम्नानात्। तदेवावयवोऽवयवी चेत्यसामञ्जस्यप्रसङ्गात्। श्रुतिसूत्रयोश्च श्रुतेरेव प्राधान्येन तद्विरोधे 'गुणे त्वन्यायकल्पने'ति न्यायेन सूत्राणा कथञ्चिद्योजनीयत्वात्। अत आनन्दमयस्याब्रह्मत्वेन न तत्समाख्यया अनन्तशब्दस्य गुणपूर्णत्वार्थकत्व किन्तु मदुक्तरीत्या वस्त्वपरिच्छेदात्मकत्वमेवेति। तदेतदपाकर्तु यत् श्रुते सूत्रापेक्षया प्राधान्यमित्युक्त तत् तावत् प्रमाणविरोधादेव दूषयति सर्वेत्यादिभि अन्त्रगादित्यन्तै सप्तभि श्लोकै। **निर्णेतुमिति।** 'पुनस्तस्यार्थवित्तये। चकार ब्रह्मसूत्राणि येषा सूत्रत्वमञ्जसा' इति 'शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णय' इति च स्मृतेरित्याशय। ननु कतिपयै सूत्रै कथमनन्तवेदार्थनिर्णय इत्यत उक्त **सूचनादिति।** विश्वतोमुखत्वादल्पाक्षरत्वाच्चेत्यर्थ ॥ ९३ ॥

**अतस्तत्सूचितं ग्राह्यं किं पुनस्सकृदीरितम्।**
**तदभ्यस्तं समस्तं तु चूडारत्नायते विदाम् ॥ ९४ ॥**

**अतः** सूचितस्यापि सूत्रार्थत्वात्। **तदभ्यस्तं** सप्तभि सूत्रै समर्थितम् ॥ ॥९४ ॥

**निर्णायकानुसारेण निर्णेयस्य गतिं विदुः।**
**अध्वनीनस्य स ह्यध्वा यो दीपेन प्रदर्शितः ॥ ९५ ॥**

निर्णयापेक्षया निर्णायकस्य प्राबल्यमिति न्याय विद्वत्समत्या दृष्टान्तोक्त्या च द्रढयति **निर्णायकेति**। अथ्वा निर्णेय, दीप निर्णायक। दीपोऽपि सूत्रवत्सशयादिनिरासक इति युक्तं तस्योपमानत्वम्। सशयादिनिरासेन अनुग्राहिकाया इतिकर्तव्यताया. करणापेक्षयाऽपि प्राबल्य प्रदानसूत्रे गुरुप्रसादस्य शिष्यप्रयत्नापेक्षया बलवत्त्वव्युत्पादनेन निर्णीतमित्याह **हीति** ॥ ९५ ॥

**चोरः प्रदीपनाशं च कामयेत्कामुकोऽपि वा।**
**राज्या राजगृहं रात्रौ यान्त्या सोर्थ्यः पदे पदे ॥ ९६ ॥**

**चोरः** मायी। **प्रदीपनाथं** सूत्रार्थापलापम्। यदुक्तमभियुक्तै 'अचूचुरद्वेदसमूहवाह ततो महातस्करमेनमाहुरि'ति। **कामुकः** गुणपूर्णत्वापलापेन ब्रह्मात्मैक्यकामुक। कीचकवदयोग्यार्थदुरभिलाषी। **राज्या** श्रुत्या। राजगृह विष्णो सर्वोत्कर्षम्। **यान्त्या** प्रतिपादयन्त्या। **रात्रौ** दुर्भाष्यसन्तमससन्ततौ। **सः** सूत्राख्यानुग्राहक। **पदे पदे** स्वघटकानन्तवैदिकपदाना समन्वयसिद्ध्यर्थम्। तदुक्त सुधाया 'ब्रह्ममीमासाशास्त्रानुपकृता हि वेदादयो विष्णोरवाचकास्तदुपकृताश्च तद्वाचका भवन्तीति' ॥ ९६ ॥

**अतस्सूत्रं तिरस्कृत्य यः श्रुत्यर्थमतत्ववित्।**
**वक्ति स श्रुतिसुन्दर्याः कण्ठात्सूत्रं जिहीर्षति ॥ ९७ ॥**

**अतः** सूत्राणामेव अनुग्राहकत्वेन प्राधान्यात् **सूत्रं** गुणपूर्णत्ववर्णनपर आनन्दमयाधिकरण **तिरस्कृत्य** कोशपरतया अन्यथा योजयित्वा, **अतत्ववित्** विपरीतज्ञानी, **सः** मायी कण्ठात्सूत्र महातात्पर्यविषयीभूतम्। विष्णोर्गुणोत्कर्षरूप-मर्थं **जिहीर्षति** अपलपितुमीहते ॥ ९७ ॥

**उपकर्तर्यपकृतिः कृतघ्नस्यैव शोभते।**
**धर्मवक्त्री कथं जह्यात्सूत्रं स्वार्थकृते कृतम् ॥ ९८ ॥**

**उपकर्तरि** स्वभाष्यमूलभूतसूत्रकारे । **अपकृतिः** तद्विरुद्धभाषित्व **कृतघ्नस्य** मायिन । **धर्मवक्त्री** धर्मव्यवस्थापनपरा 'न हि धर्मादिसिद्धि' स्यान्नित्यवाक्य विना क्वचिदि'त्युक्ते । **जह्यात्** तद्विरुद्धार्थ वर्णयेत् ॥ ९८ ॥

**सतीमप्यसतीं कर्तुं चकमे दशकन्धरः ।**
**सा वायुतनयादेशैस्तृप्ता तन्मार्गमन्वगात् ॥ ९९ ॥**

**सती** भगवता बादरायणेन प्रणीता मीमासाकृतिं **असती कर्तुं** असाधुनिबन्धतमसावकुण्ठितत्वेन अप्रणीतामिव कर्तु **दशकन्धरः** दशजिह्व बहुव्याहतभाषी इति यावत् मायी । चकमे इत्यनेन तस्य दुष्कामनामात्र तु तत्र, न पुनरर्थसिद्धिरित्याह **सेति** । वायुतनयस्य मध्वस्य उपदेशै भाष्यवचनै । **तन्मार्गं** तत्प्रदर्शित भगवदवयवावयविनो अत्यन्ताभेदरूपमर्थ **अन्वगात्** सज्जनान् समशिक्षयन् । अन्यत्र दशकन्धर रावण । **वायुतनयः** रामवचोनय हनूमान् तस्य **आदेशैः** रामसन्देशरूपवचोभि ॥ ९९ ॥

**ब्रह्मशब्दबलात्पुच्छमेव ब्रह्मेति दुर्धियः ।**
**श्रुतिस्सूत्राध्वनाऽऽनन्दमयं ब्रह्मर्चिशंसति ॥ १०० ॥**

आनन्दमयनयस्य मायिभाष्य सूत्रविरोधितया दुर्भाष्यमिति समर्थयते **ब्रह्मेत्यादिना** । **दुर्धियः** मायिन वदन्तीति शेष· । पुच्छमेव नत्वानन्दमय अवयविन इत्येवकारार्थ । निराह **श्रुतिरिति** । **सूत्राध्वना** आनन्दमयोऽभ्यासादिति आनन्दमयस्य अवयविनोऽपि ब्रह्मत्वप्रतिपादकसूत्रानुसारेण । **ऋचि** 'असन्नेव स भवति' इत्यादिश्लोके ॥ १०० ॥

**प्राक्प्रस्ताव्यानन्दमयं श्लोके तत्रोदिते श्रुतिः ।**
**द्विरुक्तब्रह्मशब्देन कथं ब्रह्म न तं जगौ ॥ १०१ ॥**

**प्राक्** 'अन्योन्तर आत्माऽऽनन्दमय' इत्युपक्रमे । आनन्दमय अवयविनम् । **तत्र** अवयविनि विषये । **उदिते श्लोके इति** । 'तदप्येष श्लोको भवति' इत्यत्र तत् इत्यनेन तत्र उक्ते अर्थे आनन्दमयावयविविषये इति स्पष्टमुक्ते

श्लोकप्रकरणयोरेकार्थत्व सिध्यतीति भावः । **द्विः**= द्विवार 'असद्ब्रह्मेति' 'अस्ति ब्रह्मेति' इत्येवम् ॥ १०१ ॥

**श्लोकश्लोक्यो यतोऽन्यत्र सर्वत्राङ्गीकृतोऽत्र च ।**
**श्लोक्योऽङ्ग्येव यदि ब्रह्मशब्दशक्त्या-**
**ऽपकृष्यते ॥ १०२ ॥**

**तर्ह्येकस्य द्वयोश्शक्त्या स्यादङ्गिन्येव कर्षणम् ।**
**द्वयोर्हि शक्तिर्महती चतुर्भिस्सङ्गृहीतयोः ॥ १०३ ॥**

**श्लोक्यः** प्रतिपाद्य । **अन्यत्र सर्वत्र**= इतरेषु अन्नमयादिचतुर्षु प्रकरणेषु । **अङ्गीकृतः**= अङ्ग्येवेत्यत्रापि उपस्कर्तव्यम् । अत इति लभ्यते । **अत्र च** आनन्दमयश्लोकेऽपि । **अङ्गी एव** अङ्गीकर्तव्य इति शेष । प्रायपाठानुरोधात्, 'तदप्येष' इति स्पष्टोक्तेश्चेति भाव । एवमपि **यदि ब्रह्मशब्दशक्त्या** पुच्छे ब्रह्मपदप्रयोगादिति यावत् । **अपकृष्यते**= अङ्गाङ्गिनोर्भेद परिकल्प्य ब्रह्मशब्द अङ्गिन प्रच्याव्य अङ्गविषयतया योज्यते । **तर्हि** अङ्गाङ्गिनोरभिन्नयोरुभयत्र ब्रह्मपदसबन्धसभवेऽपि अन्यतरस्मिन्नेव तद्योजनीयमिति दुराग्रहे **एकस्य** पुच्छे श्रुतस्यैकब्रह्मशब्दस्य । **द्वयोः शक्त्या** अङ्गिनि पूर्वोक्तरीत्या द्विवार पठितब्रह्मशब्दसमभिव्याहारशक्त्या, अङ्गिन्येव **कर्षण**= आकृष्य योजन न्याय्यमिति शेष । तत्र युक्तिद्वय आह **द्वयोरिति** । सकृत्प्रयोगात् द्विवार प्रयोगस्य बलवत्वादिति भाव । **चतुर्भिरिति** अन्नमयादिषु चतुर्षु प्रकरणेषु अङ्गिन एव श्लोके वर्णितत्वात् अत्रापि तस्यैव प्रकारस्य अनुसर्तव्यादिति भाव ॥ १०२ ॥ ॥१०३ ॥

**दृढसूत्रनिबद्धस्य कथं चास्यापकर्षणम् ॥**
**उत्कर्षो ह्यस्मदर्थे स्यादपकर्षस्त्विहोच्यते ॥ १०४ ॥**

इतश्चैवमित्याह । **दृढेति** । आनन्दमय पक्षीकृत्य सूत्रकृता ब्रह्मशब्दो हेतुकृत । तस्य हेतो पक्षादन्यत्र तद्रीत्याऽपकर्षणे स्वरूपासिद्धो हेतु स्यादिति

आक्षिपति **कथमिति**। आनन्दमयशब्दस्य पक्षगतस्य पुच्छब्रह्मणि लक्षणेति त्वदीयभाष्य तु सूत्रविरुद्धमिति त्वयैवाभ्युपगतमिति तिरस्कारार्हमेवेति भाव । सर्वथाऽस्मदुक्त एवार्थ श्लाघ्य इत्याह **उत्कर्ष इति**। श्रेष्ठे, ऊर्ध्वभागे पठिते च अङ्गिनि आकर्षण योजनमिति हृदयम्। **अपकर्षः** निकृष्टे अधोभागे पठिते च पुच्छे योजनम्। **उच्यते** त्वयेति शेष । इद प्रतिबन्दीग्रहणमात्रम्। वस्तुतस्तु द्वयोरपि पूर्णयोरङ्गाङ्गिनोरपकर्षोत्कर्षाविव नेति बोध्यम् ॥ १०४ ॥

**सर्वोत्कृष्टा च विद्येयमुत्कर्षं सहते परम्।**
**अपकर्षेऽपि ते कोशस्यैकदेशं विशेन्न सा ॥ १०५ ॥**

**इय** आनन्दमयविद्या। **सर्वोत्कृष्टा** सर्वापेक्षितानन्दरूपगुणपूर्णत्वस्य परमात्मन प्रतिपादनपरत्वात्। केवल पूर्वोक्तनिर्वचनानुरोधेन उत्कर्षमेव सहते । त्वद्भाष्यरीत्या तु जडकोशत्वकथने विद्याया निकृष्टत्व तत्रापि तदेकदेशपुच्छत्वकथने निकृष्टतरत्व चापद्यते । न तद्युक्तिसहम्। न खलु स्वय योग्या सती विद्या आत्मनोऽयोग्यतरत्वापादक जडपुच्छप्रतिपादनपरत्व जातु समीहेतेति भाव ॥ १०५ ॥

**अतः श्रुतेस्सूत्रकृतश्चैको मार्गो निरर्गलः।**
**खलस्य सूत्रभाष्यार्थप्रवृत्तस्यापरो भवेत्।**
**निमित्तसाम्येऽप्येकत्र पक्षपाताद्दुराग्रही ॥ १०६ ॥**

**अतः** सूत्राणा श्रुत्यनुग्राहकत्वात्। **श्रुतेः** तन्मुख्याभिमानिन्या लक्ष्म्या । **सूत्रकृतः** तत्पते बादरायणस्य च **एको मार्गः** अन्योऽन्यानुकूलभाव, **निरर्गलः** विरोधासहिष्णु । **खलस्य** तयोरन्योन्य दूरीकरणदुरीहादूषितस्य रावणस्येवेति ध्वनि । **अपरः** श्रुते सूत्राद्वियोजनदुरुद्यम । तदुक्तमनुव्याख्याने 'ब्रह्मताऽवयवेऽपि स्यात्तथाऽवयविनि स्वत' इत्यादिना ॥ **निमित्तसाम्येऽपि** अवयवावयविनोः ब्रह्मशब्दप्रवृत्तिनिमित्तपूर्णत्वसाम्येऽपि ॥ १०६ ॥

**उभयोर्ब्रह्मताऽयोगादेकत्यागो यदीष्यते ।**
**सर्वस्य ब्रह्मता तर्हि केन वा घोषिता भुवि ।**
**शिष्यो ब्रह्म गुरुर्ब्रह्म सर्वं ब्रह्म जगत्किल ॥ १०७ ॥**

**मोदानन्दप्रमोदादि न ब्रह्म किल चिन्मये ।**
**ब्रह्मणस्सुखरूपत्वे सुखस्य ब्रह्मता न किम् ॥ १०८ ॥**

एकस्य अवयविनो ब्रह्मत्वत्याग । अयमाशय । भेदो मिथ्या भेदत्वादिति युक्त्या सर्वप्रमाणसिद्धभेदमात्रापलापिन मायिन अवयवावयविभेदसत्यत्वकथने हेतोर्व्यभिचार स्फुट एव इत्यपहसनीयैषा स्वव्याघातकरी प्रक्रियेति ॥ १०७ ॥ ॥१०८ ॥

**आनन्दं ब्रह्म कं ब्रह्मेत्यादि वेदो न किं श्रुतः॥ १०९ ॥**

आनन्दमिति श्रुतौ आनन्दस्य पूर्णत्वमुक्त्वा तस्यैव ब्रह्मत्वोक्तेश्चानन्दमयस्य ब्रह्मत्व सिद्धमित्याह **आनन्दमिति** ॥ १०९ ॥

**विरुद्धजीवब्रह्मैक्ये यस्याशा भूयसी तव ।**
**अङ्गाङ्गिनोः कुतो नैक्यमेकजातीययोर्वद ॥ ११० ॥**

कि च 'एकमेवाद्वितीय ब्रह्म' इति श्रुतौ एकशब्देन स्वगतो भेदो निषिध्यते इति त्वयैव 'वृक्षस्य स्वगतो भेद पत्रपुष्पफलादिभि ' इत्यादिना व्याख्यातत्वेन अत्र पुनरङ्गाङ्गिनोर्भेदकल्पन स्वव्याहतमित्याह **अङ्गेति** ॥ ११० ॥

**केशस्य ब्रह्मता दृष्टा केशवस्यापि किं न सा ॥ १११ ॥**

**केशस्येति** ॥ यथोक्तमनुव्याख्याने, "ब्रह्मताऽवयवेऽपि स्यात्तथाऽवयविनि स्वत । यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताऽखिला ॥ दर्शिता चैव पार्थाय निस्सीमा शक्तयोऽस्य हि ।" इति । **केशस्य** कृष्णस्य । 'परब्रह्म परधाम पवित्र परम भवान्' इति गीतोक्ते । 'सर्वमेतदृत मन्ये यन्मा वदसि **केशव**' इति च ॥ १११ ॥

**पुच्छस्य ब्रह्मतायां तु मध्यस्याब्रह्मता कथम् ।**
**मृत्पुच्छं मृण्मयस्योक्ष्ण इत्यज्ञाभाणकं स्मर ।। ११२ ।।**

**मृदिति ।।** दृष्टान्ते अवयवावयविनोर्भेदाभेदसद्भावेऽपि अभेदमात्रमुपादाय दृष्टान्तोक्तिरिति मन्तव्यम् ।। ११२ ।।

**किं च त्यजसि चेदेकं पूर्वं त्यज भजापरम् ।**
**साक्षात्सूत्रविरुद्धार्थे मतिरासीत्कथं तव ।**
**उत्सूत्रभाष्यं दुर्भाष्यं लक्षणज्ञान्विचारय ।। ११३ ।।**

उपसहारस्योपक्रमापेक्षया प्राबल्यपर्यालोचनयाऽपि आनन्दमयस्यैव ब्रह्मत्व सिध्यति न तु त्वद्रीत्या पुच्छस्येत्याह **किं चेति । पूर्वं** प्रकरणे पूर्वप्रतिपादित पुच्छस्य ब्रह्मत्वम् । **अपरं** उपसहारश्लोके ब्रह्मशब्दाभ्यासेन समर्थित आनन्दमयस्य ब्रह्मत्वम् । एव सति सूत्रविरोधोऽपि तव परिहृत स्यदिति वक्ति **साक्षादिति ।। मतिः** दुर्मनस्त्वम् । कथमिति मृदूक्ति- । वस्तुतस्तु 'तस्मिन्दुर्मनसि तदेव शोभन स्यात्' इत्यभियुक्तवचनेन तव तामसस्वरूपानुरूपैव दुर्मतिरिति हृदयम् । **उत्सूत्रेति** । तदुक्त 'स्वसूत्रजातस्य विरुद्धभाषी' तद्भाष्यकारोऽहमिति ब्रुवन्य' इति वर्णयत **लक्षणज्ञानान्** सुमध्वविजयकृत इति भाव ।। ११३ ।।

**क्रीडतेऽनन्तरूपैर्यस्तांश्चैकीकुरुते प्रभुः ।**
**तदा मूलं न किं ब्रह्म तानि रूपाणि वा न किम् ।। ११४ ।।**

**क्रीडते** 'अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तम ' इति भाष्योक्ते । **एकीकुरुते** 'पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' इति श्रुते ।। ११४ ।।

**पादौ ब्रह्म करौ ब्रह्म मध्यं ब्रह्म शिरो हरेः ।**
**ब्रह्मैवेदं सर्वमिति श्रुत्या ह्येषोऽर्थ ईरितः ।। ११५ ।।**

'सर्वं खल्विद ब्रह्म' इति श्रुतिं प्रकृतानुरूपार्थे प्रमाणयति **पादाविति** ।। ।।११५ ।।

**आब्रह्माण्डं हि पादोऽस्य रोम्णि ब्रह्माण्डराशयः ।**
**शिशोर्मुखे जगत्सर्वं किं न पूर्णं परात्मनः ॥ ११६ ॥**

ज्ञानिना प्रत्यक्षाच्च पादरोममुखाद्यवयवाना प्रत्येक पूर्णतामाह ॥ **आब्रह्माण्डमिति ।** पाद इति त्रिविक्रमावतारदर्शिना बल्यादीना, रोम्णीति वराहरूपदर्शनश्चतुर्मुखस्य, शिशोरिति च यशोदाया प्रत्यक्षाणि क्रमेणोक्तार्थे प्रमाणान्यनुसन्धेयानि ॥ ११६ ॥

**आनन्दमयमध्यस्यानन्दो ब्रह्मेति किं न सा ।**
**सहेतुकं ब्रह्मभावमाह संशयनुत्तये ॥ ११७ ॥**

अन्तरङ्गज्ञापकम् निरवकाशमाह **आनन्दमयेति ॥** भृगुवल्ल्या खलु 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति आनन्दस्य जगत्सृष्ट्यादि-लक्षणहेतुकथनेन ब्रह्मभाव समर्थित । स एवानन्द ब्रह्मवल्ल्या आनन्दमयस्य 'आनन्द आत्मा' इति आत्मशब्दितमध्यदेह उक्त । भृगुवल्ल्या 'तस्मा एतत् प्रोवाच' इति प्रत्येक अन्नादिरूपाणा एतच्छब्देन ब्रह्मवल्लीस्थरूपाणामेव परामर्श स्फुटमवगम्यते । तेन उभयोरपि प्रकरणयोरेकवाक्यतया एकस्थानत्वमवसीयते । तेन तत्रोक्त आनन्द; अत्रोक्त आनन्दमयश्चैक एवेति ससिध्यति । तथा च आनन्दमयस्यैव आनन्दमयो मध्यदेह इति अवयवावयविनोरैक्य यदा सिद्धम् तदा समानन्यायेन पादभूतब्रह्मण आनन्दमयत्वे सशाय एव नास्कन्दतीत्याह **सहेतुकमिति ॥** ११७ ॥

**अङ्गस्य पूर्णतायां हि किं वाच्याऽङ्गिनि पूर्णता ।**
**पदस्थौल्याददतिस्थौल्यं किं नास्तीभकलेवरे ॥ ११८ ॥**

प्रौढिवादेन आनन्दमयस्य परिपूर्णताया परप्रक्रिययैव सिद्धा युक्तिमाह **अङ्गस्येति ।** आनन्दमयः अवयवी, पूर्ण; पूर्णावयवत्त्वात् यदवयव यथाभूत तदवयव्यपि तथाभूत यथा स्थूलपादोपेत गजकलेवरोऽपि स्थूल इति प्रयोगोऽवगन्तव्यः । अत्र दृष्टान्तेऽवयवावयविनोर्भेदाभेदौ । दार्ष्टान्तिके तु

अत्यन्ताभेद । तेन दृष्टान्ते अवयविनोऽवयवापेक्षयाऽतिशयस्थौल्यरूपातिशयवत्त्वेऽपि, दार्ष्टान्तिके ब्रह्मणि उभयोरपि एकविधमेव निरतिशयम् पूर्णत्वमिति विशेषोऽवगन्तव्य । आनन्दमयस्य पूर्णतासिद्धिस्तु निष्प्रत्यूहा । तच्च परस्यानिष्टमेव ॥ न चासिद्धि । पादस्य ब्रह्मत्वेन पूर्णतायाः परेणैवाङ्गीकारात् ॥ ॥११८ ॥

**पुच्छे ब्रह्मपदादन्यन्न ब्रह्म यदि ते मते ।**
**तर्ह्यनानन्दता पुच्छे मध्यस्यानन्दताश्रुतेः ॥ ११९ ॥**

**ते मते** अङ्गि अङ्गाद्भिन्न इति मते । **अन्यत्** अङ्गि अङ्गान्तरम् वा । अङ्गाङ्गिनोर्भेदे अङ्गानामपि परस्परम् भेद बलादापतति यत **तर्हि** पादमध्यदेहयोर्भेदस्यापि अङ्गीकर्तव्यताऽऽपत्त्या । **श्रुतेः** 'आनन्द आत्मा' इति श्रुते । **पुच्छस्य** मध्यदेहभिन्नस्य पादस्य । मध्यस्य आनन्दत्वे अपरिहार्यम् । तच्च तवानिष्टमिति त्वन्न्यायस्त्वामेव हन्तीति भाव ॥ ११९ ॥

**क्रयविक्रयपक्षे स्यादुभयोश्च द्विरूपता ।**
**तदुत्सूत्रस्वभावत्वादेव सूत्रविसर्जनम् ॥ १२० ॥**

यदि पुनरुक्तदोषपरिहाराय अङ्ग्योरभेदमुपगम्य पुच्छस्य आनन्दरूपताम् ब्रूया तर्हि अङ्गाङ्गिनोरप्यभेदापत्त्या आनन्दमयस्य ब्रह्मतासिद्धि । **तत्** श्रुतिसूत्रयोर्विरोधगन्धस्याभावात् । **सूत्रविसर्जनम्** सूत्रस्य निर्निमित्तम् अप्रामाण्यकल्पनम् । **उत्सूत्रस्वभावात्** न केवलम् कपटयतिवेषधारणेन किं नाम तत्पूर्वमपि गोदावरीतरणसमये अनादरेण यज्ञोपवीतप्रहाणाच्च । तदुक्तम् मणिमञ्जर्यां "नदी तर्तुमवातरत् । तस्या ओघैर्हृते ब्रह्मसूत्रे तामुत्ततार स । मा त्व त्यजसि चेत्सूत्र त्वा प्रागेवाहमत्यजमि"त्यादि ॥ १२० ॥

**यस्त्वं समन्वयाध्यायात्पादमेकं व्ययोजयः ।**
**तस्यानन्दमयात्पुच्छविच्छेदे किं भयं च तत् ॥ १२१ ॥**

उत्सूत्रस्वभावत्वम् स्थलान्तरेऽपि तत्प्रदर्शनेन द्रढयति **यस्त्वमिति**। समन्वयाध्यायान्तर्गतस्यापि चतुर्थपादस्य साख्यमतनिराकरणपरतया भाषितत्वादिति भाव । उत्सूत्र अत्र आनन्दमयस्य पादच्छेद· तत्र समन्वयाध्यायात् चतुर्थपादच्छेद इति सूत्रविरुद्धदुर्भाषणम् तव स्वभाव एव न प्रमादमूल इति भाव ॥ ॥१२१ ॥

**प्राचीनचुम्बने मन्द दन्तभङ्गस्तवोचित: ।**
**न व्यासस्य खलश्रेणीदन्तभङ्गकृतो हरे:     ॥ १२२ ॥**

प्रथमसूत्रभाष्ये एव मायिना त्वयाऽय स्वभाव विसङ्गतस्य अध्यासभाष्यस्य उद्वमनेन आविष्कृत इत्याह **प्राचीनेति**। अत्र उत्सूत्रभाषणेति वक्तव्ये चुम्बनेत्युक्ति परनारीसङ्गकृतो मायिनस्तस्यैव 'यस्ताड्यते' इत्याद्युक्ति स्मारयति । **दन्तभङ्ग:** महातमसि पातितस्य 'पक्तिर्ग्राव्णा गरिम्णा ग्लपयति हि भवद्द्वेषिणो विद्रदाद्य' इति वर्णितगुरुतरग्रावग्रामप्रहारेणेति पूरणीयम् । नियामकतया तत्रावस्थितस्य भगवतस्तु दु खसाक्षित्वेऽपि न लेपप्रसक्तिरित्याह **न व्यासस्येति**। तदुक्त 'नरकेऽपि वसन्नीशो नासौ दु खभुगीश्वर ' इति ॥ १२२ ॥

**यद्यानन्दमय: कोशस्तत्पुच्छे ब्रह्मता कथम् ।**
**साकारस्य जडस्यास्य ब्रह्मता न हि ते मते  ॥ १२३ ॥**

**अधिष्ठानतया ब्रह्मत्वोक्तावन्यत्र किं न सा ॥ १२४ ॥**

कि च पुच्छशब्दस्य पादो वाऽर्थ अधिष्ठान वा । नाद्य इत्याह **यदीति**। विरुद्धधर्मवतो सामानाधिकरण्योक्तैक्यायोगादिति भाव ॥ न द्वितीय इत्याह **अधिष्ठानतयेति**। सर्वजगदारोपाधिष्ठानस्य विशिष्य आनन्दमयकोशमात्राधिष्ठानोक्तेरयोगात् ॥ १२३ ॥ १२४ ॥

**यद्यानन्दमयो ब्रह्म पुच्छस्य ब्रह्मता कथम् ।**
**उभयोर्ब्रह्मताऽयोगे महान्किल तवाग्रह:     ॥ १२५ ॥**

अथैतद्दोषपरिजिहीर्षया आनन्दमय कोश इति पक्ष त्यक्त्वा ब्रह्मेति अस्मदुक्त पक्ष अङ्गीकुर्या तर्हि घट्टकुटीप्रभातन्याय इत्याह ॥ १२५ ॥

**अतोऽतत्वावेदिकेयं श्रुतिरासीत्तवैव हि।**
**सूत्रकल्पद्रुमच्छेदे कुठारः क्वास्ति ते वद ॥ १२६ ॥**

**अतः** अर्थद्वयेऽपि पुच्छस्य त्वन्मते ब्रह्मताऽयोगात्। एवकारेण न स्वमते दोषलेशावकाशोऽपि इति लभ्यते। अङ्गाङ्गिनोरुभयोरपि पूर्णत्वेन भगवतो महिमातिशयस्यैव लाभात्। तथा च त्वन्मते श्रुतेरतत्वावेदकत्वेन कुण्ठित-शक्तित्वात् न तद्बलेन सूत्रस्यान्यथीकरण इत्याह **सूत्रेति** ॥ कुण्ठितधारेण कुठारेण काष्ठस्यापि छेदन असभावित किमुत स्वरूपत अच्छेद्यस्य कल्पद्रुमस्येति ध्वनि· ॥ ॥१२६ ॥

**श्रुतौ महानादरस्ते सर्वे जानन्ति पण्डिताः।**
**ब्रह्मण्याम्रेडितश्रुत्या तटस्थं यस्य लक्षणम् ॥ १२७ ॥**

महान् आदर इति पदच्छेदो मुखत·। तदा काक्वा परिहासो बोध्य। वस्तुतस्तु महाऽनादर इति समस्त पदम्। कर्मधारय। **आम्रेडितं** बहुवार कथितम्। **तटस्थं** अविद्यानिष्ठतया व्याख्यातम्। इद चोपलक्षणम्॥ 'न वेदा न वर्णाश्रमाचारधर्मा' इति स्वरूपेणैव वेदाना मिथ्यात्व, अबोधकत्व, अतत्वावेदकत्व च भाषमाणस्य यस्य इत्यपि योज्यम्॥ १२७ ॥

**किञ्च श्रुतावादरश्चेत्पुच्छस्थब्रह्मतास्तु ते।**
**अन्यस्याब्रह्मता कस्मात्स्वीकृता न हि सा श्रुता ॥ १२८ ॥**

**विशिष्यैकत्र यद्युक्तमर्थान्नान्यत्र तद्यदि।**
**तर्हि युक्तिबलादेव ब्रह्मता न श्रुतेर्बलात् ॥ १२९ ॥**

किं च 'ब्रह्म पुच्छ' इति श्रुति आनन्दमयस्य ब्रह्मत्वाभाव न श्रावयति। किं तु 'अवयवी न ब्रह्म अवयवस्य ब्रह्मत्वात्' इति युक्तिविरोधेनैव सूत्रस्य अन्यथीकरण

त्वयैष्टव्यम् । न त्वदुक्तरीत्या श्रुतिविरोधेनेत्याह द्वाभ्या **किञ्चेत्यादिना** ॥ १२८ ॥ ॥१२९ ॥

**युक्तिस्तु दुर्बला साक्षात्सूत्रादाप्ततमोदितात् ।**
**अतस्तवेषुस्त्वां हन्ति गुणे त्वन्यायकल्पना ॥ १३० ॥**

अस्तु तर्हि उक्तयुक्तिविरोधेनैव सूत्रबाध इत्यत आह **युक्तिस्त्विति । दुर्बला**= मृण्मयवृषभे अवयवावयविनोरभेदस्य दृष्टत्वेन भग्नव्याप्तिका, 'वृक्षस्य स्वगतो भेद' इत्यादिना 'भेदत्रय प्राप्त निषिध्यते' इत्यन्तेन त्वयैव भेदस्य निराकरणेन स्वव्याहता, 'एव धर्मान् पृथक्पश्यन् तानेवानुविधावति' इत्यादि पूर्वोदाहृतश्रुतिस्मृतिविरुद्धा चेति साधनासमर्था । सूत्रकृता परमाप्ततमेन उदाहृतास्तु, ब्रह्मशब्दाभ्यास, जगच्चेष्टकत्व, मुक्तिहेतुभूतज्ञानविषयत्व, मान्त्रवर्णिकत्व, मुक्तप्राप्यत्व, इत्यादयो युक्तय बहव आगमिकाश्च इति प्रबला । अतो हीनबलया त्वद्युक्त्या न सूत्रबाध सभवति, किंतु वैपरीत्यमेवोचितमित्याह **अत इति** । कल्पनेत्यनन्तरमितीति शेष । इषुरित्यनेन सबध्यते ॥ १३० ॥

**यदेकत्र विनिर्णीतश्शास्त्रार्थो ह्यपरत्र च ।**
**इत्याहुरार्यास्तत्तेऽर्थः स्वार्थं व्यभिचरेदपि ॥ १३१ ॥**

'ननु गुणे त्वन्यायकल्पने'ति न्याय श्रुतियुक्त्योर्विरोधस्थले एव निर्णीत न युक्त्यो परस्परम् विरोधे इति मन्दाशङ्का व्युदस्यति **यदिति** ॥ सर्वप्रमाणसाधारण एवाय न्याय इति भाव ॥ १३१ ॥

**पादस्य ब्रह्मतोक्तौ हि सर्वस्य ब्रह्मता बलात् ।**
**यतो भवेत्ततस्तेऽर्थः प्रबलार्थहतो भवेत् ॥ १३२ ॥**

दृष्टान्ताभिमते मृद्गवादौ सर्वत्राभावात्सपक्षशून्यत्वात्त्वदुपन्यस्तो हेतुर्विरुद्ध-श्चेत्याह **पादस्येति । बलात्** अवयवावयविनोरभेददर्शनबलात् ॥ १३२ ॥

**एवं च युक्तिश्रैष्ठ्येऽपि यदग्रे सूत्रखण्डनम् ।**
**अर्थादुत्सूत्रभाष्यत्वमुत्तरत्रापि तद्वदेत् ॥ १३३ ॥**

**उत्तरत्रापीति** स्वभावस्यानपायादिति भाव । वदेदिति करणे कर्तृत्वोपचार ज्ञापने असदिग्धत्वरूपातिशयद्योतनार्थ ॥ १३३ ॥

**किं च निर्विकृतेरेव निमित्तत्वं परात्मनः ।**
**कुलालवद्यतो युक्ता तदयुक्ता तटस्थता ॥ १३४ ॥**

उत्सूत्रभावस्य मायिभाष्यव्यापित्व तदीयजन्माधिकरणीयभाष्यनिदर्शनेनापि साधयति **निर्विकृतेरित्यादिना**। 'तस्मादशेषकर्तैको निर्विकारो जगत्पति' इति अनुव्याख्यान हृदि कृत्वाऽऽह **कुलालवदिति** ॥ कारण भवत् उपादान निमित्त वा भवेत् । ब्रह्म तु न उपादान निर्विकारत्वात् । तच्च अपराधीनत्वात् । तदुक्त सुधाया सकलोऽपि खलु विकारोऽपराधीनो भवति' इति । चेतनत्वादेव च तस्योपादानत्व न सभवति । 'न चेतनविकार स्याद्यत्र क्वापि ह्यचेतन' इत्यनुव्याख्यानोक्ते । अतो निमित्तकारणत्वमेवैष्टव्यम् । तच्च ब्रह्मणि उपपन्नतरमिति न सूत्रे लक्षणाश्रयण युक्तमिति भाव ॥ १३४ ॥

**पञ्चमी च निमित्तेऽस्तु यदि पाणिनिशिक्षया ।**
**उपादाने पञ्चमीयं तस्य शिक्षान्तरं स्मर ॥ १३५ ॥**

**यतः पदं यतः प्रोक्तं तेन सार्वविभक्तिकम् ।**
**तदपोसृजतेत्याद्या प्रथमा च सहस्रशः ॥ १३६ ॥**

ननु 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतौ यत इति पञ्चमी श्रूयते जनिधातुश्च । पाणिनिना 'जनिकर्तु प्रकृतिरि'ति सूत्रेण प्रकृतिलक्षण उपादाने पञ्चमी विहिता । अत तत्सूत्रविरोधात्कथ श्रुते निमित्तत्व व्याख्यानार्ह इत्यत चतुर्धा तन्निरस्यति **पञ्चमीति** । स्यादप्येव कथञ्चिद्यदि यत इति तसिल्प्रत्ययान्तम् स्यात् । कि तु तसिप्रत्ययान्तमेव । तसिश्च सार्वविभक्तिक इत्यत्र व्याकरणसमतिमाह

**शिक्षान्तरमिति**। अतोऽत्र तृतीयाविभक्त्याश्रयणात् 'कर्तृकरणयोस्तृतीये'ति कर्तृत्वमेव सिध्यतीत्याह **यत इति**। सुस्पष्टश्रुतिसहस्रसमाख्यया चैवमित्याह **तदिति** ॥ १३५ ॥ १३६ ॥

**अतो विभक्तिव्यत्यासोऽप्यत्र सर्वत्र शोभते।**
**सोऽपि च्छन्दसि तेनोक्तस्ततः काऽनुपपन्नता॥ १३७ ॥**

अस्तु वा यत इति पञ्चमी। तथाऽपि 'व्यत्ययो बहुल' इति सूत्रानुसारेणात्र विभक्तिव्यत्यासेन तृतीयाविभक्तिरेव व्याख्येयेत्याह **विभक्तीति**। 'छन्दस्युभयथे'ति स्पष्टानुशासनमप्यत्रास्तीत्याह **छन्दसीति**। 'येन जातानि जीवन्ती'त्यत्रैव वाक्ये तृतीयाया श्रुतत्वाच्चेत्यपि बोध्यम् ॥ १३७ ॥

**स्वमूलसूत्रमुत्सृज्य श्रुतौ कृतरतेस्तव।**
**परसूत्रं परित्यज्य कुतो नासीच्छ्रुतौ रतिः ॥ १३८ ॥**

कि च 'ब्रह्म पुच्छ प्रतिष्ठे'ति श्रुतेरापातार्थ परिगृह्य तद्विरोधमविद्यमानमेवापाद्य त्वया खलु स्वभाष्यमूलसूत्र तिरस्कृतम्। तस्य तव निरवकाशश्रुतिशतावसितार्थविरोधेऽपि सावकाशे परकीयपाणिनीयसूत्रे रतिनटन वञ्चनमात्रमूलमित्याह **स्वेति** ॥ १३८ ॥

**छन्दस्युभयथाप्यस्ति कार्ये नास्ति द्वयी गतिः।**
**लक्षणस्य तटस्थत्वे सर्वं कार्यमकर्तृकम् ॥ १३९ ॥**

जनिकर्तुरिति सूत्रस्य सावकाशत्व उक्त स्मारयति **छन्दसीति**। श्रुतीना निरवकाशत्व द्योतयति **कार्ये इति**। यत्कार्यं तत्सकर्तृकमेवेति व्याप्ते·। सृष्टे प्राग्विद्यमान खलु एकमेवाद्वितीय ब्रह्म। तस्य च कर्तृत्वानङ्गीकारे जगदकर्तृकमेवापद्यते इति भाव। नैष दोष·। मया ब्रह्मण उपादानत्वस्येव कर्तृत्वस्याप्यङ्गीकारादिति चेन्न। उपादानत्वस्य दूषितत्वात्। कर्तृत्वमात्राङ्गीकारे तु अनुज्ञया वर्तामहे इत्याशाय ॥ १३९ ॥

**जिज्ञास्ये लक्षणं नाभूदजिज्ञास्येऽस्ति यन्ति किम्।**
**तद्ब्रह्मेत्युपदेश्यं किं जिज्ञासा कस्य कथ्यताम् ॥ १४० ॥**

सूत्रे जिज्ञास्यत्वेनोक्तं ब्रह्मैव न मायेति परस्यापि समतम्। न च तत्रापि विवदितव्यम्। यत्प्रयन्ति इति प्राप्यत्वस्य, 'तद् ब्रह्म' इति परामर्शस्य च अविद्यायामसंभवादेव। अत द्वितीयसूत्रोक्त लक्षण ब्रह्मण एव भवितु युक्त न त्वेवाविद्याया इत्याह **जिज्ञास्य इति** ॥ १४० ॥

**यदि श्रुत्या पुच्छमेव ब्रह्म लक्षणवत्तदा।**
**श्रुतेर्बलाद्ब्रह्म भवेदनन्यार्था यतस्त्वियम् ॥ १४१ ॥**

कि च यस्या ब्रह्मश्रुतेर्बलात्त्वया पुच्छ ब्रह्मेत्यङ्गीकृत तस्या एवानन्यार्थाया ब्रह्मश्रुते कारणवाक्येऽपि सद्भावात् लक्षणलक्षित ब्रह्मैव त्वयाङ्गीकार्यमित्याह **यदीति** ॥ १४१ ॥

**अन्तस्सूत्रमिवोक्तं च बहिस्सूत्रं विसृज्यताम्॥ १४२ ॥**

नन्वेव पाणिनिसूत्रविरोध उक्त इति तत्राह **अन्तरिति**। स्वभाष्यमूलभूत अन्त सूत्रम्। अतथाभूत पाणिनिसूत्र तु बहि सूत्रम्। त्वया खलु गुणे त्वन्यायकल्पनेति न्यायव्याजेन अन्त सूत्र तिरस्कृतम्। तेनैव न्यायेन पाणिनिसूत्रमेव श्रुतेर्बलात्त्यज्यताम्। लक्षणस्य स्वरूपलक्षणत्वमेव स्वीक्रियतामिति भाव ॥ ॥१४२ ॥

**यदि ते पाणिनेस्सूत्रे (भ)भाराच्छ्रुतितिरस्कृतिः।**
**लक्षणस्य तटस्थत्वं तर्हि व्यासानुशासनात्।**
**ब्रह्मानन्दमयं भूयात्पुच्छं स्यात्तव पृष्ठतः ॥ १४३ ॥**

अथ तटस्थत्वसिद्ध्यर्थ तन्न्यायस्यैव परित्याग तर्हि आनन्दमयस्य ब्रह्मत्वसिद्धिरित्याह **ब्रह्मेति। पुच्छं=** ब्रह्म पुच्छमेव न तु आनन्दमय इति ते वाद **तव पृष्ठतः स्यात्=** सभाया प्रतिवादिन प्रति उदाहरणानर्ह स्यात्। तथा, **तव**

सूत्रापलापिन **पुच्छं**= लाङ्गूल **पृष्ठतः स्यात्** त्व पशुवत् विदुषा निन्द्यो भवेरित्याशय ॥ १४३ ॥

**अतः पुच्छश्रुतिस्तेऽभूद् ह्रस्वकौपीनपुच्छवत् ।**
**एकं सन्धित्सतो वाक्यमपरं च्यवते यतः ॥ १४४ ॥**

ज्ञेयमुभयत पाशारज्जुरित्याह **अत इति** ॥ १४४ ॥

**यदा मूलभ्रमादेव टीकां त्यजसि संमताम् ।**
**तदा मूलप्रमारूढां टीकां काकोऽपि न स्पृशेत् ॥ १४५ ॥**

अपि च टीकानुसारेण मूल योज्यमिति स्थिति । यदाहु । व्याख्यानतो विशेषार्थप्रतिपत्तिरिति । सूत्र च सर्वज्ञप्रणीत श्रुते स्वतन्त्रव्याख्यानम् । त्व तु श्रुतेस्त्वत्कुकल्पितम् दुरर्थ परिगृह्य तद्विरोधमापाद्य सूत्रमन्यथयितु प्रक्रान्त । व्याख्यानस्य प्राबल्य सर्वसमत त्वया अवधीरितम् । समानन्यायेन सूत्रविरोधे तद्व्याख्यानाभिमतस्य त्वद्भाष्यस्यैव तिरस्करणीयता बलादापतिता इत्याह **यदेति** ॥ अय पुनर्विशेष । सूत्ररूपटीका प्रमाणसमता । तव तु भाष्य अप्रमाण स्वव्याहतिविजृभित च । एवमीदृश भाष्य एकदृष्टिर्वायसोऽपि दूरात्परिहरेत् किं पुनर्विवेकिन इत्याह **काकोऽपीति** ॥ १४५ ॥

**परिस्पन्दक्रियामात्रं मास्तु वा व्याप्तवस्तुनः ।**
**जगज्जन्मादिकरणक्रिया हेया कुतो वद ॥ १४६ ॥**

**निमित्तमस्तु तद्ब्रह्म जगज्जालस्य कालवत् ।**
**उपादानत्ववार्ता च नात्र श्रौताध्वशोधने ॥ १४७ ॥**

ननु कर्तृत्वस्य स्वरूपलक्षणत्वे निष्क्रियत्वश्रुतिविरोध इति चेत् कि सा श्रुति परिस्पन्दक्रियामात्र निषेधति उत क्रियासामान्य वा । आद्ये प्रकृते न काचिदस्माक हीयते । 'स्वतन्त्रः कर्ते'ति स्मृतिसिद्धाया· इतरकारकप्रयोजकत्वरूपाया स्वातन्त्र्यपर्यवसन्नाया· क्रियाया· अनपायात् । निमित्तकारणे, काले इव,

परिस्पन्दराहित्यस्य अकिञ्चित्करत्वात्। उपादानत्वस्य प्रागेव निरस्तत्वादित्याह **परिस्पन्देति**॥ अभ्युपगम्य चेयमुक्ति। वस्तुत परिस्पन्दस्यापि तस्मिन् प्रमितत्वात्। यथोक्त जन्माधिकरणे सुधाया 'परिस्पन्दाभावे प्रमाणाभावात्। परममहत्परिमाणमस्तीति चेत् न। अणुमध्यमपरिमाणाभ्या सत्प्रतिपक्षत्वात्' इति। क्रियासामान्यनिषेधपक्षस्तु 'पराऽस्य भक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिप्रमाणपराहत ॥ १४६ ॥ १४७ ॥

**लक्षणस्य तटस्थत्वकथापि व्याहता तव।**
**यद्व्याप्तं लक्ष्यमात्रे स्यादलक्ष्ये नैव वृत्तिमत् ॥ १४८ ॥**

**तल्लक्षणं नास्य साधारणो धर्मोऽपि तत्किल।**
**कथमन्यगतो धर्मो लक्षणं स्यात्तदीर्यताम् ॥ १४९ ॥**

तटे ब्रह्मान्ये, अज्ञाने विद्यमान, ब्रह्मण्[illegible] विद्यमान, तटस्थलक्षणमिति परेणाभिप्रेयते। तदेतद् व्याहतमिति प्रतिजानीते [illegible]क्षणेति। तत्समर्थनाय 'यो धर्मो लक्ष्ये व्याप्त्या वर्तते न वर्तते चान्यत्र स ध[illegible] लक्षणमित्युच्यते' इति पद्धत्युक्त लक्षणस्वरूप अनुवदति **यदिति**। त्वदुक्त तु स[illegible] तदन्यथाभूत अलक्षणमेवेत्याह **कथमिति**॥ १४८ ॥ १४९ ॥

**काकोऽपि हि गृहस्थस्य गृहस्थो बोधयेद्गृहम्।**
**गते तस्मिंस्तेन कृतमुत्तृणत्वं हि बोधकम् ॥ १५० ॥**

**गृहस्थः**। व्यावृत्तिधीकाले गृहसबन्धी। **बोधयेत्**। इतरव्यावृत्ततयेति शेष। एव बोधकमित्यत्रापि। **उत्तृणत्वं** गृहस्थमिति लिङ्गव्यत्ययेन योज्यम्। व्यावर्तकस्य व्यावर्त्यसबन्ध· सर्वथा व्यावृत्तिधीकाले एवापेक्षित इति हृदयम्॥ १५० ॥

**कदाचिद्गुरुसंबन्धः कुरुसंबन्ध एव च।**
**गुरोष्टीका कुरोः क्षेत्रमित्यत्रापि हि वर्तते ॥ १५१ ॥**

गुरूणा टीका, कुरूणा क्षेत्रमित्यादावपि इयमेव गतिरित्याह **कदाचिदिति।** इद च मुखत । गुरुकृतत्व कुरुपालितत्व वा व्यावृत्तिधीकालेऽपि विद्यमानमेवात्रापि व्यावर्तकमित्याशय । तेन न पूर्वोक्तनियमभङ्ग ॥ १५१ ॥

**सर्वथा तदसंबद्धस्तत्रोपकुरुते कथम्।**
**महिष्याः क्षीरवत्त्वे स्याद्गोवृषस्य तु किं फलम्।**
**काकस्य कार्ष्ण्याद्धवलः प्रासादस्स्यान्न चेत्तव॥ १५२॥**

अन्यथाऽतिप्रसङ्गावाह **महिष्या इति। काकस्येति च** ॥ १५२ ॥

**किं चोपलक्षणं ह्येतल्लक्षणं तु न तादृशम्।**
**घटस्य लक्षणं पश्य पटस्य ब्रह्मणस्य च ॥ १५३॥**

तिष्ठतु तावदुपलक्षणवार्ता। लक्षणस्थले त्वदीयतटस्थत्वचोद्यस्यैवानवकाश इति निदर्शनैर्द्रढयति **घटस्येति** ॥ १५३ ॥

**व्यतिरेक्यनुमानं हि लक्षणं पक्षधर्मता।**
**व्यावृत्तिश्च विपक्षेभ्यस्तस्य चावश्यकी न किम्॥ १५४॥**

कि च लक्षणम् हेतूकृत्य खलु लक्ष्ये व्यावृत्ति व्यतिरेकिणा साधनीया । तस्य लक्ष्यावृत्तित्वे गो· एकशफत्वमित्येव स्वरूपासिद्धि, अलक्ष्यवृत्तित्वे शृङ्गित्वमित्यत्रेव अनैकान्तिकत्व, लक्ष्यैकदेशावृत्तित्वे शबलमित्यत्रेव भागासिद्धि इति दोषा स्यु । सर्वथा त्वदभिमत तटस्थ लक्षणमसाधकमेव स्यादित्याशय· ॥ ॥१५४ ॥

**कथं सूत्राभिमतयोर्यत्तदोर्वृत्तिरुच्यताम्।**
**यदुक्तलक्षणोपेतं तद्ब्रह्मेति हि योजना ॥ १५५॥**

जिज्ञास्यब्रह्मणो लक्षणजिज्ञासाया हि जन्मादिसूत्र प्रवृत्तम्। तत्र यत इति यच्छब्दोक्त ब्रह्मैव भवितु मुक्त नैवाज्ञानम् तस्याजिज्ञासितत्वेन असाङ्गत्यापत्तेरिति भावेन सूत्रयोर्योजना दर्शयति **यदिति** ॥ १५५ ॥

**तल्लक्षणस्य ताटस्थ्ये ज्ञेयताऽपि तटे तव ॥ १५६ ॥**

उक्तयोजनानङ्गीकारेऽसङ्गतिमाह **तदिति** ॥ १५६ ॥

**यदि लक्षणवन्मायाभ्रान्त्यधिष्ठानतैव ते ।**
**ब्रह्मलक्षणमाशास्यं तर्हि सूत्रकृतः प्रभोः ॥ १५७ ॥**

**आरोपोस्या यत इति वचने का दरिद्रता ।**
**अन्तरा ब्रह्मसूत्राणि किमब्रह्मापि सूत्रितम् ॥ १५८ ॥**

त्वद्रीते सूत्राभिप्रेतत्वे जन्मादिसूत्रविन्यास अन्यथैव स्यादित्याह **यदिति**। सदुक्त सुधाया "तर्हि यतोऽस्य जन्मादि सा माया तदाश्रयो ब्रह्मेति निर्देश स्यात्। न तु जन्माद्यस्य यतस्तद्ब्रह्मेति" इति। **दरिद्रतेति** स्वायत्ते शब्दप्रयोगे किमित्यमुख्यम् प्रयुज्महीति न्यायादिति भाव । सूत्राणा ब्रह्मसूत्रेत्यभिधानमेव मध्ये ब्रह्मभिन्नस्य अज्ञानस्य सूत्रण विरुणद्धि इत्याह **अन्तरेति**। मध्ये इत्यर्थ ॥ १५७ ॥ ॥१५८ ॥

**श्रुतेरनुसृतौ च स्यात्तटस्थं नैव लक्षणम् ।**
**यत्पदोदितमेवार्थं तत्पदेन हि सा जगौ ॥ १५९ ॥**

आनन्दमयनये श्रुत्यनुसारव्याजेन सूत्राण्यन्यथीकृतानि मायिना । इदानी तेन जन्मादिनये सूत्रस्यैव श्रुतेरप्यन्यथीकरण दर्शयति **श्रुतेरिति**। यतो वा 'इमानि भूतानि' इत्यादिश्रुतौ यच्छब्दत्रयप्रस्तुतमेव अर्थ खलु तद्ब्रह्म इत्यत्र तच्छब्द परामृशाति इति स्फुटम्। मायिरीत्या यच्छब्दैरज्ञानस्य वचनाभिप्राये श्रुतावुत्तरत्र तदज्ञान इत्येव निर्देश स्यात्। न तु तद्ब्रह्मेति। अत स्पष्टः श्रुति विसवादस्तद्भाष्यस्येति भाव ॥ १५९ ॥

**एवं च निर्गुणत्वोक्त्या तटस्थं लक्षणं न ते ।**
**आरोपाधिष्ठानताख्यधर्मस्यावश्यकत्वतः ।**
**तटस्थमायायोगस्य बोध्यत्वादेरवर्जनात् ॥ १६० ॥**

किच निर्गुणश्रुतिविरोधापत्तिपरिजिहीर्षया खलु मायावादिना लक्षणस्य ताटस्थ्यमाश्रितम् । न च तद्युक्तम् । तावताऽपि श्रुतिविरोधतादवस्थ्यात् । निर्गुण हि सकलधर्मविकलम्, असङ्ग च तेनाङ्गीकृतम् । लक्षण च स्वरूप वा तटस्थ वा असाधारणधर्म एव । न चेत्तेन व्यावृत्तिबुद्धि न स्यात् ॥ तथा च निर्धर्मकस्य असाधारणधर्म इति व्याघात । लक्षणमपि तटस्थ काकादिक लक्ष्यसबन्धवदेवोपलब्धम् । असङ्गाभिमतस्य ब्रह्मणस्तत्सबन्धोक्तिरपि व्याहतैव । श्रुतिविरोधोक्तिरपि व्याहता । निर्धर्मके तस्मिन् श्रुतिबोध्यत्वादिधर्माणा-मप्यसभवादेव । तथा च तन्मतरीत्यैव लक्षण तटस्थमिति चोद्यानवकाश इत्याह **एव चेति** ॥ १६० ॥

**किं च निर्गुणताध्रौव्ये लक्षणस्य तटस्थता ।**
**लक्षणस्य च ताटस्थ्ये निर्गुणत्वं ध्रुवं भवेत् ।**
**अतोऽन्योन्याश्रयः स्यान्न परमात्मपदाश्रयः ॥ १६१ ॥**

**ध्रौव्ये** श्रुत्यर्थतया निश्चितत्वे । **न परमात्मपदाश्रयः** परमात्मेत्युदाहृत आश्रय । 'उत्तम पुरुषस्त्वन्य परमात्मेत्युदाहृत ' इत्युक्तार्थस्य अङ्गीकार तेन च हरेश्चरणमूलप्राप्तिश्च न स्यादिति ध्वनि ॥ १६१ ॥

**श्रुतिमात्रबलोसि त्वं श्रुतिसूत्रबला वयम् ॥ १६२ ॥**

बलोऽसीत्यापातत । उक्तरीत्या श्रुतेस्त्वदभिमतनिर्गुणाबोधकत्वादेव ॥ ॥१६२ ॥

**अथोपादानता प्राप्ता पाणिनेरनुशासनात् ।**
**सा चायुक्ता ब्रह्मणीति तटस्थं लक्षणं यदि ।**
**इदं च तर्हि युक्तं नेत्युत्प्रेक्षा जायते मम ॥ १६३ ॥**

प्राप्ता 'यतो वा' इति श्रुतौ त्वया प्रसञ्जिता । ननु वस्तुवृत्त्या सूत्रार्थभूता ॥ ॥१६३ ॥

**व्यासस्य शासनं ज्यायः पाणिनेरनुशासनात् ।**
**अमुख्यमेव बाध्यं स्यान्नामुख्यान्मुख्यबाधनम् ॥ १६४ ॥**

**ज्यायः** भाष्यमूलत्वेन अन्तरङ्गत्वात् प्रधानम् ॥ १६४ ॥

**स च श्रौतमिमं धर्मं ब्रह्मण्यनुशशास हि ।**
**अतः पाणिनिसूत्रं तदन्यत्र स्यान्न लक्षणम् ।**
**जारानुसरणाज्ज्यायः पत्युः पादोपसर्पणम् ॥ १६५ ॥**

**अनुशशास** जिज्ञास्यस्य लक्षणकथनार्थमेव सूत्रप्रणयनादिति भाव ॥ **अन्यत्र** शृङ्गाच्छरो जायते इति लौकिकप्रयोगेषु । स्यात् इति अभ्युपगम । तत्रापि अविकृतस्य अपायावधिभूतभागस्यैव विभक्तिप्रकृत्यर्थता इति भाव । **लक्षणं** सूत्रोक्तम् । **अन्यत्र** ब्रह्मण· अन्यत्र मायायाम् । **न** स्यादिति आवर्तते । न गच्छति असम्भवादेवेति भाव । **जारः** बहिरङ्ग पाणिनिसूत्रम् ॥ **पत्युः** ब्रह्मसूत्रस्य ॥ १६५ ॥

**अविकारित्वतस्तस्य नैवोपादानता मता ।**
**अतः कर्तैव जगतः श्रुतौ सूत्रे च कथ्यते ॥ १६६ ॥**

सत विकारिण एव चोपादानत्व लोके दृष्टम् । त्वदभिमता माया सद्विलक्षणत्वान्नोपादानम् । ब्रह्म तु अविकारित्वादिति कर्तृत्वमेव लक्षण श्रुतिसूत्रोक्तमित्याह **अत इति** ॥ १६६ ॥

**निष्क्रियत्वश्रुतिश्चास्य क्रियया शास्त्यलेपनम् ।**
**अकर्तारं हि तं प्राहुर्यः कृत्वापि न लिप्यते ।**
**श्रुतिसूत्रोक्तकर्तृत्वबाधाय यतते न सा ॥ १६७ ॥**

भगवत क्रियाश्रयत्वरूपकर्तृत्वे निष्क्रियत्वश्रुतिविरोध इत्यत आह **निष्क्रियत्वेति**। तदुक्त गीताया 'तस्य कर्तारमपि मा विद्ध्यकर्तारमव्ययम्। न मा कर्माणि लिम्पन्ति' इति। अक्लिष्टकारित्वादकर्तेत्यभिधीयते इति च वायुपुराणे। तथा च लोकविलक्षणक्रियावत्त्वान्निष्क्रियत्वश्रुतिरुपपन्ना। तदुक्त गीताभाष्ये 'वैलक्षण्यात्कर्ताऽप्यकर्ता। तथा हि श्रुति विश्वकर्मा विमना' इत्यादीति ॥ ॥१६७॥

**मणिः प्रवर्तते मालाकारसन्दर्शिताध्वना।**
**न चेदाकाशशब्दोक्तं परं ब्रह्म कथं वद।**
**आकाशश्रुतिसामर्थ्याज्जडाकाशः कथं न सः ॥ १६८ ॥**

**मणिः** ऋगाद्या अपरविद्या। **मालाकारः** तासा विष्णौ समन्वयसमर्थनेन अक्षराधिगतिकरणत्वरूपपरविद्यात्वसम्पादक सूत्रकार। **अध्वा** उपक्रमादि-न्याय। **सामर्थ्यात्** अविद्वल्लोकप्रसिद्धिबलात् ॥ १६८ ॥

**तदानन्दमयं कोशं कर्तुं स्वेन निरूपितम्।**
**गुणे त्वन्यायक्लृप्त्याख्यन्यायं स्वयमहोजहौ ॥ १६९ ॥**

**अहो** आश्चर्यम्। मायिन उन्मत्तप्रलापित्व इति शेष। आकाशनये सूत्रस्य प्रधानत्व श्रुतेर्गुणत्वेन तदनुसारित्व च स्वयमङ्गीकृत्य आनन्दनये पुन तद्वैपरीत्येन गुणप्रधानत्व प्रलपत व्याहतभाषिण कथमुन्मत्तता न स्यादिति भाव ॥ १६९ ॥

**प्रधाने ब्रह्मसूत्रेऽस्मिन्यदन्यायं चिकीर्षति।**
**गुणभूतान्य(सूत्रा)शास्त्रार्थे बहुमानपुरस्कृतः ॥ १७० ॥**

**सइदंसर्वमसृजतेतिश्रुतिसमाख्यया।**
**कर्तृत्वमिह हेतुत्वं नोपादानत्वमिष्यते ॥ १७१ ॥**

अन्यत्रापि गुणप्रधानभावाकलने तस्य अनवस्थितत्व स्फोरयति **प्रधान इति ॥** तथा च तद्रीति· 'मणिस्रज वा प्लवगोऽव्यवस्थ' इत्यभियुक्तोक्त-न्यायमनुकरोतीति भाव ॥ १७० ॥ १७१ ॥

**वेदे वेदानुसरणं पाणिनेश्च स्थले स्थले ।**
**यतश्च यत इत्येतत्पदं सार्वविभक्तिकम् ॥ १७२ ॥**

**स्थले स्थले इति ॥** तदुक्त गुणसौरभे 'छन्दस्ययस्मयादीनीत्येव शब्दानुशास्तिकृत् । अमानयद्धि यन्मार्ग' इति । **पदं** सार्वविभक्तिक-तसिप्रत्ययान्तम् ॥ १७२ ॥

**यतोऽर्थानुपपत्तिश्च शब्दस्यानुपपत्तितः ।**
**प्रबला लक्षणावृत्तेर्न चेदवसरः कथम् ॥ १७३ ॥**

**यत इति ॥** तदुक्त गुणसौरभे "तत्तत्पदार्थसामर्थ्यानुपमर्देन शब्दत । अर्थो बोध्यो न शब्दस्य सत्त्वादर्थोपमर्दनमि"त्यादौ (श्लो ८५८) अन्यथा योग्यताविरहाच्छब्दस्याप्रामाण्यापत्तेरिति भाव । **लक्षणावृत्तेरिति ।** 'मुख्यार्थबाधे तद्योगे' इति लक्षणाबीजोक्ते । पूर्वायोगे परग्रह इत्यनुव्याख्यानोक्तेश्च ॥ १७३ ॥

**ब्रह्मजिज्ञासया प्राप्तं सुतं प्रति पिता कुतः ।**
**अन्यगं लक्षणं ब्रूयाद्बोध्ये ब्रह्मण्यसंभवि ॥ १७४ ॥**

'अधीहि भगवो ब्रह्मेत्युक्तोऽन्नप्राणपूर्वकम् । आह ब्रह्म कथ तन्न' इत्यनुव्याख्यानोक्त हृदि कृत्वाऽऽह **ब्रह्मेति ॥ पिता** वरुण लोकपाल दिक्पति । अनेन तस्य विवक्षितार्थतत्त्वज्ञान करणपाटव चोक्त ज्ञेयम् । ब्रूयादिति वचनेन कार्येण विवक्षा च । **प्राप्तं** उपसन्नम् । **सुत** भृगुम् । तदनेन प्रसङ्गस्य श्रोतुश्च आनुकूल्ये प्रदर्शिते । ब्रह्मणि इत्यनेन प्रथमसूत्रोक्तगुणपूर्णत्व लक्षण द्योत्यते । तत्सभावनार्थ उपदिष्टमिद द्वितीय लक्षण ब्रह्मण स्वरूपलक्षणमेव सर्वथा युक्त नान्यथेत्याह **अन्यगमिति** विमत लक्षण, ब्रह्मनिष्ठ, ब्रह्मजिज्ञासु प्रति आप्तेनोपदिष्टत्वादिति प्रयोग सूचित ॥ १७४ ॥

**स्वगृहे दीपिकाभावे प्रार्थयन्तेऽन्यदीपिकाम् ।**
**सति ब्रह्मस्थकर्तृत्वे तटस्थं स कुतो वदेत् ॥ १७५ ॥**

**सतीति** 'ब्रह्माख्यमस्योद्भवनादिहेतुभि स्वलक्षणैर्लक्षितभावनिर्वृति' इत्यादिप्रमाणै सिद्धे सति इत्यर्थ ॥ १७५ ॥

**मोक्षोपयोगिज्ञानाय साक्षान्मोक्षविरोधिनि ।**
**अज्ञाने स्थितदुर्धर्मं को ज्ञानप्रस्तुतो वदेत् ॥ १७६ ॥**

ब्रह्माश्रितत्वान्मायाया तल्लक्षणकथन परम्परया मोक्षायोपयुज्यते इत्यतो ब्रह्माश्रितमज्ञान इति मिथ्याज्ञान साक्षात्तम साधनमेवेत्याह **साक्षादिति**। तदुक्त 'अज्ञताऽखिलसवेत्तुर्घटते न कुतश्चने'ति ॥ १७६ ॥

**आनन्दादेव विज्ञानादेवेति यमसौ भृगुः ।**
**ब्रह्म पश्यन्निरणयत्कथं सोऽन्यं गतो वद ॥ १७७ ॥**

किच भृगु खलु पितुरुपदेश प्राप्य तपस्तप्त्वा ब्रह्मसाक्षात्कृत्य तस्मादेव जगज्जन्मादिक इति निरणैषीत् । प्रत्येक रूपसाक्षात्कारानन्तर अन्नादेवेमानि भूतानि जायन्ते इत्यादिना सावधारणनिर्णयोक्ते । अभ्यस्तेन अवधारणार्थकैवकारेण अन्यनिष्ठत्व लक्षणस्य स्फुट व्यावर्त्यत इत्याह **आनन्दादिति** ॥ १७७ ॥

**अपायेऽवधिभूतं यद् ध्रुवं तत्रास्ति पञ्चमी ।**
**स्वोदराच्च प्रधानस्यापाये तादृक्सृजन्प्रभुः ॥ १७८ ॥**

**अतस्तेनैव सूत्रेण पञ्चमी परमात्मनि ।**
**जनिधातुप्रवेशोऽपि यतो न विकृतो ह्यसौ ॥ १७९ ॥**

कि चास्तु वा यत इत्यत्र पञ्चम्यर्थे तसिल् । अथापि सा ध्रुवमपाये अपादानमि'ति सूत्रविहितैव । अपायावधिभूतत्वमपादानत्व च प्रपञ्च प्रति ब्रह्मण 'यथोर्णनाभि सृजते गृह्णते च' इति श्रौतदृष्टान्तसिद्धिमिति न कोऽपि क्षुद्रोपद्रव

इत्याह **अपाय** इति ॥ जायते इत्यत्र जनिधातुरपि निर्विकारे तस्मिन्नपादानत्वमेव वक्तीत्याह **जनीति** ॥ १७९ ॥

**जनिकर्तुः प्रकृतिरित्यत्र प्रकृतिशब्दतः ।**
**उपादानं तु स ब्रूते तस्य चावसरोऽत्र न ॥ १८० ॥**

यदि तर्हि 'जनिकर्तु प्रकृति'रित्यत्रत्यस्य उपादानवाचिप्रकृतिशब्दस्य का गतिरिति चेल्लौकिकप्रयोगविरुद्धत्वाद्दुर्गतिरेव गतिरित्याह **जनीति** ॥ १८० ॥

**कार्याकारेण विकृते नोपादाने तु पञ्चमी ।**
**मृद्घटो जायते क्षीरं दधि जातमिति क्षितौ ।**
**लोका व्यवहरन्त्यस्मादिदन्त्विति न कश्चन ॥ १८१ ॥**

लौकिकप्रयोगविरोधमभिनीय दर्शयति **कार्येति** ॥ १८१ ॥

**शृङ्गस्याप्येकदेशस्य शराकारेण विक्रिया ।**
**तत्राप्यविकृते भागे पञ्चमी विक्रियावधौ ॥ १८२ ॥**

**सा च तेनैव सूत्रेण तस्मात्त्वमिव नः प्रभौ ।**
**विरोधाचरणात्सूत्रं चित्रं तद्यत्र कुत्रचित् ॥ १८३ ॥**

**अवकाशं न लभते व्यर्थतामर्थतोगमत् ।**
**जनिकर्तुः प्रकृतिरित्युक्तिस्तन्न भयङ्करी ॥ १८४ ॥**

'शृङ्गाच्छरो जायते' इति प्रयोगेऽपीयमेव गतिरित्याह **शृङ्गस्येति** ॥ 'जनिकर्तुरित्यनेनापादानसञ्ज्ञायामपि वृत्तौ पुत्रात्प्रमोदो जायते' इत्यस्याप्युदाहृतत्वात् । न्यासेऽपि प्रकृतिपद हेतुमात्रपरमित्याश्रित्य असति प्रकृतिग्रहणे उपादानतैव स्यात् । प्रत्यासत्तेर्नेतरस्य । प्रकृतिग्रहणात्सर्वस्य कारणस्य भवतीति प्रकृतिपदम् । पुत्रात्प्रमोदो जायते इत्यादौ अनुपादानेऽपि अपादानसञ्ज्ञार्थमित्युक्तत्वात् । अत्र विस्तरो न्यायामृते 'ब्रह्मण उपादानत्वे प्रमाणभङ्गे' । **तत्रापीति** ॥

तदुक्त प्रकृत्यधिकरणे 'गोमयतस्तथा ॥ वृश्चिकश्चैवमाद्येष्वप्यपादानत्वमिष्यते' इत्यनुव्याख्यानव्याख्यानसुधाया "जने कर्तुर्या प्रकृतिरुपादानससृष्टापायावधिभूत द्रव्य तत्कारकमपादानसज्ञ भवतीति" इति । तथा च सूत्रे प्रकृतिशब्द· उपादानपरश्चेत् लोकविरोधादपार्थक । अपादानपरश्चेत् 'ध्रुवमपाये' इति सूत्रेणैव गतार्थत्वात् निरर्थक इत्याह **यत्र कुत्रचिदिति**। सर्वथा नास्माक विरोधायेत्याह **तन्नेति** ॥ ॥१८४ ॥

**यथोपादानतामुक्त्वा यस्तटस्थीकरोति ताम् ।**
**अबद्धं स पठित्वान्ते कुचोद्यं कुरुतेऽबुधः ॥ १८५ ॥**

तथा च पाणिनिसूत्रस्य मायिनोऽर्थकथनमबद्धम् । तमर्थमाश्रित्य ब्रह्मण उपादानत्ववर्णन कुचोद्यमित्याह **अबद्धमिति** ॥ १८५ ॥

**किं चोपादानमात्रेण कार्यं स्यान्नावयोर्मते ।**
**अतः कर्तुरवश्यत्वे न तद्वाच्यं कथं वद ॥ १८६ ॥**

अपि च निमित्तोपादानोभयरूप ब्रह्मेति खलु तव सिद्धान्त । अतो मुख्यार्थस्य कर्तृत्वस्य त्वयाप्यङ्गीकाराल्लक्षणाश्रयण तव निर्निमित्तमित्याह **कथ वदेति** ॥ १८६ ॥

**तस्मात्त्वयाऽपि वक्तव्यः कर्तैवात्र न चापरः ।**
**ईक्षितृत्वबलान्नोचेत्कथं सांख्यं जिगीषसि ॥ १८७ ॥**

अथापि लक्षणाश्रयणे तस्य बाधकमाह **ईक्षितृत्वेति** ॥ ईक्षणकर्तृत्वात् ब्रह्मैव जगत्कारण न प्रधानमिति ईक्षतिनये त्वया साख्यनिराकरणादिति भाव ॥ १८७ ॥

**तव यः श्वा कथं व्याघ्रस्स परस्य भविष्यति ।**
**अनिच्छतापि कर्तृत्वमतो वाच्यं त्वयापि हि ॥ १८८ ॥**

**यः** ईक्षणकर्तृत्वरूपोऽर्थ· **श्वा** गौणत्वान्न ब्रह्मनिष्ठ । **परस्य** साख्यस्य । **व्याघ्रः** तदभिमतप्रधाननिरासक ॥ १८८ ॥

**जडे च नैव कर्तृत्वमीशासिद्धिप्रसङ्गतः।**
**तस्मात्तटस्थतास्य स्याल्लक्षणस्य कथं वद ॥ १८९ ॥**

**नैवेति।** ज्ञानेच्छाप्रयत्नाना तत्रासभवादिति भाव.। निमित्तान्तरमाह **ईशेति।** **तस्मात्** कर्तृत्वस्य सर्वथा ईश्वरे अभ्युपगमनीयत्वात् ॥ १८९ ॥

**क्रियावेशप्रसङ्गेन कर्तृत्वं न चितो यदि।**
**जडावेशप्रसङ्गेन तर्ह्यज्ञानं कथं चिति ॥ १९० ॥**

असङ्गो ब्रह्मणो लेपाभाव एवेति प्रागुक्तम्। अथापि क्रियासङ्ग क्रियाऽऽवेशारूप इति परिकल्प्य कर्तृत्व चेन्नाङ्गीक्रियते तर्हि अज्ञानावेश ततोऽप्यतिशायलेपरूपतया सुतरा ब्रह्मणि नाङ्गीकार्य इत्याह **जडेति** ॥ १९० ॥

**जडामिश्रं हि तद्ब्रह्म केवलश्रुतिचोदनात्।**
**समस्समाधिर्मिथ्यात्ववार्तया ते द्वयोरपि ॥ १९१ ॥**

अय पुनर्विशेष। ब्रह्मणि क्रिया 'स्वाभाविकी ज्ञानबलक्रिया चे'त्यादिश्रुतिसिद्धा। जडमिश्रता तु 'केवलो निर्गुणश्चे'त्यादि श्रुतिविरुद्धेत्याह **जडेति ॥** ननु अज्ञानस्य मिथ्यात्वेन तदावेशोऽपि न ब्रह्मणोऽसङ्गत्व व्याहन्यते इति चेत् क्रियाऽऽवेशोऽपि तथात्वमस्त्वित्याह **सम इति** ॥ १९१ ॥

**मम तु ब्रह्मगाज्ञानं मृषा शास्त्रार्थवत्त्वतः।**
**कर्ता जीवोऽपि हि यदा शक्तः किमु तदा प्रभुः ॥ १९२ ॥**

इद चोपेत्योक्तम्। ब्रह्मणि अज्ञानस्य मिथ्यात्वेऽपि कर्तृत्व सत्यत्वमेव। 'अज्ञाना ज्ञानदो विष्णु ज्ञानिना मोक्षदश्च सः' इति प्रमाणसिद्धज्ञानादिदातृत्वाभावे शास्त्राणा वैयर्थ्यापत्तेरिति आह **शास्त्रेति।** कैमुत्येनापि तस्य कर्तृत्वसिद्धिं दर्शयति **कर्तेति। प्रभुः** स्वतन्त्र जीवाना बिम्बभूत.। न हि प्रतिबिम्बस्य जीवस्य स्वातन्त्र्येण क्रियेति भाव ॥ १९२ ॥

**निष्क्रियत्वश्रुतेर्भीश्चेत्कथं स्यात्ते गतागतम्।**
**व्यावहारिकमेतच्चेत्क्रियेयं चास्तु तादृशी।**
**न हि निष्क्रियवागेकां क्रियामेव निषेधति ॥ १९३ ॥**

**ते** ब्रह्मभिन्नतया त्वदभ्युपगतस्य त्वदादिजीवसमुदायस्य। इय ब्रह्मगता। **अस्त्विति।** न हि व्यवहारनिर्वाहकातिरिक्त सत्यत्व इष्ट दृष्ट वेति भाव। ननु निष्क्रियत्वश्रुति निरुपाधिके ब्रह्मण्येव क्रिया निषेधति। जीवस्तु सोपाधिक इति चेत् त्वदाशामात्रमेतत्। श्रुतौ तु सामान्यतो निषेधिकाया निरुपाधिक-पदाश्रवणादित्याह **न हीति॥** इद चापातत। असङ्गस्य तव ब्रह्मण उपाधिसबन्धस्यैव दुर्वचत्वादित्यपि द्रष्टव्यम् ॥ १९३ ॥

**चित्रं चित्रक्रियागारसंसारे न तटस्थता।**
**जगज्जन्मादिकरणक्रियामात्रे तु सा किल ॥ १९४ ॥**

जगति क्रियामभ्युपगम्य जगत्कारणे ब्रह्मणि तदनङ्गीकुर्वाण अपहसति **चित्रेति।** कारणे क्रियाऽभावे कार्यस्वरूपस्यैवानिष्पत्त्या कुत एव तत्र क्रियाप्रसक्तिरिति भाव ॥ १९४ ॥

**मम सर्वज्ञ इत्युक्तविज्ञानक्रियया सह।**
**योनिरित्युक्तकर्तृत्वक्रियास्त्येव न विक्रिया ॥ १९५ ॥**

निषेधवचसा खलु प्रमितेतरनिषेधकत्वमिति स्थिति। 'य सर्वज्ञ' इति श्रुत्या ब्रह्मणि ज्ञानरूपक्रिया, 'यद्भूतयोनिमि'ति श्रुत्या च कर्तृत्वरूपक्रिया च प्रमिते इति ते न निषेधार्हे। अतो निष्क्रियत्वश्रुति 'न कर्मणा वर्धते नो कनीयान्' इति श्रुत्यनुसारिणी उपचयापचयरूपविक्रियामेव ब्रह्मणि निषेधतीति वक्तु युक्तमित्याह **ममेति** ॥ १९५ ॥

**निष्क्रियत्वश्रुतेस्सत्त्वात्तटस्थं लक्षणं यदि।**
**तर्ह्यज्ञानं तटस्थं स्यादद्वितीयश्रुतेर्बलात् ॥ १९६ ॥**

श्रुतिविरोधाच्चेत् कर्तृत्व तटस्थ स्यात् तर्हि अद्वितीयश्रुतिविरोधात् अज्ञानमपि तटस्थ स्यादेवेत्याह **निष्क्रियत्वेति** ॥ १९६ ॥

**अनादिब्रह्मणोऽज्ञानमनाद्येव हि ते मते ।**
**द्वितीयं तत्कृतं तस्मात्तृतीयमखिलं जगत् ।**
**तेनाविद्यानिषेध्यैव वागेषेति मतिर्मम ॥ १९७ ॥**

अज्ञानस्य द्वितीयत्व त्वत्प्रक्रियाऽनुसारेण न्यायप्राप्तमित्याह **अनादीति** ॥ ब्रह्म प्रथम, तद्वदेव अनादिभावरूपत्वेनाभ्युपगत त्वदज्ञान द्वितीय, अज्ञानकार्य जगत् तृतीय इति क्रम· । तथा च 'एकमेवाद्वितीयम्' इतीय तव श्रुतिभुजङ्गी ब्रह्मणि अज्ञान द्वितीयतया निषेधन्ती, प्रपञ्च च तृतीयतयाऽवशेषयन्ती त्वत्प्रक्रियामेव हिनस्तीति विचित्रा ते शास्त्रगतिरिति भाव ॥ १९७ ॥

**किं चाविकारवचनाज्जगद्रूपविकारकृत् ।**
**तटस्थमस्तुतेऽज्ञानं ब्रह्म निर्मलवस्तु तत् ॥ १९८ ॥**

कि च 'निर्विकारोऽक्षर शुद्ध ' इति श्रुति ब्रह्मणो विकार प्रतिषेधति । अज्ञान च अतदाकारावभासलक्षणविक्षेपरूपविकारकारि इति ते प्रसिद्धम् । तथा च श्रुति द्वितीय विकारकारण चाज्ञान प्रतिषेधतु, तेन च ब्रह्म निर्मल अज्ञानकलङ्कविधुर विलसतु प्रपञ्चश्च मायाजालविनिर्मुक्तम् निराबाधमवतिष्ठताम्, एतत्सर्वं च त्वत्प्रक्रिययैव न मत्प्रक्रिययेति विजयतामस्मत्प्रतिबन्दीग्रहणमिति भाव ॥ १९८ ॥

**अतः प्रथमतस्सूत्रकृदुक्ते ब्रह्मलक्षणे ।**
**असंभवोऽतिव्याप्तिश्च सिद्धान्तो यस्य धीमतः ।**
**स भाष्यकृत्किल गुरुः श्रोता तत्र च कश्चन ॥ १९९ ॥**

**तटस्थः कोऽपि न स्यादित्यकरोद्ब्रह्मलक्षणम् ।**
**यतः शिक्षणमेवेदं सूत्राणां नार्थरक्षणम् ॥ २०० ॥**

तदेव प्रथमसूत्रे एव छलजातिवारिधि· भाष्य उत्सूत्र, भाष्यकारो वञ्चक श्रावकश्चाविवेकीत्युपहसति **अत इति ॥ तटस्थः** तटे स्थित्वा श्रोता । **ब्रह्मलक्षणं** तटस्थ इति विभक्तिव्यत्ययेनान्वय । अगत्या लक्षणमेव तटस्थमकरोदिति भाव । तत्साधूक्तमभियुक्तै 'त तत्क्षणाद्यो न दिधक्षति स्म' इति ॥ १९९ ॥ २०० ॥

**अतो लक्षणसूत्रस्य बलाज्ज्ञानबलादिभिः ।**
**गुणैर्युक्तमभूद्ब्रह्म लक्षणेन गुणेन च ॥ २०१ ॥**

एतावता समर्थित प्रमेयजात सगृह्णाति **अत इति।** लक्षणसूत्रस्य स्वरूपलक्षणत्वसमर्थनेन तत्सिद्धजन्माद्यष्टककर्तृत्वात् तदन्तर्गततयैव ज्ञान-बलादिभिर्गुणैर्युक्त ब्रह्म सिद्धमिति भाव । तदुक्त कर्मनिर्णयटीकाया "कर्तृत्व च कार्यकारकक्रियाफलाभिज्ञानतदिच्छाप्रयत्नपूर्वक स्पन्द । तत सर्वकर्तेत्युक्ते सर्वज्ञ सत्यकाम सत्यसङ्कल्प समस्तशक्तिसमन्वित एवोक्तो भवति" इति । लक्षणेन गुणेन इति सामानाधिकरण्यम् । चशब्देन 'कर्तृत्वात्सगुण ब्रह्म' इति भागवत- पुराणसमतिमाह ॥ २०१ ॥

**सजातीयविजातीयव्यावृत्तिश्च यतः फलम् ।**
**चेतनाचेतनजगद्भिन्नमासीत्ततस्सदा ॥ २०२ ॥**

**सजातीयेति।** तदुक्त जन्माधिकरणसुधाया 'लक्षण हि सजातीयविजातीय-व्यवच्छेदार्थ भवति । **तथा चानेन** लक्षणेन सजातीयाज्जीवाद्विजातीयाज्जडाच्च ब्रह्म व्यावर्तित सूत्रकारेण' इति ॥ २०२ ॥

**पितृत्वाच्च पतित्वाच्च तदभूदुत्तमोत्तमम् ।**
**पूर्वसूत्रे विमुक्त्यर्थं ज्ञेयत्वोक्तेर्न मायिकम् ॥ २०३ ॥**

'करोति पितृवद्विष्व पूर्णाशेषगुणात्मक·' इत्यनुव्याख्यान हृदि कृत्वाऽऽह **पितृत्वादिति । न मायिकमिति ।** 'अज्ञाना ज्ञानदो विष्णुर्ज्ञानिना मोक्षदश्च स ' इति पूर्वाधिकरणोदाहृतप्रमाणबलेनेति भाव ॥ २०३ ॥

**नेहनानेति वाक्याच्च गुण्यभिन्ना गुणाश्च ते ॥ २०४ ॥**

चेत्यनेन 'विज्ञानमानन्द ब्रह्मे'त्यादि तादात्म्यबोधकसामानाधिकरण्योक्ती समुच्चिनोति ॥ २०४ ॥

**गुणगुण्यादिभावाच्च बोध्यबोधकभावतः ।**
**तद्विशेषाश्च ते सूत्रकर्तृकर्मवदेव हि ॥ २०५ ॥**

गुणगुणिनौ परस्पर सविशेषाभिन्नौ । सत्यप्यभेदे भेदेन व्यवह्रियमाणत्वात् सूत्रकृत्सूत्रकर्मणी इव इति प्रयोगोऽभिप्रेत । न चासिद्धि । अभेदस्य प्रमितत्वात् । गुणस्य लक्षणतया बोधकत्वेन गुणिन परमात्मनो लक्ष्यतया बोध्यत्वेन इत्येव भेदेन व्यवहारविषयत्वात् । नापि दृष्टान्त साधनविकल । एकस्यैव बादरायणस्य सूत्रकृत्त्वेन बोधकतया सूत्रप्रतिपाद्यत्वेन तत्कर्मतया बोध्यतया इत्येव भेदेन व्यवहारविषयत्वादिति भाव । विशेषव्युत्पादने विस्तर गुणसौरभे ॥ २०५ ॥

**आनन्दमयसूत्रोक्तरीत्या सोऽपि सुखाकृतिः ।**
**निराकारः कथं कुर्याद् ध्वस्तहस्तकुलालवत् ॥ २०६ ॥**

**सूत्रोक्तेति ।** प्रियमेव शिर इत्यादिना शिर पाणिन्मध्यदेहपादवत्वोक्तिरीत्येत्यर्थ । आनन्दमयेत्युपलक्षणम् । जन्मादिसूत्रेत्यपि ग्राह्यम् । विमत करचरणाद्याकारवान् कर्तृत्वात् कुलालवत् । व्यतिरेकेण ध्वस्तहस्तादिकुलालवत् इति प्रयोगो ध्येयः । विपक्षे 'तदैक्षत' 'पद्भ्या भूमिरजायत' 'पातालमेतस्य हि पादमूलम्' इत्यादिश्रुतिविरोधा बाधका । एतेन 'शरीरजन्यत्वमितरत्राप्युपाधिरि'ति भगवत्पादोक्तिर्विवृता भवति ॥ २०६ ॥

**तस्मात्समस्तश्रुत्यर्थसूचनात्सूत्रमुच्यते ॥ २०७ ॥**

**समस्तश्रुत्यर्थेति ।** गुणपूर्णत्व, जगद्भिन्नत्व, गुणानाममायिकत्व, स्वगतभेदराहित्य, विशेष सुखाकृतित्व, इत्यादिश्रुत्यर्थेत्यर्थ ॥ २०७ ॥

**एवं यो वेत्ति सूत्रार्थं स बन्धात्परिमुच्यते ।**
**न चेत्सूत्रार्थविच्छेदाच्छिद्यते यमकिङ्करैः ॥ २०८ ॥**

**विच्छेदात्** विरुद्धभाषणात्, सूत्राणा पूर्वपक्षत्वकम्पनेन तत्प्रामाण्यविच्छेदाच्च । **यमकिङ्करैः** वायुकिङ्करै. । 'उद्गाढ पात्यमानास्तमसि तत इत. किङ्करै पङ्किले ते' इत्याद्युक्ते ॥ २०८ ॥

**विस्तरस्त्वस्य सर्वस्य भाष्यादिष्वेव दृश्यताम् ।**
**मूलशास्त्रार्णवोत्सिक्तबिन्दून्वन्दामहे वयम् ॥ २०९ ॥**

बिन्दून् एकदेशमात्रम् । वन्दामहे भक्त्या वर्णितवन्त ॥ २०९ ॥

**तस्मादुत्सूत्रभाष्यस्य कर्ता दुर्भाष्यकृद्ध्रुवम् ।**
**भाष्यकारस्तु भगवान्मध्वो विद्वच्छिरोमणिः ॥ २१० ॥**

**अतः परकृतं भाष्यं भाष्यं नाभूत्सभान्तरे ।**
**तस्मात् सूत्रोदितो ह्यर्थो निराकर्तुं न शक्यते ॥ २११ ॥**

तुरेवार्थ मध्व इत्यनेनान्वेति ॥ तेन तदतिरिक्ता सर्वे एकविंशति कुभाष्यकृत एवेत्यभिप्रैति ॥ २१० ॥ २११ ॥

**स च स्थित्यदनाभ्यां चेत्याह भेदं सयुक्तिकम् ।**
**द्विशाखासंमतिं भेदे भेदेनैनमधीयते ॥ २१२ ॥**

**उभयेऽपीति सूत्रेऽसौ भेदोक्त्या चान्यतां क्वचित् ।**
**भेदस्य व्यपदेशाच्चान्य इत्यत्र ससूत्रकृत् ॥ २१३ ॥**

इदानी सुस्पष्ट भेदसमर्थनपराणि सूत्राणि दर्शयति दशभि. श्लोकै । **सयुक्तिकमिति** । जीवब्रह्मणो· नैक्य इति प्रतिज्ञोपस्कर्तव्या । अदनतद्रहितस्थित्युक्ते इति हेत्वर्थ । यथोक्त भागवते सूत्रकृतैव । 'एकस्तयो खादति पिप्पलान्न अन्यो निरन्नोऽपि बलेन भूयान्' इति । अन्तर्यामिनये सूत्र ॐ शारीरश्चोभयेऽपि हि

भेदेनैनमधीयते ॐ इति। अन्तर्यामी शारीर जीवो न। आत्मन अन्तर इति माध्यन्दिनायनाः विज्ञानादन्तरो विविक्त इति काण्वाश्चैन जीव प्रकृतादन्तर्यामिणो भेदेनाधीयते। आत्मविज्ञानशब्दयोर्जीवार्थत्वादिति भाव । सूत्रे उभौ इत्यनुक्त्वा उभये अधीयते इति बहुवचनप्रयोगेण शाखाप्रवर्तकबहुपुरुषसमति सूच्यते। अन्तर्नये ॐ भेदव्यपदेशाच्चान्य ॐ इति सूत्रम्। विष्णुरिन्द्रादिभ्य अन्यश्च। कुत । इन्द्रस्यात्मा वायोरात्मानमित्यादौ इन्द्राद्यन्तर्यामित्वोक्त्या भेदव्यपदेशा-दित्यर्थ ॥ २१२ ॥ २१३ ॥

**क्वचिच्च भेदव्यपदेशादित्यूचे तथा क्वचित्।**
**भेदस्य व्यपदेशाच्चेत्याह सूत्रद्वयं त्विदम् ॥ २१४ ॥**

आनन्दमयनये ॐ भेदव्यपदेशाश्च ॐ इति सूत्रम्। यतो वाच इत्यादिना आनन्दमयस्य पूर्णानन्दत्वोक्ते। 'स यश्चाय पुरुषो यश्चासावादित्ये इत्यादावधिष्ठातृत्वादिना भेदस्य व्यपदेशात् इत्यर्थ । एव द्युभ्वादिनये ॐ भेदव्यपदेशात्' इति चकाररहित सूत्रान्तरम्। 'जुष्ट यदा पश्यत्यन्यमीशमस्य महिमानमि'ति भेदव्यपदेशादित्यर्थ । अत्र विगत अपदेश अपार्थकदेशना यस्मादिति व्युत्पत्त्या अतिसार्थकवचनत्व यद्वा विशिष्टश्चासौ अपदेशश्च इति व्युत्पत्त्या अपदेशशब्दस्य पृथगुपदेशादिति सूत्रानुसारेण उपदेशार्थकत्वमाश्रित्य विशिष्टोपदेश इति वा अर्थद्वय बोध्यम् ॥ २१४ ॥

**विशेषणेन भेदस्य व्यपदेशेन चेति च।**
**सयुक्तिकं भेदमाह यत्सार्वज्ञं विशेषणम् ॥ २१५ ॥**

अदृश्यत्वादिनये ॐ विशेषणभेदव्यपदेशाभ्या च नेतरो ॐ इति सूत्रम्। अत्र नये अन्योन्याभावात्मक लिङ्ग समन्वीयते। अन्योन्याभावस्य च सूत्रे गुणत्वोक्त्या न विष्णो· तत्स्वरूपता विरुद्धा। इत श्लोकत्रये वक्ष्यमाणसूत्रचतुष्टय तादात्म्यनिषेधकान्योन्याभावार्थकनञ्घटितत्वेन साक्षाद्भेदबोधकमिति विशेषो शोध्य । विशेषणेत्यादिसूत्रस्यायमर्थ·। चिदचित्प्रकृती विरिञ्चिरुद्रौ इत्येवमेकीकृतौ इतरौ, न अदृश्यत्वादिगुणकौ, कुत । 'य· सर्वज्ञ' इति विशेषणात्

परत परत्वविशेषणाच्च, 'तस्मादेतद् ब्रह्म' इति अन्यमीशमिति च विरिञ्चिरुद्रयोर्भेदव्यपदेशाच्च इति। अत्र च अचित्प्रकृतिभेदोक्त्या सर्वजडभेदसिद्धि। चित्प्रकृतिभेदोक्त्या कैमुत्येन सर्वमुक्तभेदसिद्धि विरिञ्चिरुद्रभेदोक्त्या कैमुत्येन सर्वससारिजीवभेदसिद्धि समर्थिता ज्ञातव्या ॥ ॥२१५ ॥

**शारीरोऽनुपपत्तेर्न नेतरोनुपपत्तितः।**
**इति सूत्रद्वये चोक्तो भिन्नो जीवस्सयुक्तिकम्॥ २१६ ॥**

सर्वगतत्वादिनये 'ॐ अनुपपत्तेस्तु न शारीर ॐ' इति सूत्रम्। अस्यार्थ सर्वत्रोच्यमान शरीरसम्बन्धी आदित्यो जीवो वा न। तयोरणुत्वेन सर्वगतत्वानुपपत्ते इति। अत्र जीवभेदोक्ति स्पष्टा। आनन्दमयनये ॐ नेतरोऽनुपपत्ते ॐ इति सूत्रम्। अस्यार्थ आनन्दमयादि इतर चतुर्मुखादिर्न मुक्तिहेतुज्ञानविषयत्वानुपपत्तेरिति। तथा च पूर्वपक्षीकृतहिरण्यगर्भरुद्रप्रकृतिसर्वजीवेभ्यो भेदसिद्धिर्निष्प्रत्यूहा ॥ ॥२१६ ॥

**यन्न प्रतीके न हि स इति सूत्रे स सूत्रकृत्।**
**प्रतीको ब्रह्म नैवेति स्पष्टमाचष्ट भिन्नताम् ॥ २१७ ॥**

**प्रतीकाख्या हि नामादिप्राणपर्यन्तदेवताः।**
**देवतैक्यस्य चायोगे नरैक्ये का कथा ततः॥ २१८ ॥**

ॐ न प्रतीके न हि स ॐ इत्यस्यार्थ, प्रतीके नामादिप्राणपर्यन्तदेवतासु ब्रह्मेत्युपासन न कार्यम्। कुत. स विष्णु· प्रतीक न भवति। अतस्तयोरैक्याभावान्न तयोपास्ति कार्येति। तदितरजीवैक्यनिषेधस्तु कैमुत्यसिद्ध इति वक्ति देवतेति ॥ ॥२१७ ॥ २१८ ॥

**मुक्तोपसृप्यतामाह तद्योगं शास्ति मुक्तिगम्।**
**सुप्त्युत्क्रान्त्योर्भिदामाह स्पष्टं जीवः परात्पृथक् ॥ २१९ ॥**

भेदस्य पारमार्थिकत्वसिद्धये मौक्तभेदसाधकसूत्राण्याह त्रिभि **मुक्तेत्यादिना**। ॐ मुक्तोपसृप्यव्यपदेशात् ॐ इति सूत्रस्यायमर्थ । अमृतस्यैष सेतुरिति मुक्तोपसृप्यत्वव्यपदेशान्न प्रधान वायुरुद्रजीवा वा द्युभ्वाद्यायतन किं तु विष्णुरेव इति । ॐ अस्मिन्नस्य च तद्योग शास्ति ॐ इति सूत्रस्यायमर्थः । अस्य इतरस्य जीवस्य । अस्मिन् प्रकरणे । तेनानन्दमयेन ब्रह्मणा सहयोग सम्बन्ध मुक्तावपि 'सोऽश्नुते' इति श्रुति शास्ति इति । सम्बन्धश्च भेदव्याप्त इति भेदसिद्धि । ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ इति सूत्रस्यायमर्थ । सुषुप्त्युत्क्रान्तिप्रकरणयो प्राज्ञेनात्मना सपरिष्वक्त इति प्राज्ञेनात्मना अन्वारूढ इति च जीवेशयोर्भेदेन व्यपदेशादिति । तथा च स्वप्नादिद्रष्टा विष्णुरेव न जीव इति ॥ २१९ ॥

**उपदेशादिति प्राह फलाध्यायेऽपि स प्रभुः ।**
**मुक्तं जीवं च संपद्याविहायेति पृथग्जगौ ॥ २२० ॥**

उपदेशादित्यनेन गृहीतस्य ॐ पृथगुपदेशात् ॐ इति सूत्रस्यायमर्थ । जीव परमात्मना पृथक् भिन्न न त्वभिन्न । कुत । उपदेशात् भिन्नोऽचिन्त्य परमो जीवसङ्घादिति श्रुते । यतस्त्वसौ नित्यमुक्तो ह्यय च बन्धान्मोक्ष तत एवाभिवाञ्छेदिति वाक्यशेषान्मुक्तिप्रदत्वोक्त्या भेदस्य तात्त्विकत्वसिद्धि । ॐ सपद्याविहाय स्वेन शब्दात् ॐ इति सूत्रस्यायमर्थ । ज्ञानी परब्रह्म सपद्य प्राप्याविहाय परब्रह्मानतिक्रम्य स्वेनरूपेणावस्थित सन् भोगान्भुक्ते । एत सेतुमाप्यैतेनैव सेतुना मोदते इत्यादिश्रुतेरिति ॥ २२० ॥

**जगद्व्यापारवर्जं त्वित्यत्र सावधिवैभवम् ।**
**मुक्तस्याह हरिं सर्वजगज्जन्मादिकारणम् ।**
**वक्ति स्मादौ ततोऽप्यन्यो मुक्तानां परमा गतिः ॥ २२१ ॥**

**सावधीति** सृष्ट्यादिव्यापारवर्जं न तु सृष्ट्यादिकामानपि मुक्त॰ आप्नोति । विष्णुस्तु नैवमित्याह **हरिमिति** । आदौ जन्मादिसूत्रे । 'मुक्ताना परमा गति॰' इत्यनेन मुक्तभेदे भारतमपि प्रमाणयति ॥ २२१ ॥

**भेदमाघोषयमास सूत्रे सूत्रे स सूत्रकृत्।**
**पञ्चधा यो भिनत्तीदं स भेदः केन वार्यते ॥ २२२ ॥**

भेद जिज्ञासानये गुणपूर्णत्वलक्षणोक्त्या प्रतिज्ञातम्। **आघोषयामास**= अध्यायचतुष्टयेन समर्थयामास। समन्वयस्य तत एव निर्दोषत्वस्य जीवेषु साधकत्वस्य, विष्णौ फलप्रदत्वस्य च स्थापनादिति भाव । इद सेश्वर जगत्। **पञ्चधा भिनत्ति** 'जीवेशयोर्भिदा चैव जीवभेद- परस्परम्। जडेशयोर्जडाना च जडजीवभिदा तथा। पचभेदा इमे नित्या सर्वावस्थासु सर्वदा' इति प्रमाणोक्तरीत्या भेदपञ्चकवत्त्वेन समर्थयति। केन वार्यते इत्याक्षेप । तदुक्त न्यायसुधाया 'अनेन लक्षणेन' सजातीयाज्जीवाद्विजातीयाज्जडाच्च ब्रह्म व्यावर्तित सूत्रकारेण। जीवैक्यनिराकरणसूत्रस्यारभ कथ जीवैश्वरैक्यवादिना स्यात्' इति। अद्वैतभाष्यरीत्याऽपि सर्वेषा सूत्राणा भेदपरत्व श्रीसत्यध्यानतीर्थश्रीचरणप्रणीत 'भेदपराण्येव खलु ब्रह्मसूत्राणि' इति ग्रन्थादवसेयम्॥ २२२ ॥

**व्यासविस्तृतमूर्तीनां श्रुतीनां तत्पदे पदे।**
**जीवेशभेदे तात्पर्यमितिहासपुराणयोः ॥ २२३ ॥**

**श्रीव्यासकृतयोर्नित्यं महातात्पर्यमत्र हि।**
**सूत्रानुसारि यत्सर्वं शास्त्रमित्यतिमङ्गलम् ॥ २२४ ॥**

**विस्तृतेति।** 'चतुर्धा व्यभजत्ताश्च चतुर्विंशतिधा पुन' इत्याद्युक्तरीत्या विभक्तेत्यर्थ । यद्वा सूत्रव्युत्पादितन्यायानुग्रहेण निर्णीतार्थकेत्यर्थ । पदे पदे= अपर्यायानन्तयौगिकपदानाम्। **तात्पर्यमिति।** समर्थित चैतत् 'गुणोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्य' इति प्रतिज्ञापूर्वक भगवत्पादै· तत्त्वनिर्णयादौ । श्रीव्यासकृतयोरिति हेतुगर्भम्। समानकर्तृकत्वादन्योन्यसवादवतोरिति भाव । **सूत्रानुसारीति।** 'शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णय' इत्युक्ते । **अशेषं** पौरुषेयापौरुषेयसमस्तसदागमजातम्। **अतिमङ्गलं** 'मङ्गलाना च मङ्गल' इत्युक्तपरममङ्गलविष्णूत्कर्षतात्पर्यक अत एव मोक्षरूपमङ्गलमहापुरुषार्थप्रद च ॥ ॥२२३ ॥ २२४ ॥

**स्वस्मिन्नध्यात्मसंबन्धभूयस्त्वादेव केवलम् ।**
**प्राणोऽहमिति शक्रेण प्रोक्तं तत्प्राणतास्य न ॥ २२५ ॥**

**इत्यैक्यवचसां सूत्रे लक्षणागतिरीरिता ।**
**सोऽहं ब्रह्माहमित्यादिरीत्या शाखाप्रलम्बिनाम् ॥ २२६ ॥**

इदानी मुखत ऐक्यपरतया प्रतीयमानाना श्रुतीना सूत्रे अन्यार्थपरत्वस्थापनपूर्वक गतिसमर्थनेन नैक्यमिष्ट सूत्रकृत इत्याह **स्वस्मिन्नित्यादिना**। तथा हि, 'न वक्तुरात्मोपदेशादिति चेन्न अध्यात्मसबन्धभूमा ह्यस्मिन्' इति सूत्रस्यायमर्थ । वक्तु बृहतीसहस्रवक्तुर्विश्वामित्रस्य इन्द्रेण प्राणो वाऽहमस्मि ऋषे इति आत्मन एव प्राणतयोपदेशान्न प्राणो ब्रह्मेति चेन्न । कुत । हि यस्मात् अस्मिन् प्रकरणे अध्यात्म देहेषु विष्णुदेहभूतेषु विश्वामित्रादिषु सबन्धभूमा सबन्धबाहुल्य व्यपदिश्यते यत अत प्राणो विष्णुरिति। यद्वा अस्मिन्निन्द्रे अधिकात्मन सबन्धभूमा आवेशबाहुल्यम्। हि यस्मात् अस्ति अतस्तदपेक्षया प्राणोऽहमस्मि इत्युक्तिरिति। तथा चान्तर्यामिदृष्ट्यैव ऐक्यव्यपदेश न त्वेव स्वरूपैक्यनिमित्तक इति भाव । सन्निधानमेव लक्षणाबीजम्। अस्य वाक्यस्य ऐतरेयभाष्योक्तरीत्याऽर्थान्तर भावदीपे वर्णितमप्यत्रानुसन्धेयम्। सोऽहमस्मि, ब्रह्माऽहमस्मि, इत्यादिवाक्येषु, एतज्जातीयेषु सर्वत्र इयमेव गतिरनुसरणीयेत्याह **स इति**। तदुक्त अन्तरनये भाष्ये, 'अन्तर्यामिणमीशेशा अपेक्ष्याह त्वमित्यपि ॥ सर्वे शब्दा प्रयुज्यन्ते सति भेदेऽपि वस्तुषु' इति ॥ शाखाशब्देन वाक्याना अपौरुषेयत्व सूचयति। तेन विरोधेऽर्थान्तरकथनमेव न्याय्य न तु पुनरन्यतरस्याप्रामाणिकत्व-कथन इति ज्ञायते । तदुक्त तत्त्वोद्योते 'वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना' इति । वेदेऽपि अमुख्यवृत्त्याऽर्थान्तरवर्णनस्यौचित्य कर्मनिर्णयटीकाया समर्थितमिति भाव ॥ २२६ ॥

**वक्तुरात्मोपदेशेपि शक्रस्यात्मा हरिर्न चेत् ।**
**आत्मेति तूपगच्छन्तीत्यत्र जीवात्मनः कथम् ।**
**हरिणैक्यं वदेद्व्यासो न हि ते शक्रतोधिकाः ॥ २२७ ॥**

**ईषदध्यात्मसंबन्धात्तादृग्वाक्यप्रवर्तनम् ।**
**असूचयद्धि सूत्रेऽस्मिंस्तेनैक्यं न क्वचित्तव ॥ २२८ ॥**

एव वक्तुरित्यादिसूत्रे स्वरूपैक्य निराकृत्य अन्तर्याम्यैक्य स्थापयता सूत्रकृता अन्यत्र 'आत्मेति तूपगच्छन्ति' इत्यादि सूत्रेष्वपि अद्वैतिभि कथ्यमान स्वरूपैक्यपर. सूत्रार्थ पराकृत इत्याह **आत्मेति** ॥ त्रैलोक्याधिपत्यभिमत देवेन्द्रोऽपि चेन्न ब्रह्म किंतु तत्सन्निधानविशेषेणैव स्वयोग्योत्कर्षवान् का कथा तदा तदवराणा क्षुद्रजीवाना तदैक्यवार्ताया इति भाव । इद च उपलक्षणम् । अस्मिन्नेव सूत्रे अध्यात्मशब्देनैव आत्मशब्दोदितविष्णुदेहभूतविश्वामित्रादिसर्वजीवेषु सबन्ध-बाहुल्यस्य 'प्राणस्त्व प्राण सर्वाणि भूतानि' इति वाक्यार्थतया व्यवस्थापिततत्वाच्चेति बोध्यम् ॥ २२७ ॥ २२८ ॥

**परमात्मेति तद्ब्रह्म जानन्ति ज्ञापयन्ति च ।**
**इत्यर्थो मे सशब्दो यत्स्वभावे परमात्मनि ॥ २२९ ॥**

आत्मेतीति सूत्रे आत्मशब्द परमात्मपर एवेत्याह **परमात्मेति** ॥ **स्वभावे** स्व स्वतन्त्रो भाव परमात्मा तस्मिन् । सूत्रित च 'द्युभ्वाद्यायतन स्वशब्दात्' इति सूत्रे आत्मशब्दस्य परमात्मार्थकत्वम् । अङ्गीकृत च अद्वैतिभाष्यकृता तथैव । अद्वैतिनस्तु परमात्मेति शब्दमध्याहृत्य आत्मशब्दस्य जीवार्थ कल्पयित्वा ऐक्य सूत्रस्यास्यार्थ वर्णयन्ति । तेषामध्याहारो दोष । एव स्वव्याघातमपि अचेतयता आत्मशब्दस्य जीवरूपामुख्यार्थत्वकल्पन च । अस्य सूत्रस्य अद्वैत्यभिमतार्थ-स्यायुक्तता 'भेदपराण्येव खलु ब्रह्मसूत्राणि' इति ग्रन्थे निपुणतरमुपपादिता द्रष्टव्या ॥ ॥२२९ ॥

**यस्सत्त्वाच्चावरस्येति सत्तां वक्तीतरस्य च ।**
**अप्रधानस्य सर्वस्य स मिथ्यात्वं कथं वदेत् ॥ २३० ॥**

ॐ तदनन्यत्वमारम्भणशब्दादिभ्य ॐ इति सूत्रस्यायमर्थ । स्वतन्त्रसाधनस्य ब्रह्मानन्यत्वम् । न ततोऽन्यत्वम् । कुत । किं स्विदासी-

दधिष्ठानमारम्भण कतमत्स्वित्कथासीदिति स्वतन्त्राधिष्ठानाद्याक्षेपकशब्दात्। अपरतन्त्रत्वात् स्वतन्त्रत्वात् साधनसत्तादिप्रदत्वादित्यादिपदोक्तव्यतिरेकिहेतुभ्यश्च इति। इद सूत्र जगन्मिथ्यात्व वक्तीति मायावादिन । तदेतन्न केवल जगत भेदस्य च साधकै· पूर्वोदाहृतसूत्रैर्विरुद्ध कि तु एतदधिकरणीयगुणसूत्रेन सत्वाच्चावरस्येति सूत्रेणेत्याह **स इति**। इद खलु सूत्र प्रधानसूत्रोक्तार्थे हेतुमाह । यद्यपि अद्भय सभूतो हिरण्यगर्भ इत्यादि श्रुत्यन्तरेषु ब्रह्मेतरस्य अबुपलक्षितस्य भूतादिसाधनजातस्य सत्त्व कथ्यते तथाऽपि तत्सर्व अवरमेव न तु पुन प्रधानमिति स्वतन्त्रसाधनस्य न ब्रह्मणोऽन्यत्वमिति। तथा च भूतादिसाधनजातस्य सुस्फुट सत्यत्व श्रावयन्ती तदवरत्वकथनमुखेन ब्रह्मभेद च प्रतिपादयन्ती इय सूत्रकृदुक्ति कथ न अद्वैतस्य प्रतिकूला भवेदित्याह **कथमिति**॥ य सूत्रकार स कथ वदेदित्यन्वय ॥ २३० ॥

**स्वतन्त्रकारणस्यान्यस्येशो शून्यत्वतःपरम्।**
**तदनन्यत्वमप्याह क्वचित्सूत्रे स सूत्रकृत्॥ २३१ ॥**

शून्यत्वत अभावात्। पर केवलम्। न तु पुन इतरसाधनस्य स्वरूपेणाभावात्॥ २३१ ॥

**यदुच्चस्य न नीचैक्यं यतस्सच्च न बाध्यते।**
**अतोऽधिकरणेऽस्मिंश्च मिथ्यात्वादेः कथापि न॥ २३२ ॥**

ब्रह्मणि 'तत्सत्य' इतिवत् प्रपञ्चेऽपि 'विश्व सत्य' इति सेत्सतीत्याह **यत इति**। यथोक्त मायिभाष्ये यथा च कारण ब्रह्म त्रिषु कालेषु सत्त्व न व्यभिचरति एव कार्यमपि जगत् त्रिषु कालेषु सत्व न व्यभिचरतीति॥ २३२ ॥

**अप्रधानस्य जगतस्सत्वं सिद्धमभून्मम।**
**हे(तू)तुं करोति यद्व्यासस्तत्सत्त्वं केन नेष्यते॥ २३३ ॥**

इतश्चैवमित्याह **हेतुमिति**। न हि कोऽपि प्रेक्षावान् स्वप्रतिज्ञाया हेतूकृतस्य सत्त्वस्य स्वरूपासिद्धि सहत इत्याह **यदिति**॥ २३३ ॥

**किं च भोक्तुः परात्मत्वापत्तेस्सोप्यविभागवान् ।**
**इति चेन्नेति यां पूर्वपक्षीकृत्य निषेधति ॥ २३४ ॥**

**अविभागाभिधां जीवब्रह्मणोरेकतां तु ताम् ।**
**सिद्धान्तयति यस्सूत्रभाष्यकृत्किल दोष्यसौ ॥ २३५ ॥**

ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ इति सूत्रस्यायमर्थ । भोक्तुर्जीवस्य मोक्षे ब्रह्मत्वापत्ते परेऽव्यये सर्व एकीभवन्ति इत्यादिषु श्रवणात् तयोरविभागो भेदाभाव इति चेन्न श्रौतस्यैकीभावप्रयोगस्य लोकवत् सादृश्यैक्यमत्यैक्यनिमित्तादिनैव स्यात् उपपत्ते न स्वरूपैक्यपरत्वमिति । एव चात्रैक्य पूर्वपक्षीकृत्यैव सूत्रे तन्निषेधस्य कण्ठत सिद्धान्तितत्वात् न कापि ऐक्य सूत्रार्थ अत एव न श्रौतार्थोऽपीत्याह **किं चेति** ॥ यानित्यस्य तामिति उत्तरश्लोकस्थेनान्वय । अयमर्थ । मायावादिन खलु अत्र अभिदाया दूषणमेव सूत्रसिद्धान्त इति अभ्युपगच्छन्ति । तथाऽपि स अविचारितरमणीयो व्यावहारिक कृपणधिया स्थूलबुद्धीना समाधानार्थमेवाभिहित इति निन्दित्वा परमार्थत अभेदमेवार्थं उत्तरसूत्रार्थतया वर्णयन्ति । असौ दोषी सूत्रार्थनिन्दक भाष्यकृत् किलेत्यपहास ॥ २३४ ॥ २३५ ॥

**भोक्त्रापत्तेस्तदविभागश्चेत्स्याल्लोकवत्त्विति ।**
**एकीभवन्तिवाचाऽत्र प्राप्तमुक्तैक्यशङ्कया ॥ २३६ ॥**

**एकीभवन्ति गोष्ठेषु गाव इत्यादि लोकवत् ।**
**स्यादित्याह समाधानं तेन मुक्तोऽपि नैक्यवान् ।**
**इति प्राप्तमतो भेदं परमार्थीचकार सः ॥ २३७ ॥**

एव स्वसिद्धान्तित भेदमर्थं विशदयन् मुक्तावभेद निराकृत्य स्थापितो भेद, परमार्थ इत्येव सिद्ध्यतीत्याह द्वाभ्या **भोक्त्रेत्यादिना** ॥ २३६ ॥ २३७ ॥

**तस्माद्भेदोऽप्रतिद्वन्द्वस्तत्र तत्रोदितो भवेत्।**
**मुक्तोपसृप्यताद्युक्त्या स्थिरीचक्रे पुनश्च तम्॥ २३८ ॥**

युक्त्या= द्युभ्वाद्यायतन विष्णुरेव न रुद्रादि अमृतस्यैष सेतु इति मुक्तोपसृप्यत्वयुक्त्या ॥ २३८ ॥

**चेतनाचेतनजगद्ब्रह्मैक्याद्भोग्यवस्तुनः।**
**भोक्तृतापि भवेत्तेन विभागो भोक्तृभोग्ययोः॥ २३९ ॥**

**न स्यादिति यदीहार्थश्शङ्काग्रन्थस्य कथ्यते।**
**तर्हि नेति समाधा(त्रा)जडैक्यं नैव कथ्यते॥ २४० ॥**

**इत्येव वाच्यं शङ्कां तामङ्गीकृत्य समादधत्।**
**नाभिप्रैतीममर्थं स सूत्रकृद्वदतांवरः॥ २४१ ॥**

पराभिमतमर्थमनुवदति **चेतनेति**। जगति चेतन भोक्तृ अचेतन भोग्यं इति तावद्विभागेन व्यवहार। न स युक्त। उभयोरपि ब्रह्मोपादानकत्वेन उपादानोपादेययोश्चाभेदेन ब्रह्मैक्यमापतितम्। एव यत् यदभिन्नाभिन्नम् तदभिन्नमिति न्यायेन भोक्तृभोग्ययोरप्यन्योन्यमभेदप्राप्त्या विभागेन अय भोक्ता इद च भोग्य इति विभागेन व्यवहारो न स्यादिति, शङ्काभागस्य सूत्रखण्डस्यार्थ। दूषयति तर्हीति। एव चेत् शङ्काग्रन्थस्याशय तर्हि जडाजडयोरैक्यमेव नास्ति अतो घटते लोकव्यवहार इत्येव स्वमतरीत्या परिहारो वक्तव्य। न तु पुन स्वसिद्धान्तस्यापि विप्रतीय जडाजडैक्यमङ्गीकृत्य लोके समुद्राभिन्नानामपि फेनवीचीतरङ्गबुद्बुदादीना यथा न इतरेतरभावापत्ति तथा स्यादत्रापीति समाधानसूत्रखण्डस्यार्थवर्णन अतिस्थवीय इति ॥ २३९ ॥ २४० ॥ २४१ ॥

**मम तु प्रापकीभूतवेदस्योक्तस्य का गतिः।**
**इति शङ्कां समाधातुं लोकदृष्टिमदर्शयत्।**
**ऐक्यं तु नोररीचक्र इति सर्वं समञ्जसम् ॥ २४२ ॥**

**तस्मादनेन सूत्रेण पराभेद्येन सूत्रकृत्।**
**बबन्धाद्वैतिनां कण्ठं वाग्बन्धायेति मे मतिः ॥ २४३ ॥**

**वेदस्य** 'परेऽव्यये सर्व एकीभवन्ति' 'यत्र तु सर्वमात्मैवाभूत्' इत्यादिकस्य। **लोकदृष्टि** 'स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि। सादृश्ये चैक्यवाक् सम्यक् सावकाशा' इत्यनुव्याख्यानोक्ताम्। तथा च विश्वतोमुखत्वादिद सूत्र मुक्तौ अभेदवचनवत्प्रतीयमानाना सर्वेषा वाक्याना मतिकथनद्वारा मुक्तानामपि कर्तृत्वभोक्तृत्वादिक समर्थ्य पारमार्थिक भेद व्यवस्थापयतीति भाव। 'यत्र तु' इति वाक्येऽपि तदित्यानुगुण्येन यत्रेत्यस्य यदित्यर्थ। तथा च सर्वमात्मैवाभूदिति यत् तत् केन मानेनेत्याक्षेप। क पश्येदित्यादि तु तर्कमुद्रया प्रवृत्त विपर्ययपर्यवसानेन कर्तृत्वभोक्तृत्वादिक व्यवस्थापयत्येव। यद्वा 'यत्र तु सर्वमात्मैवाभूत्' इत्यस्य आत्मप्रेरणामन्तरेण किमपि नाभूदित्यर्थ। केन क स्वातन्त्र्येण पश्येदित्यर्थ इत्यादिकमूह्यम् ॥ २४३ ॥

**एवं च श्रुतिसूत्रादौ न क्वाप्यैक्यं विविक्षति।**
**सौत्रयुक्तिशरव्रातघातभीरु पदे पदे ॥ २४४ ॥**

ऐक्य कर्तृ। **विविक्षति=** प्रवेष्टु इच्छति। शक्तितात्पर्यविषयो भवति। प्रामाणिका न क्वापि सूत्रार्थनयैक्य अङ्गीकुर्वति। तत्र हेतु **सौत्रेति**। अत साधूक्तमभियुक्तै "भेदपराण्येव खलु ब्रह्मसूत्राणि" इति ग्रन्थप्रणेतृभि ॥ २४४ ॥

**तद्गुणत्वात्तु तत्त्वोक्तिरित्यन्यत्र प्रलम्बिनाम्।**
**तत्त्वमस्यादिवाक्यानां गौणीं गतिमसूत्रयत् ॥ २४५ ॥**

ॐ तद्गुणसारत्वात्तु तद्व्यपदेश प्राज्ञवत् ॐ इति सूत्रस्यायमर्थ। परमात्मगुणसदृशानन्दादिगुणस्वरूपत्वादेव न त्वभेदात्। जीवस्य पराभेद-व्यपदेश। अत तत्त्वमसि इत्यादिश्रुतिभ्यो नाभेदोऽर्थ ग्राह्य। प्राज्ञस्य ब्रह्मणो यथा जगदभेदव्यपदेश· 'सर्वं खल्विद ब्रह्म' इत्यादिश्रुतिष्विव इति। यथोक्तमनुव्याख्याने चेतनत्वादिसादृश्य यद्यभेद इतीष्यते। अङ्गीकृत तदस्माभिर्न

स्वरूपैकता क्वचित् इति । विशेषणविभक्तिमात्रस्य गौणत्वम् । न तु पुन· परेणेव प्रातिपदिकद्वयस्य लक्षणावृत्तिरिति तर्कताण्डवोक्तिरत्रानुसन्धेया ॥ २४५ ॥

**इदं परास्त्रमन्त्राणामुपसंहारकौशलम् ॥ २४६ ॥**

**उपसंहारः** तदभितार्थात्प्रच्यावनेन सिद्धान्तार्थपरत्वेन समर्थनम् । अश्वत्थाम्ना प्रयुक्तस्य अर्जुनिनेवेति हृदयम् ॥ २४६ ॥

**तद्गतद्गश्रुतिशतं साक्षीकृत्य स सूत्रकृत् ।**
**जीवेशभेदसद्रत्नं सूत्रे सूत्रेऽप्यसूत्रयत् ॥ २४७ ॥**

**तद्गतद्गेति ।** तत्तदधिकरणविषयवाक्येत्यर्थ । 'पृथगित्यत्र पूर्णता' इत्युक्तमप्यनुसन्धेयम् । एतेन बहुत्वनिमित्तक प्राबल्य द्योतितम् ॥ २४७ ॥

**इदं च स्वास्त्रमन्त्राणामभ्यासेन पुनः पुनः ।**
**शक्तेरुत्तेजनं तस्मात्तस्याग्रे कस्य शूरता ॥ २४८ ॥**

**तस्मात्** अभ्यासरूपलिङ्गेन निर्णीततात्पर्यकत्वात् ॥ २४८ ॥

**मुक्तोपसृप्यताद्युक्त्या यस्माद्भेदं स(मौ)युक्तिकम् ।**
**चक्रे तेन निराचक्रे मिथ्यात्वाख्यशराहतिम् ॥ २४९ ॥**

**मुक्तोपसृप्येति ।** मिथ्यात्वेति । मौक्तस्य मिथ्यात्वायोगादेवेति भाव ॥ ॥२४९ ॥

**मोक्षार्थब्रह्ममीमांसामारभ्य स पदे पदे ।**
**यतो निरणयद्भेदमतस्तत्त्वं महद्धि तत् ॥ २५० ॥**

**मोक्षार्थमिति ।** तेन परैरुच्यमान क्वचित् पूर्वपक्षसूत्रत्वं पराचष्टे । **अतः** प्रतिसूत्र निर्णयात् **तत्** विष्णो· सर्वोत्तमत्व **महत् तत्त्वं** महातात्पर्यविषयः ॥ २५० ॥

**सूचनात्खलु तत्सूत्रं तादृशैस्सूत्रसञ्चयैः ।**
**इत्थमाघोषितो योऽर्थस्तत्तत्त्वं तत्त्ववादिनाम् ॥ २५१ ॥**

**आघोषितः** तात्पर्यविषयत्तया निर्णीत ॥ २५१ ॥

**गुणैर्लिङ्गाभिधैर्यस्मात्प्रतिसूत्रं विपक्षिणः ।**
**प्रत्याक्षिपत्स भगवांस्तद्ब्रह्म गुणबृंहितम् ॥ २५२ ॥**

**लिङ्गाभिधैः** समन्वये हेतुकृतै । **गुणैः** परोवरीयस्त्वादिभि । इदमुपलक्षणम् । अत्तृत्वाधिकरणे सुधोक्तरीत्या, समन्वितानामनन्तगुणाना भगवत्स्वरूपलक्षणोक्त्या चेति ध्येयम् । **गुणबृहितम्** ब्रह्मशब्दनिर्वचन-लब्धानन्दगुणपरिपूर्णम् ॥ २५२ ॥

**किञ्च शाणशितैर्बाणैः प्रत्यर्थिमुखमुद्रणम् ।**
**कुर्वन्नामंस्त बाणाग्र्न्यूनतां स रणाग्रणीः ॥ २५३ ॥**

**प्रत्यर्थिमुखमुद्रणम्** नाणुरतच्छ्रुतेरिति चेन्न इतराधिकारात् इत्यादिषु प्रतिपक्षप्रतिक्षेपम् । न्यूनता पूर्वपक्षसूत्रतया परोक्ता अतत्वावेदकताम् ॥ २५३ ॥

**अतस्सदाप्यबाध्यत्वं गुणानां व्यासशासनात् ।**
**साध्यं स्वयमसिद्धेन कस्साधयति पण्डितः ॥ २५४ ॥**

**शासनात्** सूत्रैर्निर्णयात् । **कः साधयेत्** प्रतिवाद्यसिद्धेरिति भाव । तदुक्त 'असत· साधकत्व तु न सिद्ध प्रतिवादिन ' इति ॥ २५४ ॥

**यस्मादारोपितो हेतुस्साध्यमारोपयेत्परम् ।**
**यक्षानुरूपो बलिरित्युक्तं वाक्यमनुस्मर ॥ २५५ ॥**

**आरोपयेत्** त्वद्रीत्याऽपि स्वसमानसत्ताक साध्यमेव साधयेत् । तदुक्तमनुव्याख्याने 'तस्माद्व्यवहृति सर्वा सत्येत्येव व्यवस्थिता' इति ।

साध्यसाधनयोर्मिथ्यात्वे बाधासिद्धी दुष्परिहरे इति निष्कर्ष । अत्र विस्तर सुधाया कथकवादे ॥ २५५ ॥

**शब्दानां मुख्यवृत्तिं च शब्दैः सिद्धान्तयन् जगौ ।**
**न चेद्धेतोरनैकान्त्यं तद्ब्रह्मणि न लक्षणा ॥ २५६ ॥**

**न चेत्** अमुख्यवृत्त्याश्रयण चेत् । **अनैकान्त्यं इति** । साध्यधर्मस्य पक्षादन्यत्र सिद्ध्यापत्त्या तत्र विपक्षे वर्तमानस्य हेतोरनैकान्त्यस्य आपातादिति भाव । तदुक्त जन्माधिकरणसुधाया 'लक्षणादिना वृत्तौ वाच्यार्थगुणालाभात् । वाच्ये तद्गुणप्रसङ्गाच्च' इति । पक्षे साध्याभावनिश्चयेन बाधोऽपि स्यादित्यपि बोध्यम् ॥ ॥२५६ ॥

**मुख्यान्वयि न चेत्कस्मात्समन्वयमसूत्रयत् ।**
**ब्रह्मसंबन्धतश्शक्रे प्राणनाम कुतो वदेत् ।**
**वेदैश्च सर्वैर्वेद्योऽहमेवेत्याह कुतः प्रभुः ॥ २५७ ॥**

'समिति ह्युपसर्गेण परमुख्यार्थतोच्यते' इति भगवत्पादवचनमनुरुध्याह **मुख्येति** । **कुत इति** हीनशक्त्या कथञ्चित्प्राणशब्दसभवादित्याशय । **एवेति** । तेन परममुख्यवृत्तेरेव अवधारणादिति भाव ॥ २५७ ॥

**तत्तन्नामोक्तधर्माणां यदि ब्रह्मणि नान्वयः ।**
**रूपमात्रस्यैकनाम्ना सिद्धेश्शास्त्रमनर्थकम् ॥ २५८ ॥**

स्वरूपमात्रस्य लक्षण असभवि । सर्वशब्दावाच्ये लक्षणाऽयोगादिति भगवत्पादोक्तदोषे सत्येव दोषान्तरमाह **अनर्थकमिति** । समर्थितमानर्थक्य 'सत्यज्ञानादिकेऽप्येव न व्यावृत्त्या प्रयोजनम्' इत्यनुव्याख्यानन्यायसुधायाम् ॥ ॥२५८ ॥

**द्युभ्वाद्यायतनत्वाद्या धर्मास्सर्वत्र वर्णिताः ।**
**निर्विशेषं क्व मीमांसा क्वेयं सल्लिङ्गशब्दभूः ॥ २५९ ॥**

किं च निर्विशेषं च मीमांस्यं चेति व्याहतमित्याह **क्व केयमिति।** तदुक्तं सुमध्वविजये विगीतं न विचार्यं स्यान्न भाव्यं न फलप्रदम्। शून्यं ब्रह्माधमद्वैतं विधिधीगोचरो न यत्' इति ॥ २५९ ॥

**अतोऽनन्तगुणं ब्रह्मेत्येव सूत्रकृतो मतम्।**
**मुक्त्यर्थं कथिता धर्मा मिथ्येत्यपि न शोभते ॥ २६० ॥**

उपसंहरति **अत इति** ॥ २६० ॥

**अतस्सूत्राक्षरं मूलं न ते शास्त्रस्य दृश्यते।**
**तन्मन्ये प्रक्रियामूलं त्वत्पूर्वार्जितदुष्क्रियाम् ॥ २६१ ॥**

दुष्क्रिया मणिमज्जन्मनि समर्जिता परतत्त्वप्रद्वेषरूपाम्। तदुक्तं 'दुष्कृती निष्क्रियार्थम्। चेन्न भूचक्रमेत्य' इत्यादि वायुस्तुतौ ॥ २६१ ॥

**तत्त्वस्यावेदकं किञ्चित्किञ्चित्तत्त्वस्य वेदकम्।**
**इति वेदेषु यद् द्वैधं न तत्सूत्रकृतो मतम् ॥ २६२ ॥**

तत्त्वस्य अवेदकमिति विग्रहः। अतत्त्वावेदकमिति यावत्। किञ्चित्तत्त्वस्य वेदकं इति मुखतः। तन्मते तत्त्वस्य अवेद्यत्वात्। अन्यथा तस्य इतरावेद्यत्वरूपस्वप्रकाशत्वहानेः। दृश्यत्वहेतोस्तत्र व्यभिचारापत्तेश्च। तदुक्तं सुमध्वविजये 'यः तत्त्वावेदकं वेदं वेदान्तं, वेददूषकः। तत्त्वस्यावर्णनीयत्वात्स तत्त्वावेदकं कथमि'ति। एवं मणिमञ्जर्यामपि 'अतत्त्वावेदका प्रायो वेदाः केचिन्निरर्थकाः। इति वेदान्तवादः स्यात् कथं वादस्तदन्तकः' इति। अङ्गीकृतं च महावाक्यानां अबोधकत्वमेवाद्वैतिभिः। 'ज्ञानं च तस्मिन् परात्मभावनिवृत्तिरेव' (बृ. शा. भा) इत्यादिना। विस्तृतं चैतत् 'भेदपराण्येव खलु ब्रह्मसूत्राणि' इति ग्रन्थे। (पु. ७६) ॥ २६२ ॥

**एकस्यामानता स्याच्चेत्कुतस्सूत्रकृतो वद।**
**श्रुतीनामविरोधाय द्वितीयाध्यायविस्तरः ॥ २६३ ॥**

**अविरोधायेति।** अन्यतरश्रुते अतत्त्वावेदकत्वोक्त्यैव विरोधशमन-सभवात्। 'गृष्ट्योर्मिथो विरोधे तु' इत्यादिना गुणसौरभोक्तरीत्यैवेति भाव ॥ ॥२६३॥

**जीवेशभेददार्ढ्योक्तेरहमज्ञ इतीरितम्।**
**अज्ञप्रत्यक्षमप्यज्ञं त्वामेव कुरुते परम् ॥ २६४ ॥**

भेददार्ढ्योक्ते भेदकधर्माणा पारमार्थिकत्वोक्ते। निर्दोषश्रुतिसाक्षिसिद्धाना मिथ्यात्वायोगात्। 'अहमित्येव यो वेद्य स जीव इति कीर्तित' इति श्रुत्या अहपदाश्रयस्य जीवत्वसिद्धेश्च। **त्वामेव** अखिलसवेत्तुरज्ञानसबन्ध साधयितु उपक्रान्तमेव। एवकारेण 'स्वभावज्ञानवादस्य निर्दोषत्वात्र तद् भवेत्' इत्युक्तानुरोधेन जीवाश्रित जीवावरकमज्ञान अङ्गीकुर्वता तत्त्ववादिना व्यवच्छेद। **अज्ञ** नञ विरोध अर्थ। विपरीतज्ञानिनम्। **करोति** स्थापयति॥ २६४॥

**गुरूक्तमन्यथीकुर्वच्छिष्यो दूष्यो विपश्चिताम्।**
**नानाशास्त्रार्थनिपुणैर्यदुक्तं तत्तथैव हि ॥ २६५ ॥**

**गुरुक्त** बादरायणेन प्रतिसूत्र निर्णीतम्। 'यो हि यच्छास्त्रे प्रवर्तते तस्य तत्रभवो गुरुरिति प्रसिद्धमेव' इति सुधोक्ते सूत्रार्थभाषणे प्रवर्तमानस्य मायिन बादरायणो गुरुरिति सिध्यत्येवेति भाव। **अन्यथीकुर्वन्** सूत्रजातस्य विरुद्धभाषी॥ ॥२६५॥

**प्रियं किल श्रोत्रनेत्रनासाकेशाननादिकम्।**
**शिरःपदं हि केशादिकण्ठान्ताङ्गस्य वाचकम् ॥ २६६ ॥**

इदानी, निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीन.। आनन्दमात्रकरपादमुखोदरादि. सर्वत्र च स्वगतभेदविवर्जितात्मा। इति भगवत्पादोक्तप्रमेयजात उपनिषदारूढ दर्शयति प्रियमित्यादिभि त्रयोदशभि. श्लोकै। तत्र आनन्दमात्रकरपादमुखोदरादि इत्येतदर्थं समर्थयितु शिरआदिपञ्चभि पदै यथा यावदङ्गोपाङ्गसग्रहो भवति तथा तत्पदार्थान् विशदयति

**शिरःपदमिति**। अनेन कन्धर शिरोधर कण्ठ इत्येषा पर्यायशब्दत्वात् कण्ठादुपरितन तेन धार्यमाण सर्वोऽपि भाग श्रोत्रादिक शिर शब्दवाच्य इत्युक्त भवति । **प्रियं** उपकारज श्रवणोत्थ वा ॥ २६६ ॥

**मोदप्रमोदौ दोर्द्वन्द्वं पार्श्वद्वन्द्वं किल प्रभोः ।**
**दक्षिणोत्तरहस्तौ हि मध्यपक्षौ विदुर्बुधाः ॥ २६७ ॥**

**भेदः** अप्रकृष्टविषयोत्थ दर्शनोत्थो वा । **प्रमोदः** प्रकृष्टविषयोत्थ भोगोत्थो वा ॥ २६७ ॥

**आनन्दः किल मध्योरस्स्थलनाभ्युदरादिकम् ।**
**आत्मशब्दोदितं रूपमेतावद्धि विनिश्चितम् ॥ २६८ ॥**

**आनन्दः** स्वरूपभूत । तत्तत्प्रवर्तकतया च तत्र व्यपदेशः टीकोक्तरीत्याऽर्थो ध्येय ॥ २६८ ॥

**बृहत्सुखं किलाऽस्यांघ्रिजंघोरूकटिपूर्वकम् ।**
**मुदः प्रमुद इत्युक्ता मुदत्रोक्ता समाख्यया ।**
**इयदेव हि मध्यस्य पुच्छं च स्थितिकारणम् ॥ २६९ ॥**

ब्रह्म पुच्छ इत्यत्र ब्रह्मशब्दार्थ **बृहत्सुखमिति**। अत्र सुखमित्यर्थलाभ. समाख्याबलादित्याह **मुद इति** । अत्र मुन्नामकसुखविशेषस्य समाख्यया लाभप्रकारं अनुपदमेव यत्रानन्दाश्च इति श्लोकेन व्यनक्ति (२७२) । अनेन निर्दोषपूर्णसुख इति भगवत्पादोक्तिर्विवृता । 'पुच्छ प्रतिष्ठा' इत्यत्र प्रतिष्ठाशब्दार्थ स्पष्टयति मध्यस्य **स्थितिकारणमिति** । तच्चाघ्रिजघादिकमिति ॥ २६९ ॥

**प्रियमोदप्रमोदानन्दात्मोर्ध्वाङ्गस्य पादपि ।**
**सजातीयो यतोऽवश्यं ततो ब्रह्म बृहत्सुखम् ॥ २७० ॥**

न केवल समाख्याबलात् पादाभिधायिब्रह्मशब्दस्य बृहत्सुखमर्थ कि नाम तथाभूतेन रागजातीयत्वाच्चेत्याह **प्रियेति । पात्** वाद ॥ २७० ॥

**प्रियमोदप्रमोदानन्दादिसर्वसुखं हि तत् ।**
**प्राचुर्यार्थमयड्वाच्यं सर्वं पूर्णं च तत्किल ॥ २७१ ॥**

पूर्वोक्ता सर्वावयवभूता सुखविशेषा मयट्प्रत्ययबलात्प्रत्येक पूर्णा एवेत्याह **प्राचुर्येति ।** एतेन 'आनन्दमात्रकरपादमुखोदरादि सर्वत्र' इत्यत्र सर्वत्र अवयवेषु इति तथा कात्स्न्यार्थकेनापि मात्रशब्देन प्रत्यवयव चानन्दस्य पूर्णता इति च ज्ञापित भवति ॥ २७१ ॥

**यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।**
**कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि ॥ २७२ ॥**

**इति पञ्चविधानन्दं मुक्तौ वक्ति यतश्श्रुतिः ।**
**अतोऽत्रापि ब्रह्मपदं मुन्नाम सुखसूचकम् ॥ २७३ ॥**

पूर्वोदितसमाख्या विशदयति **यत्रेति । यत्र मुक्तौ ।** कामस्येत्यत्र काम्यते इति व्युत्पत्त्या प्रियमुच्यते । अयमाशय । समाख्यावाक्ये पञ्च सुखविशेषा निरूपिता । तत्र मुदितरे पादेतरशिरआद्यवयवरूपतयोक्ता । अत मुद्रूपसुखविशेष एव पादरूप परिशेषात्पर्यवस्यति इति ॥ तदाह **सूचकमिति** ॥ २७३ ॥

**प्रतिबिम्बसमाकारं बिम्बं किं नावलम्बते ।**
**अतस्समासमोक्त्या च मुच्च मुञ्चति नाच्युतम् ॥ २७४ ॥**

**बिम्बं** कर्तृ । तदधीनत्वे सति तत्सदृशत्व खलु प्रतिबिम्बत्वम् । मुक्ताना प्रतिबिम्बाना आनन्दरूपता यत्रानन्दाश्चेति श्रुतावुक्ता । तेन हि बिम्बस्य ब्रह्मण. आनन्दरूपता सुतरा सिद्धा इत्याह **बिम्बेति । समोक्त्या** समाख्यया । मुक्तपरमात्मनोरुभयोरपि समया, उभयेषामपि आनन्दरूपता प्रतिपादयन्त्या यत्रानन्दाश्च इति श्रुत्या इत्यप्यर्थ ॥ २७४ ॥

**पादादिकेशपर्यन्तमेवमानन्दरूपताम् ।**
**श्रुतिस्तु स्पष्टमाचष्ट सूत्रकारोऽप्यसूत्रयत् ॥ २७५ ॥**

निरुपचरितशिरआद्यवयववाचकशब्दप्रयोगात् परमात्मन साकारतासिद्धि-र्निष्प्रत्यूहेत्याह **पादादीति** ॥ २७५ ॥

**मुख्यार्थस्य परित्यागे पुच्छं ब्रह्मेति गच्छति ।**
**सा निर्णिनाय पुरुषविध एवेति तद्वपुः ।**
**कोशात्मदेहसादृश्यस्योक्तेः कोशाच्च भिन्नताम् ॥ २७६ ॥**

प्रयोगस्य उपचारस्त्वया नैव वक्तु शक्य । तथा सति ब्रह्मण पुच्छत्वरूपावयवत्वाप्राप्त्या अवयविन अब्रह्मत्वाक्षेप त्वदभिलषितो न सिध्येदिति भावेनाह **मुख्येति** ॥ **सा** 'स वा एष पुरुषविध एव' इति प्रत्येक श्रुति । निर्णिनाय एवकारेण । 'पुरुषविध एव' इति सावधारणकोशसादृश्योक्ति सादृश्यस्य भेदव्याप्तत्वेन कोशभेदमानन्दमयादीना स्थापयन्ती पञ्चानामपि कोशरूपता च त्वदभिलषितामुन्मूलयतीत्याह **कोशेति** ॥ २७६ ॥

**आशासानस्य ते कोशान्पंचस्थान्यां च वञ्चक ।**
**शिर आदिपदं मुख्यं मुख्यायोगे हि लक्षणा ॥ २७७ ॥**

सेय परस्य उभयत पाशारज्जुरित्याह **आशासनस्येति**। पदाना मुख्यप्रयोगाङ्गीकारे साकारतासिद्धि । नो चेत् उक्तरीत्या अधिकरणसिद्धान्तोच्छेद इति ॥ २७७ ॥

**यतश्च सैव पुरुषविध एवेति तद्वपुः ।**
**विनिर्णयति तेनास्य तनुरासीदबाधिता ॥ २७८ ॥**

बाधाभावाभिधायिना एवकारेण आकारस्य पारमार्थिकत्व च सिद्धमित्याह **यत इति** ॥ २७८ ॥

**अतः पूर्णानन्दमात्रं सुखाद्याकारसुन्दरम्।**
**नारायणं परं ब्रह्म प्रियमेवेति च श्रुतिः ॥ २७९ ॥**

**अवधारयन्ती प्रकृतिप्राकृतांशविवर्जितम्।**
**केवलानुभवानन्दरूपाकारमनोहरम् ॥ २८० ॥**

**साक्षादाह श्रुतो यस्य प्रीतिरस्ति मनीषिणः।**
**स निराकारतां तस्य कथं ब्रूयान्महात्मनः ॥ २८१ ॥**

कि च 'प्रियमेव शिर' इति चेतनासाधारणप्रियादिगुणरूपावधारणेन आनन्दमयस्य कोशात्मकाचेतनरूपता निराकृत्य अप्राकृतमनोहराकारता सुदृढ स्थापयन्ती श्रुति तव दुरभिलषित निराकारवाद नि शेष निराचष्ट इत्याह **पूर्णेत्यादिभिस्त्रिभिः** ॥ २७९ ॥ २८० ॥ २८१ ॥

**अतो व्यासमतस्थं स्वं मन्यमानस्ततोऽन्यथा।**
**यो वर्णयति किं नास्य प्रक्रिया विक्रिया किल ॥ २८२ ॥**

**विक्रिया** वाड्मनसविसवाद ॥ २८२ ॥

**व्याख्यारब्धा न तद्वोक्तुमारब्धं स्वस्य दुष्कृतम्।**
**को व्याख्याता निजं मूलमादावेव निकृन्तति ॥ २८३ ॥**

व्याख्या न आरब्धा किंतु स्वस्य दुष्कृत भोक्तुमारब्ध इत्यन्वय.। भोगश्च साधुजनबहिष्कृतत्वम्। तदुक्त 'उपैक्ष्यतासौ द्विजनायकैस्तदा' इति ॥ २८३ ॥

**इत्थं निर्णायके सूत्रे स्पष्टं भेदस्य साधनात्।**
**श्रुतिस्मृतिपुराणादौ निर्णेये यत्क्वचित्क्वचित् ॥ २८४ ॥**

**भेदो नास्तीति वचनं तद्विरोधं निषेधति।**
**निर्णायकानुसारेण निर्णयस्य गतिं विदुः ॥ २८५ ॥**

**टीकानुसारतो ह्यर्थो मूलस्योन्नीयते बुधैः ।**
**मूलकर्तृकृता टीका धार्यैव शिरसाखिलैः ॥ २८६ ॥**

व्याख्यानव्याख्येययोरेकार्थता सुप्रसिद्धा । विरोधे व्याख्यानतो विशेषप्रतिपत्ति । तत्रापि मूलकृतैव चेद्व्याख्यान सुतरा तदनुसरणम् । सूत्र च निर्णेतव्याना पुराणादीना निर्णयात्मकत्वेन व्याख्यानरूपम् । पुराणेतिहासप्रणेत्रैव व्यासेन प्रणीत च । अतस्तस्य ततो बलवत्त्व सर्वथा । एव सति विरुद्धवत्प्रतीयमानानि पुराणादिवाक्यानि सूत्रानुसारेणैव योजनीयानीति स्थिति । निर्णायकेषु सूत्रेषु प्रतिपद जीवब्रह्मणोर्भेद चेत् एव निर्णीत इति समर्थितम् । अत यत्र कापि पुराणादिषु यदि अभेदपराणीव वचासि प्रतीयेरन् तानि सर्वाणि 'विरोधे गुणे त्वन्यार्थकल्पना' इति न्यायेन सूत्रानुकूल्येनैव योजनीयानि । तत्र अभेदपरतया प्रतीयमानाना स्वदृश्याभेदादिपरताप्रदर्शनेन गतिर्वाच्येति पूर्वमुक्तम् । भेदो नास्तीति वचने भेद कीदृशो ग्राह्य इत्यत तावत् उपलक्षणतया आह **विरोधमिति** ॥ ॥२८४ ॥ २८५ ॥ २८६ ॥

**भेदशब्दो हि विद्वद्भिर्मिथो भेदे प्रयुज्यते ।**
**कृमे विरोधे धीभेदे नाशेऽन्योन्यविमिश्रणे ।**
**असंयुक्ततयान्योन्यस्थितिश्चापि भिदोच्यते ॥ २८७ ॥**

**भिन्ना सेना मित्रभेदः क्षीरनीरविभेदनम् ।**
**भिन्ननीरत्ववाङ्माधे भिदुरांभस्त्ववागपि ॥ २८८ ॥**

**विमिश्रतामाह यस्मात्तस्माद्भेदो विमिश्रणम् ।**
**द्वैधं च भेदोपायश्च पृथग्धीः केत्युदीरितम् ॥ २८९ ॥**

**छिन्नभिन्नमिति प्राहुर्नष्टं घटपटादिकम् ।**
**भ्रमो भिदा भिनत्त्यर्थानन्यथीकुरुते यतः ॥ २९० ॥**

यथासन्दर्भ तादृशगतिप्रदर्शनोपयुक्ततया भेदशब्दस्य अनेकार्थान् प्रसिद्धप्रयोगैरभिनीय दर्शयति **भेदेति। मिथो भेदः** अन्योन्याभाव यथा 'जीवेशयोर्भिदा चैव जीवभेद परस्पर' इत्यत्र प्रसिद्ध । विरोधे प्रयोग भागवते 'कथमेकात्मना भेद ' इति । एकमतीना यदूना कथ विरोध इति तदर्थ । एव मित्रभेद इति पञ्चतन्त्रे । **असयुक्ततया अन्योन्यं स्थितिः** स्थानभेद । तस्य निदर्शन **भिन्ना सेनेति । विमिश्रताया** प्रयोगे निदर्शनानि क्षीरनीरविभेदन भिन्नाभस्त्व भिन्ननीरत्व इति त्रीणि । 'द्वैधे बहूना वचन' इत्यादिको बुद्धिभेदे प्रयोग । 'पृथग् धी ' इति भ्रमे । तस्यैव पदस्य निरुक्तिदर्शन भ्रमो भिदेत्यादिकम् । पृथक् अर्थमतिक्रम्य विद्यमाना धीरित्यर्थ । नाशार्थे भिन्न घटादिकमिति ॥ २८७ ॥ २८८ ॥ २८९ ॥ २९० ॥

**त्रयाणामेकभावानां यो न पश्यति वै भिदाम् ।**
**इति तस्योक्तिरव्यक्ता तद्व्यक्तोक्तीर्विचारय ॥ २९१ ॥**

यदर्थ भेदशब्दोऽभेदकार्येषु व्युत्पादित तदिदानी भागवते चतुर्थस्कन्धे अष्टमाध्याये ब्रह्मविष्णुशिवेषु भेदनिषेधकत्वेन प्रतीयमानश्लोके गतिप्रदर्शनेन निदर्शयति ॥ **त्रयाणामिति ॥** तदध्वरे प्रादुर्भूतस्य हरेर्दक्ष प्रति वचनमिदम् । 'सर्वभूतात्मना ब्रह्मन् स शान्तिमधिगच्छति' इत्युत्तरार्ध । अय खलु श्लोक पौर्वापर्यपर्यालोचनाया ब्रह्मस्थस्य रुद्रस्थस्य हरेश्चेति त्रयाणा विष्णुरूपाणा स्वगतभेदराहित्य फलरूपतात्पर्यनिर्णायकलिङ्गेन सस्थापयति । ब्रह्मशब्दशिव-शब्दयोर्हरौ समन्वय स्वातन्त्र्योक्त्या विशदयति । अत्र भिदाशब्द अन्तर्यामिरूपविवक्षाया स्वरूपभेदपर । अन्यथा विरोधादिपूर्वोक्तार्थान्तरपर इति स्थिति । अद्वैतिनस्तु चतुर्मुखस्य रुद्रस्य विष्णोश्चेति त्रयाणा देवाना भेदनिषेधपूर्वक ऐक्य कथयतीति व्याकुर्वते । तेषा व्याख्यानस्य पूर्वोत्तरविरुद्धतया अयुक्तता प्रदर्शयितु उपक्रमते **इतीत्यादिना ।** तस्य व्यासस्य ॥ २९१ ॥

**वितर्कस्समभूत्तेषां त्रिष्वधीशेषु को महान् ॥ २९२ ॥**

तत्र तावत् भागवत एव विष्णोरेव ब्रह्मरुद्रापेक्षया श्रेष्ठत्वप्रतिपादकान् निरवकाशकथासदर्भान् दर्शयति **वितर्क इत्यादिना ॥** तेषा सरस्वत्यास्तटे सत्रमास्थितानामृषीणाम् ॥ २९२ ॥

**तच्छ्रुत्वा मुनयस्सर्वे विस्मिता मुक्तसंशयाः ।**
**भूयांसं श्रद्दधुर्विष्णुं यतश्शान्तिर्यतो भयम् ॥ २९३ ॥**

तत् भृगुणा परीक्षापूर्वकम् कृतस्य विष्णो सर्वोत्तमत्वनिर्णयस्य वचनम् ॥ ॥२९३ ॥

**शापप्रसादयोरीशा ब्रह्मविष्णुशिवादयः ।**
**सद्यः शापप्रसादोऽङ्ग शिवो ब्रह्मा न चाच्युतः ॥ २९४ ॥**

शापेति अत्र त्रयाणा स्वभावभेदकथनेन स्वरूपभेदोक्ति ॥ २९४ ॥

**मन्ये त्वां देवदेवानां त्रयाणां पुरुषर्षभम् ।**
**यद्बाधसे गुहाध्वान्तं प्रदीपप्रभया यथा ॥ २९५ ॥**

मन्ये त्वामिति (भा द उ अ) मुचकुन्दस्य कृष्ण प्रति वचनम् । त्रयाणामिति निर्धारणे षष्ठी ॥ २९५ ॥

**देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् ।**
**प्रायस्ते धनिनो ब्रह्मन्न तु लक्ष्मीपतिं हरिम् ॥ २९६ ॥**

देवासुरेति श्लोक (भा द उ ९४ अ श्लो १) गुणसौरभे विवृत ॥ २९६ ॥

**अत्रापि भृगुरुद्रोक्तिरत्युच्चं हरिमाह हि ।**
**पूर्वाव्यवहितोक्त्या च सर्वेशो विष्णुरीर्यते ॥ २९७ ॥**

अत्रापि अस्मिन्नेवाध्याये । भृगो रुद्रस्य च प्रत्येक विष्णो स्तुतिरूपा उक्ति । तत्र भृगो स्तुति— "यन्मायया गहनयोपहतात्मबोधा ब्रह्मादयस्तनुभृतस्तमसि स्वपन्त ॥ नात्माश्रित तव विदन्त्यधुनापि तत्त्व सोऽय प्रसीदतु भवान् प्रणतात्मबन्धु ॥" इति ॥ अनेन 'न ते विष्णो जायमानो न जातो देव महिम्न परम तमाप' इति श्रुत्युक्त विष्णो सर्वोत्तमत्व वर्णितम् । एव रुद्रस्य स्तुति— "तव वरद वराघ्रा वाशिपा चानभिध्ये ह्यपि मुनिभिरसक्तैरादरेणार्हणीये । यदि रचितधिय मा

विद्धि लोकापविद्ध जगति न गणयेय त्वत्परानुग्रहेण" इति। अनेन विष्णोरनुग्रहमात्रेण रुद्रस्य कृतार्थत्व गम्यते॥ अनयो स्तुत्यो पूर्वया अव्यवहितया उक्त्या, 'तमुपागतमालक्ष्य सर्वे सुरगणादय' इत्यादिकया (भा च अ ७ श्लो २२, २३, २४)। व्याख्याता इमे श्लोका गुणसौरभे (६९७, ६९८, ६९९)॥ ॥२९७॥

**हेतुगर्भैकभावानामिति तन्मध्यगैव वाक्।**
**अतोऽपि बुद्धिभेदस्य निषेध इति सिध्यति ॥ २९८॥**

**एकभावाना** एकविषयकमतिमताम्। अनेन विशेषणेन, उत्तरत्र निषिध्यमानो भेद मतिभेद एवेति सिध्यतीत्याह **हेत्विति**॥ २९८॥

**मुनिभिश्चर्चितं तत्र तत्र गत्वा विनिश्चितम्।**
**भयहृत्त्वेन च प्रोक्तं कथं स्याद्व्यावहारिकम्॥ २९९॥**

**चर्चित**= 'वितर्क समभूत्तेषा' इत्युक्ते। विशिष्य प्रत्येक त्रयाणा परीक्षापूर्वक निश्चितम्। **भयहृत्वेन** 'यत शान्तिर्यतोऽभयम्' इति ससारभय परिहृत्य **शान्तिरूप**मोक्षहेतुज्ञानविषयत्वेन भृगुणा **प्रोक्तम्**। **व्यावहारिकम्** अविद्याकल्पितम्। न ह्याविद्यकंज्ञान अविद्यानिवृत्तिहेतुरिति भाव॥२९९॥

**इदं तु दक्षयज्ञघ्न क्रूरकिङ्करशङ्किना।**
**मुनिना तत्प्रियायोक्तमिति स्याद्व्यावहारिकम्॥ ३००॥**

कथचिदुपचारकल्पना त्रयाणामित्यस्यैव श्लोकस्य सभावितेत्याह **इद तु इति**। इय सभावनाऽप्यापातत एव। तात्पर्यं तु पूर्वोदाहृताना विष्णुसर्वोत्तमत्वप्रतिपादकाना श्लोकाना निरुपचरिततया स्वार्थपरत्व एव। मुने रुद्राशस्य शुकस्य अवधूतशिरोमणेरकुतोभयस्य तात्त्विकप्रमेयोक्तौ क्रूरकिङ्कराणा सकाशात् भयशङ्काया अप्रसक्तेरेवेति मन्तव्यम्॥ ३००॥

**विशिष्टैक्यं च तेनास्ति ततोऽन्योर्थस्तवैव हि।**
**अमुख्यवृत्तिः किल ते मुख्यार्थे सति सा कथम्।। ३०१ ।।**

किंच अद्वैतमतरीत्याऽपि अत्र निषिध्यमानो भेद न तावद्विशिष्टानाम्। विशिष्टभेदस्याङ्गीकारेण तन्निषेधेऽपसिद्धान्तापातात्। नापि चिन्मात्रस्य लक्षणया। विरोधाद्यनेकमुख्यार्थाना वक्ष्यमाणरीत्या सभवेन लक्षणाबीजस्य मुख्यार्थानुपपत्तेरभावात्। चिच्चितोर्भेदस्याप्रसक्तेस्तन्निषेधायोगात्। 'मत्प्रसादात् परा शान्ति स्थान प्राप्स्यसि शाश्वतम्' इति हर्यनुग्रहफलत्वेनोक्तस्यैव शान्त्याधिगमस्य 'स शान्तिमधिगच्छति' इत्येवमत्रापि फलतयोक्तत्वेन तस्य निर्विशेषचैतन्यज्ञानफलत्वानुपपत्ते। अधिगच्छतीत्युक्तप्राप्ते प्राप्तृप्राप्तव्यरूपभेदस्यैव साधकत्वाच्च। परमते भेदमात्रस्य निषेद्धव्यत्वेन त्रयाणामेव केवल विशिष्य भेदनिषेधकत्वे शेषभेदविध्यनुज्ञापकत्वेन विरोधाच्च। 'सर्वभूतेषु येनैक भावमव्ययमीक्षते। अविभक्त विभक्तेषु तज्ज्ञान विद्धि सात्विकम्' इति गीताया भूताना परस्पर भेदस्य, तदन्तर्यामिण ईश्वरस्यैव चैक्योक्ते तद्विरोधाच्च इत्यादिक दूषणमूह्यम्।। ३०१ ।।

**विभजस्व यथा न्यायं नैव भेदो यथा भवेत्।। ३०२ ।।**

भागवत एव विरोधार्थे भेदशब्दप्रयोग दर्शयति विभजस्वेति। (भा अ ८ श्लो ५३) दैत्याना मोहिनी प्रति वचनम्।। ३०२ ।।

**यन्निमित्तस्स वै शापो यादृशो द्विजसत्तम।**
**कथमेकात्मनां भेद एतत्सर्वं वदस्व मे ।। ३०३ ।।**

परीक्षित शुक प्रति प्रश्न (भा.एका.अ १ श्लो ९) **यदिति**।। सदा अविरुद्धबुद्धीना यदूना कुलसहारहेतु अन्योन्य विरोध केन निमित्तेनाभूदिति प्रश्नाशय ।। ३०३ ।।

**इत्यस्मिन्नेव यद्ग्रन्थे तत्र तत्र प्रयुज्यते।**
**विरोधे भेदशब्दोऽयं सामादौ लौकिकैरपि।**
**अतो यं मुख्य एवार्थो मुख्ये सति न लक्षणा ।। ३०४ ।।**

**सामादौ** सामदानभेददण्डरूपनीतिचतुष्टये। **अतो** रूढ्यनुमापकस्य प्रयोगबाहुल्यरूपलिङ्गस्य सद्भावात्। **सा** त्वत्कल्पितचिदैक्यसिध्यर्थ **कै**रपि प्रमाणविद्भिरनङ्गीकृता जहदजहल्लक्षणा ॥ ३०४ ॥

**अथवा वागियं तेषामेकार्थविषयाः सदा।**
**ये भावास्तद्भिदां नेति बुद्धिभेदं निषेधति ॥ ३०५ ॥**

तमेव श्लोक रीत्यन्तरेण योजयति **अथवेति। त्रयाणा** ब्रह्मविष्णुशिवानाम्। सबन्धे षष्ठी। **एकभावाना** एकविषयकबुद्धीनाम्। **भिदा** भिन्नविषयकत्वम् ॥ ॥३०५ ॥

**तदैव यत्प्रसज्येत निषेधस्तस्य युज्यते।**
**शैववैष्णवयोर्वैरं मिषतां तु तयोरपि।**
**विरोधशङ्का तत्रैव प्रसक्ता सा निषिध्यते ॥ ३०६ ॥**

निषेधायापेक्षिता अव्यवहितपूर्वप्रसक्तिरपि प्रकृते बुद्धिभेदस्यैव न स्वरूपभेदस्येत्याह **तदेति ॥** शैव नन्दीश्वर । वैष्णव भृगु तयो । **वैरम्** तदनुमापक अन्योन्य शापविसर्जनादिकम्। **मिषतां** पश्यता जनानाम्। **तयोः** शिवस्य विष्णोश्च। **विरोधशङ्का** भृत्ययो विरोधेन तत्स्वामिनोरपि विरोधो भवेदिति सभावना ॥ ३०६ ॥

**रूपभेदप्रसक्तिस्तु सदा त्रिस्थानवासिनाम्।**
**अतोऽत्रैव न तत्प्राप्तिर्निषेधोऽयं च तस्य न ॥ ३०७ ॥**

त्रिस्थानवासिना इति हेतुगर्भ विशेषणम्। ब्रह्मविष्णुशिवा स्वरूपतो भिन्ना (सत्यलोकवैकुठकैलासरूप) भिन्नस्थानस्थितत्वात् सम्मतवत् इति प्रयोगो ध्येयः। इय च स्वरूपभेदप्रसक्ति सर्वदैवास्तीति न दक्षाध्वरप्रसङ्गे इदानीमेव तन्निषेधस्य न विशेषसङ्गतिरिति भाव ॥ ३०७ ॥

**पूज्यपूजकभावेन प्रेम्णस्तत्रैव दर्शनात् ।**
**विरोधस्तु निषेधार्हः कथं भेदो निषिध्यते ॥ ३०८ ॥**

किच शैववैष्णवयो दक्षाध्वरे कलह आगन्तुकक्षुद्रकारणनिमित्त एव । न तेन स्वामिनो शिवविष्ण्वोर्विरोध शक्यसाधन· । ब्रह्मण विष्णोश्च विरोधवार्तैव न । अत भ्रान्त्यैव कल्पित इति युक्तस्तन्निषेध । स्वरूपभेदस्तु त्रयाणा 'नाह न च शिवोऽन्ये च तच्छक्त्येकाशभागिन' इति चतुर्मुखवाक्याद्यनेकप्रमाणप्रमित । अत्रैव दक्षाध्वरे ब्रह्मणा शिवेन च कृतया विष्णो पूजया च सर्वै प्रत्यक्षीकृत । अत स नैव निषेधार्ह इत्याह **पूज्येति** ॥ ३०८ ॥

**तदैव तत्सभामध्ये त्रिरूपाणां त्रिलिङ्गिनाम् ।**
**स्तोतृस्तव्यतया नम्यनन्तृभावेन च स्थितेः ॥ ३०९ ॥**

सा च पूजा स्तुतिनतिरूपानेकविधेत्याह **तदेति** ॥ ३०९ ॥

**तमुपागतमालक्ष्य सर्वे सुरगणादयः ।**
**प्रणेमुस्सहसोत्थाय ब्रह्मेन्द्रत्र्यक्षनायकः ॥ ३१० ॥**

**तत्तेजसा हतरुचस्सन्नजिह्वास्ससाध्वसाः ।**
**मूर्ध्न्युद्धृताञ्जलिपुटा उपतस्थुरधोक्षजम् ॥ ३११ ॥**

**अप्यर्वाग्वृत्तयो यस्य महित्वे स्वभुवादयः ।**
**यथामति गृणन्ति स्म कृतानुग्रहविग्रहम् ॥ ३१२ ॥**

तामेव निदर्शयति **तमित्यादिभिः त्रिभि·** ॥ व्याख्याता इमे श्लोका गुणसौरभे (६९७, ६९८, ६९९) ॥ ३१० ॥ ३११ ॥ ३१२ ॥

**इति पूर्वोक्तविस्पष्टवाक्यादस्पष्टनिर्णयः ।**
**न हि तात्कालिकाज्ञानी त्रिकालज्ञानवान्मुनिः ॥ ३१३ ॥**

**मुनिः** शुक ॥ **अस्पष्टनिर्णयः।** भिदाशब्दस्य 'यो न पश्यति वै भिदा' इत्यत्रत्यस्य स्वरूपभेदपरत्व विनिवार्य विरोधपरत्वेन निर्णय· ॥ ३१३ ॥

**महिम्न्यर्वाग्वृत्तयश्चेत्कथं तेऽधिकवृत्तिना।**
**हरिणैक्यं प्राप्नुवन्तीत्यादिवाक्यं विचार्यताम्॥ ३१४॥**

**इति** एतदर्थपरम्। **आदिवाक्यं** 'अप्यर्वाग्वृत्तयः' इत्यादिरूपम्॥ ३१४॥

**यन्मायया गहनयेत्युक्तं मध्ये भृगोर्वचः।**
**आश्रयाश्रयिभावाद्यैस्स्वरूपैक्यं निषेधति ॥ ३१५॥**

**मध्ये** 'अप्यर्वाग्वृत्तय' इति श्लोकस्य 'त्रयाणामेकभावाना' इति श्लोकस्य च मध्ये ॥ **वचः** यन्मायया गहनयाऽपहृतात्मबोधा ब्रह्मादयस्तनुभृतस्तमसि स्वपन्त । नात्माश्रित तव विदन्त्यधुनाऽपि तत्त्व सोऽय प्रसीदतु भवान् प्रणतात्मबन्धु ' इति स्तुतिरूपम्। आद्यैरित्यनेन तै साकल्येनाज्ञेयत्व प्रणतत्व, तद्बन्धुत्व इत्यादिक ग्राह्यम्॥ ३१५ ॥

**त्रयाणामेकभावानां यो न पश्यति वै भिदाम्।**
**इत्यन्तिमं वचस्तच्च कथं हन्त्यादिमध्यमौ ॥ ३१६॥**

**आदिमध्यमौ** अनेकाभ्या निरवकाशाभ्या ताभ्या स्थापित स्वरूपभेदम्। **हन्ति** बाधते। न हि दुर्बल प्रबलसाधनस्येष्टे इति भाव । अत अन्तिमस्यैव विरोधाभाव अर्थ आश्रयणीय ॥ ३१६ ॥

**त्रयाणामेकभावानां यो न पश्यति वै भिदाम्।**
**आदिमध्यान्तपद्यानां स शान्तिमधिगच्छति ॥ ३१७॥**

मुमुक्षुणा खलु 'पूर्वोत्तराविरुद्ध प्रमाणान्तराविरुद्धश्च शास्त्रार्थ' इति शास्त्रमर्यादाऽवश्य माननीया इत्येतदर्थपरतयाऽपि त्रयाणामिति श्लोक योजयति **त्रयाणामिति।** आदिमध्यान्तपद्यानामिति शेषोक्तिः। **एकभावानां** अन्योन्यमविरुद्धाशयानाम्। **सर्वभूतात्मनां सर्वस्मिन्** 'सर्वं समाप्नोषि ततोऽसि

सर्व ' इति स्मृत्यनुसारेण सर्वव्यापके विष्णौ **भूतः** प्रतिपादकतया विद्यमान आत्मा स्वरूप येषा ते सर्वभूतात्मान तेषाम्। **भिदां** विरुद्धार्थकल्पनेन अन्यतरस्या-प्रामाण्यम् **यः न पश्यति** किन्तु 'वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना' इति न्यायमनुरुध्य भिदा इत्यस्य विरोधार्थकत्व आश्रित्य एकवाक्यतयाऽर्थमङ्गीकरोति **सः** अधिकारी यथार्थज्ञानी **शान्तिं मोक्ष** अधिगच्छति। अनेवभूतस्य मिथ्याज्ञानिनस्तम एव परायणमिति भाव ॥ ३१७ ॥

**यदि स्वरूपभेदस्य निन्दैवेयं भवेत्तदा।**
**व्यर्थोच्छिष्टाहुतेराज्ञा सर्वाशर्वाहुतिर्यतः।**
**निर्मूल एव कलहो निर्मूला शान्तिरप्यभूत् ॥ ३१८ ॥**

विष्णो सर्वेभ्य उत्तमत्वे ज्ञापकमुक्त्वा, ब्रह्मणो रुद्रादुत्तमत्वेऽपि पूर्वप्रवृत्ता कथा ज्ञापिकामाह **यदीति**॥ अत्र आगताय ब्रह्मणे रुद्र उत्थाय चक्रे शिरसाऽभिवन्दनम्' इति, तथा ब्रह्मणा तदनुग्रहाय 'एष ते रुद्रभागोऽस्तु यदुच्छिष्टोऽध्वरस्य वै' इति उच्छिष्टाहुतेराज्ञा कृतेति च कथा श्रूयते। स्वरूपैक्ये तदेतदसङ्गतमेव स्यात्। न हि क्वापि स्वात्मने एव प्रणाम स्वात्मन्येव चानुग्रह क्रियमाणो दृष्टचर। अतो विरोधार्थक एवाय भिदाशब्द इति विपर्यये पर्यवसातव्यम्॥ ३१८ ॥

**पारमार्थ्येन भेदोऽयं यदि नेति मतं तव।**
**अपारमार्थ्येन तदा नेत्यार्यस्य मतं भवेत्।**
**अतस्सुस्थिर एवायं भेदोऽभूत्पदकल्पने ॥ ३१९ ॥**

अथ मन्येत। अस्तु भेद। स चापारमार्थिको व्यावहारिक एव। पारमार्थिक एव च निषिध्यत इति। तत्र प्रष्टव्यम्। स किं प्रत्यक्षादाकलितोऽन्यो वा यो निषिध्यते। आद्ये कथमङ्गीकृतस्य निराकरणम्। अन्यश्चेन्निषिध्यता न नो हानिरित्याह **पारमार्थ्येनेति** न हि प्रत्यक्षादिप्रमितादन्य पारमार्थिको भेदो नामास्तीति भाव। तदुक्त भगवत्पादै। 'प्रत्यक्षादिसिद्धत्वे च भेदस्य तद्विरोधादेवा-

प्रामाण्यमभेदागमस्ये'ति । कि च अविद्यमानस्य पारमार्थ्येन इति पदस्य कल्पन कि प्रमाणबलात्क्रियते उत एवमेव वा । नाद्य । तदभावादेव । त्वया प्रमाणमात्रस्य मिथ्यात्वाङ्गीकाराच्च । न द्वितीय । एव तर्हि अपारमार्थ्येन इत्यप्यध्याहारसभवेन तवैवानिष्टमापद्यत इत्याह **अपारमार्थ्येनेति**। सुस्थिर । द्वौ नञाविति न्यायादिति भाव ॥ ३१९ ॥

**कथमार्यो न चरमो वाक्यप्रामाण्यरक्षणात् ।**
**अनार्यश्च कथं नाद्यो वाक्यप्रामाण्यशिक्षणात् ॥ ३२० ॥**

'वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना' इति न्यायस्य सम्माननात्तत्त्ववादी आर्य तदवधीरणान्मायी अनार्य इत्याह **कथमिति**। तदुक्त चन्द्रिकाया अन्तरधिकरणे। श्रुतौ श्रद्धालुना श्रुत्योर्विषयभेदेन तात्त्विकविषयत्वस्यैव वक्तव्यत्वाच्च इति ॥ ३२० ॥

**न चेदपारमार्थ्येन तत्त्वमस्यादिवागपि ।**
**वक्त्यैक्यं पारमार्थ्येन त्वं त्वमेवासि तच्च तत् ॥ ३२१ ॥**

**इत्याहेति भवेच्छ्रुत्या मिथ्यार्थस्तत्र कथ्यते ।**
**मुख्ये बाधेऽप्यमुख्यार्थः कथ्यते सावकाशया ॥ ३२२ ॥**

**न चेत्** 'यत्रानवसरोऽन्यत्र पद तत्र प्रतिष्ठितम् । वाक्य वेति सता नीति सावकाशे न तद्भवेत्' इति शब्दाध्याहारनीति न्यक्कृत्य त्वया निरङ्कुशोऽध्याहार आस्थीयते चेत् । **अपारमार्थ्येनेति**। इति पदेनाध्याहृतेन इति शेष । अपारमार्थ्येन इत्यावर्तते । वाक् अपारमार्थ्येन ऐक्य वक्ति **इत्याहेति**। भवेत् इति योजना । तथा सति फलितमर्थं भेदावधारणमाह **त्वं त्वमेवेति**। बाधेऽपि इत्यत्रापिपदेन प्रकृते मुख्यार्थबाधो नास्त्येवेति गर्हां सूचयति। आत्मा तत्त्वमसीत्यत्र अतदिति पदच्छेदाश्रयणात्, प्रकृते च भिदाशब्दस्य विरोधरूपमुख्यार्थस्यैव स्वीकाराच्चेति भाव ॥ ३२१ ॥ ३२२ ॥

**सोऽनुप्रविष्टो भगवांश्चेष्टारूपेण तं गणम्।**
**भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ॥ ३२३ ॥**

**इत्यसंयुक्तताभेदो ग्रन्थेऽस्मिन्नेव कथ्यते।**
**असंयुज्यस्थितिं तेषामियं वाक्तन्निषेधति।**
**सदा संयुज्यवसतामङ्गहृत्पद्मधामसु ॥ ३२४ ॥**

भिदाशब्दस्य सावकाशता सभवदनेकार्थतोक्त्या द्रढयति **स इति। भिन्न** असयुक्तम्। **अस्मिन्नेव ग्रन्थे** तृ स्क. षष्ठे अध्याये। **इय वाक्।** त्रयाणामित्यादि वाक्। अगानि हृत्पद्म च इति धामसु। एक पदम्। 'सयुजा सखायौ' इति श्रुते। हृत्पद्मेत्युक्त्या शिवेन ब्रह्मणा च तदधिष्ठितस्य विष्णो ध्येयत्वमुक्त भवति। तदुक्तमत्रैव 'अधोक्षजो मे मनसा विधीयते' इति शिवेन, 'यन्मे हृदौत्कठ्यवता धृतो हरि' इति ब्रह्मणा च विष्णो ध्यानम् ॥ ३२४ ॥

**उक्ताविरोधसिद्ध्यर्थमर्थोऽयं च निगद्यते ॥ ३२५ ॥**

चशब्दो न केवल भिदाशब्दस्य सावकाशतादृढीकरणार्थ किन्तु अविरोधसिध्यर्थ च कथित इति भाव समुच्चिनोति॥ नित्य ध्यात्रो शिवब्रह्मणोर्ध्येयेन हरिणा कथ विरोध इति ॥ ३२५ ॥

**देवानुद्दीपयन्विष्णुर्दैवैरूपैः किलाविशत्।**
**असुरानासुरैरूपैर्नागान्नगाकृतिः किल ॥ ३२६ ॥**

**अन्तस्सर्वत्र तद्रूपरूपो विष्णुश्च तिष्ठति।**
**तद्ब्रह्मस्थब्रह्मरूपाच्छिवस्थशिवरूपतः।**
**पृथक्स्थितस्य विष्णोर्वाग्भेदमेषा निषेधति ॥ ३२७ ॥**

**देवानिति।** इद पद्य, भागवते अष्टमस्कन्धे सप्तमाध्याये 'तथाऽसुरानाविशदासुरेण रूपेण तेषा बलवीर्यमीरयन्। उद्दीपयन् देवगणाश्च विष्णुर्दैवेन नागेन्द्रमथापरेण' इति पद्यस्यार्थसग्रहपरम्। अत्र 'तत्र तत्र स्थितो

विष्णुस्तत्तच्छक्ती प्रबोधयन्' इति सर्वगतत्वनये अनुव्याख्यानोक्त एकस्यैव विष्णोर्बहुरूपग्रहणेन देवासुरनागशक्तिप्रबोधकत्व निरूप्यते । न तावता विष्णो स्वरूपभेदप्रसक्तिरस्ति । एव 'ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थित' इत्युक्तदिशा शिवे ब्रह्मणि च स्थितयोरन्तर्यामिरूपयोस्तथा बहि स्थितस्य विष्णुरूपस्य च भेदनिषेध 'त्रयाणामेकभावाना' इति श्लोकेन क्रियते । तदुक्त गीताया 'सर्वभूतेषु येनैक भावमव्ययमीक्षते । अविभक्त विभक्तेषु तज्ज्ञान विद्धि सात्विकमि'ति अहमात्मा गुडाकेश सर्वभूताशयस्थित इति च । तथा च भिदाशब्दस्य स्वरूपभेदपरत्वेऽपि न काऽप्यनुपपत्तिरिति योजनान्तरमाह **अन्तरिति** ॥ ३२६ ॥ ३२७ ॥

**संयुज्यैव स्थितिं प्रोक्ता स्थिरीकर्तुमिदं वचः ।**
**हृदिस्थरूपप्रेमित्वादवैरं वा तयोर्हरौ ॥ ३२८ ॥**

**इदं वचः** अन्तर्यामिरूपोक्ति ॥ ३२८ ॥

**अन्तर्यामिविवक्षायां भेदो नाशो भ्रमोऽपि वा ।**
**मिश्रणं वा क्रमादेषु त्रितयं वाङ्निषेधति ॥ ३२९ ॥**

अस्या विवक्षाया विष्णोर्महिमातिशयलाभोऽपि भवतीत्याह **अन्तर्यामीति** । **एषु** त्रिषु रूपेषु । **त्रितय** नाश भ्रम मिश्रण चेत्येवरूपम् ॥ ३२९ ॥

**अभेदघटनायोक्ता त्रयाणामप्यनाश्यता ।**
**नश्यद्देहेऽप्यनाशाय तद्देहे भ्रमशून्यता ।**
**अविद्याद्यैरमिश्रत्वं तदभ्रान्त्यै निगद्यते ॥ ३३० ॥**

निषेधप्रकारमुपपादयति **अभेदेति** । मूलरूपस्य चतुर्विधनाशाभाव 'य स्वतन्त्र परो विष्णुर्जन्ममृत्यादिवर्जित' इति तत्त्वनिर्णयोदाहृतब्रह्माण्डादि-प्रमाणैस्तावत्प्रमित॰ । तत्र यदि अन्तर्यामिरूपयोर्द्वयोरन्यतरस्यापि वा नाश॰ स्यात् तर्हि रूपत्रयस्याभेदो न स्यात् । नाशानाशरूपविरुद्धधर्माक्रान्तत्वेन भेदस्यैव प्राप्ते । निषिद्धश्च भेदोऽनेनैव पद्येन । अतोऽन्तर्यामिरूपयोरपि नाशाभाव॰

सिध्यति । चेतनस्य स्वरूपतो नित्यस्य नाशो नाम स्वभिन्ने प्राकृतदेहे भ्रममूलकस्य ममेत्यभिमानस्य नाश एव । अतो नाशाभावादेव तन्निमित्तभ्रमाभाव तेन च तन्निमित्तभूताज्ञानमिश्रणाभावश्च सिध्यत इत्याह **अभेदेति**। यथोक्त भागवते 'यन्निबन्धोऽभिमानोऽय यद्वधात्प्राणिना वध । तथा न यस्य कैवल्यादभिमानोऽखिलात्मन '। इति । कैवल्यात् देहाभावादेव । अत्र निषिध्यमान मिश्रण हेयोपादेयरहितमित्युक्तरीत्या उपादेयाना गुणाना हेयैरविद्यादिदोषैर्मिश्रणमेव प्रमाणानुगुण्यादित्याह **अविद्येति** ॥ ३३० ॥

**अन्तर्यामिविवक्षायां मुख्या स्यादेकभावना ।**
**भिन्नभिन्नमनस्कत्वान्न चेन्नातोऽपि तस्य वाक् ॥ ३३१ ॥**

अस्या विवक्षाया एकभावानामित्यस्य मुख्यार्थ एव ज्ञापक इत्याह **अन्तर्यामीति**। अत्र भावोऽन्योन्यसुखदु खाद्यनुसन्धानप्रयोजक अन्त करणम् । तदैक्ये मूर्तित्रयस्य स्वरूपैक्य सुलभमेवेति भाव । अन्त करणैक्य च भिन्नान्त करणाभावादेवेति भाव ॥ ३३१ ॥

**रूढलक्षणयाऽन्यत्र बुद्धेरैक्यं च भिन्नता ।**
**विषयस्यैक्यभेदाभ्यामुक्ते मुख्यं तु तद्धरौ ॥ ३३२ ॥**

**अन्यत्र** स्वरूपभेदवत्सु लोके ब्राह्मणादिषु । भिन्नता इत्यनन्तर इति द्वे इति शेष । उक्ते इत्यनेनान्वय । प्रथमाद्विवचनम् । विषयैक्यभेदाभ्यामिति क्रमेणान्वय । विषयैक्ये बुद्ध्यैक्य, इदानी ब्राह्मणा एकभावा इति । विषयभेदे बुद्धिभेद पूर्व ब्राह्मणाभिन्नभावा इति च प्रयोगात् । उभयत्र भावशब्दस्य विषये रूढलक्षणैव । हरौ तु **तत्** एकभावत्व **मुख्यं तु** मुख्यमेव न चान्तर्यामिविवक्षाया विष्णोरेकत्वेन त्रयाणामित्युक्तत्रित्वानुपपत्ति । 'द्वित्व चैकस्य युज्यते' इति अनुव्याख्यानोक्तदिशा विशेषबलेनोपपत्ते ॥ ३३२ ॥

**शब्दो नेयो ह्यनेकार्थे निर्णीतोऽर्थः क्व नीयते ।**
**पुत्रो न पुत्रीति वाक्यं निर्णीतार्थानुसारि हि ॥ ३३३ ॥**

अपि च शब्दार्थयो अर्थस्यैव प्राधान्यम्। अत प्रमाणनिर्णीतार्थानुसारेण सावकाशा शब्दा एव योजनीया। न तु वैपरीत्यमित्याह **शब्द इति**। अन्यथा वाक्यस्य योग्यताविरहेणाप्रामाण्यापत्ति। एकार्थकोऽपि शब्दो वृत्त्यन्तराश्रयणेन भवत्यर्थान्तरपर। अर्थस्तु नैवमिति भाव। तत्रानुरूप लौकिकनिदर्शनमाह **पुत्र इति**। गर्भस्थः शिशु पुत्र पुत्री वेति पृष्ट कश्चन शकुनशास्त्रमजानान स्वाज्ञानमाच्छादयन् ब्रूते पुत्रो न पुत्री इति। इद च वाक्य नञ पूर्वेण उत्तरेण वा शब्देन योजनाया अर्थद्वयपरतया व्याख्यानार्हम्। यदि पुत्रो जायेत, न पुत्री इत्यन्वयेन अथ पुत्री तर्हि न पुत्र इत्यन्वयेन व्याख्यानसभवात्। नैव पुत्रस्य पुत्र्या वाऽन्यथाभवन शक्यसभावनम्। प्रकृते च ब्रह्मविष्णुशिवाना स्वरूपभेद पर सहस्रै प्रमाणैरवसित। अत सभवदनेकार्थो भिदाशब्द एव तदानुगुण्येन व्याख्यातव्य इति भाव। यथोक्त गुणसौरभे तत्तत्पदार्थसामर्थ्यानुपमर्देन शब्दत। अर्थो बोध्यो न शब्दस्य सत्त्वादर्थोपमर्दनमिति। (श्लो ८५८) अत्र निदर्शनान्तराणि तत्रोक्तान्यनुसन्धेयानि ॥ ३३३ ॥

**अतो निर्विषराशिस्थो विषबिन्दुश्च निर्विषम्।**
**ग्रन्थेऽस्मिन्नेव यद्ब्रह्मी त्रयाणां भेदवाक्स्फुटा ॥ ३३४ ॥**

**विषबिन्दुः** विपरीतलक्षणया अमृतबिन्दु। शास्त्रोक्तस्य विषबिन्दुत्वानुपपत्ते। अत 'धर्मो भवत्यधर्मोऽपि' इत्यत्र अधर्मवत्प्रतीयमानोऽपि इतिवत् अत्रापि विषबिन्दुवत्प्रतीयमानोऽपि इति व्याख्येयम् ॥ ३३४ ॥

**शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमात्।**
**येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि ॥ ३३५ ॥**

**मात्स्यं कौर्मं तथा लैंगं शैवं स्कान्दं तथैव च।**
**आग्नेयं तु षडेतानि तामसानि निबोध मे ॥ ३३६ ॥**

**वैष्णवं नारदीयं तु तथा भागवतं शुभम्।**
**गारुडं च तथा पाद्मं वाराहं शुभदर्शने ॥ ३३७ ॥**

सात्विकानि पुराणानि विज्ञेयानि शुभानि वै ॥ ३३८ ॥

ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ।
भविष्यद्वामनं ब्राह्मं राजसानि निबोध मे ॥ ३३९ ॥

सात्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदाः शुभाः ।
तथैव तामसा देवि निरयप्राप्तिहेतवः ॥ ३४० ॥

पाद्मे वैष्णवादीना पुराणाना सात्विकत्वादिनोक्त विभागमाह **शृण्वित्यादिभिः** ॥ ३३५ — ३४० ॥

तथैव स्मृतयः प्रोक्ता ऋषिभिस्त्रिगुणान्विताः ।
सात्विका राजसाश्चैव तामसाश्शुभदर्शने ॥ ३४१ ॥

वासिष्ठं चैव हारीतं व्यासं पाराशरं तथा ।
भारद्वाजं काश्यपं च सात्विका मुक्तिदाश्शुभाः ॥ ३४२ ॥

वामनं याज्ञवल्क्यं च आत्रेयं दाक्ष्यमेव च ।
कात्यायनं वैष्णवं च राजसाः स्वर्गदाश्शुभाः ॥ ३४३ ॥

गौतमं बार्हस्पत्यं च सांवर्तं च यमस्मृतम् ।
शार्ङ्गं चौशनसं देवि तामसा निरयप्रदाः ॥ ३४४ ॥

किमत्र बहुनोक्तेन पुराणेषु स्मृतिष्वपि ।
तामसा निरयायैव वर्जयेत्तान्विचक्षणः ॥ ३४५ ॥

तत्रैवोक्त तादृश स्मृतिविभागमाह **तथैवेत्यादिभिः** ॥ ३४१ — ३४५ ॥

शास्त्राण्यपि च सर्वाणि त्रिविधानि महायते ॥ ३४६ ॥

**यानि सत्त्वपरं विष्णुं वदन्ति परमेश्वरम् ।**
**तानि सर्वाणि शास्त्राणि सात्विकानि मतानि वै ॥ ३४७ ॥**

**प्रजापतिं कृशानुं च तथा देवी सरस्वतीम् ।**
**परत्वेन वदच्छास्त्रं राजसं परिचक्षते ॥ ३४८ ॥**

**यच्छास्त्रं लिङ्गपारम्यं परंदेवमुमापतिम् ।**
**तमःप्रवर्तकं वक्ति तत्तामससमुदाहृतम् ॥ ३४९ ॥**

**सत्वनिष्ठा हि पुरुषा विष्णुमेव यजन्ति ते ।**
**ब्रह्माणं राजसास्सर्वे तमोनिष्ठास्तु शूलिनम्॥ ३५० ॥**

एव गारुडे त्रैविध्यमुक्त शास्त्राणामाह **शास्त्राणीति** ॥ ३४६ — ३५० ॥

**इति पाद्मे गारुडे च त्रिदेवपदसेविनाम् ।**
**विरुद्धं त्रिप्रकारत्वं तद्ग्रन्थस्य त्रिरूपता ।**
**कथं त्रिदेवतैक्यं स्यात्समत्वं वा कथं वद ॥ ३५१ ॥**

एवमुक्तरीत्या देवतात्रयप्रतिपादकाना ग्रन्थाना तदध्येतृणा तत्तत्प्राप्यफलाना च सात्विकत्वादिना विभागोक्ति देवताना स्वरूपैक्ये साम्ये वा नैव सजाघटीतीत्याह **इतीति** ॥ ३५१ ॥

**कृष्णरामादिभक्तेषु तद्ग्रन्थेष्वपि नेदृशः ।**
**विभागो दृश्यते तस्माद्ब्रह्मेशौ न हरिस्स्वयम् ॥ ३५२ ॥**

विमता पुराणोक्ति तारतम्यवत्स्वरूपकदेवताविषयिणी विरुद्धसज्ञकत्वात् व्यतिरेकेण रामकृष्णादिमहिमोक्तिवत् इति प्रयोगो ध्येय इत्याह **कृष्णेति** ॥ ३५२ ॥

**पञ्चसात्विकसाचिव्यात्स्पष्टगारुडवाग्बलात् ।**
**पाद्मस्य ह्युत्तरः काण्डस्स्वयं सिद्धान्त एव सन् ।**
**संज्ञाशक्त्या च पूर्वांशं पूर्वपक्षीकरोति हि ॥ ३५३ ॥**

नन्वेव विष्णूत्कर्षप्रतिपादकत्वेन भवदभिमते पाद्मे कथ पूर्वकाण्डे अन्यथोक्तिरित्यत पूर्वपक्षवचनदशायामेव तत्रैव उत्तरकाण्डे सिद्धान्तप्रतिपादनपरे विष्णुसर्वोत्तमत्वस्यैवोक्तेरिति समाधातु उत्तरकाण्डस्य सिद्धान्तत्वे युक्तित्रयमाह **पञ्चेति स्पष्टेति सञ्ज्ञेति च** । तद्विरुद्धत्वात् सज्ञाशक्तेश्च पूर्वकाण्ड पूर्वपक्ष एवेत्याह **पूर्वांशमिति** ॥ ३५३ ॥

**ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः ।**
**जघन्यगुणवृत्तिस्था अधोगच्छन्ति तामसाः ॥ ३५४ ॥**

गीतोक्त अधिकारित्रैविध्य तद्गतीना च त्रैविध्यमाह **ऊर्ध्वमिति** ॥ ३५४ ॥

**इति गीतोक्तिमार्गेण त्रयाणामधिकारिणाम् ।**
**गतित्रयं दातुमेव चक्रे व्यासात्मको हरिः ।**
**त्रिविधानि पुराणानि बुद्धो बौद्धागमं तथा ॥ ३५५ ॥**

व्यासस्य त्रिविधग्रन्थनिर्माणे निमित्तमाह **इतीति** । तथा च अयोग्यजनमोहनार्थ राजसतामसग्रन्थनिर्माणमित्युक्त भवति । मोहन च तत्वाङ्कुरसरक्षणार्थम् । बौद्धागम यथा तथा गतित्रय दातुमेव इत्युक्त्या तस्यापि सता तत्त्वज्ञानार्थता उक्ता भवति । यथोक्त 'दितिसुतमोहन विमलविबोधन परगुणबुद्ध हे भव मम शरणमि'ति ॥ ३५५ ॥

**हेयाहेयविभागश्च सात्विकेष्वेव दर्शितः ।**
**योग्यानां बुद्धिशुद्ध्यर्थं यतस्ते सात्विकप्रियाः ॥ ३५६ ॥**

मोहकग्रन्थेषु विपरीतोक्त्या तेन सात्विकाना कुतो न मोह इत्यत पुराणकृतैव तेषामग्राह्यत्वस्य सात्विकशास्त्रेषु सुदृढतया समर्थितत्वादित्याह **हेयेति** ॥ ३५६ ॥

**राजसे तामसे चैव विवेकोऽयं न दर्शितः ।**
**अयोग्यानामबोधार्थं ततस्तत्रैव ते रताः ॥ ३५७ ॥**

एव तर्हि तत एव कुतो अयोग्यानामपि मोहानिवृत्तिरित्यत आह **राजसे चेति** ॥ ३५७ ॥

**एवं पुराणकर्त्रैव स्वकृतग्रन्थराशिषु ।**
**ग्राह्यग्राह्यविभागोक्तेर्न सन्देहो विवेकिनाम् ॥ ३५८ ॥**

**तस्माच्छैवब्राह्मणपक्षपुराणवचनाश्रयात् ।**
**न तत्वप्रच्युतिः कार्या कार्याकार्यविवेकिना॥ ३५९ ॥**

अतो मोहकत्वात् सद्भि सच्छास्त्राभ्यास एव नित्य कार्य । दु शास्त्राणि च यत्नत परित्याज्यानि इति स्थितमित्याह **एवमिति** ॥ ३५८ ॥ ३५९ ॥

**द्वितीयाभिनिवेशेन भयं स्यादिति यद्वचः ।**
**तच्चात्मदेहगेहादिद्वयशब्देन भण्यते ॥ ३६० ॥**

**तत्राग्रहाद्भयं ते स्यात्ततो भक्त्या भजेश्वरम् ।**
**इत्याह नो चेद्वाक्यस्य पूर्वोत्तरविरुद्धता ॥ ३६१ ॥**

भागवते (ए. स्क द्वि. २७) 'भय द्वितीयाभिनिवेशत स्यात् ईशादपेतस्य विपर्यया स्मृति । यन्मायायातो बुध आभजेत्र भक्त्यैकयेश गुरुदेवतात्मा' इति श्लोक अद्वैतिन ब्रह्मातिरिक्तद्वितीयवस्तुमिथ्यात्वपरत्वेन वर्णयन्ति । तेन च जीवब्रह्मणोरभेद सिध्यतीति मन्वते । तन्निराकृत्य तस्य भेदपरता निर्धारयति **द्वितीयेत्यादिभिः** । भण्यते इत्युक्त्या तात्पर्योक्त 'आत्मनो देहगेहादि द्वयशब्देन भण्यते' इति हरिवंशवचन सगृह्णाति । तच्च वच इत्याह इत्यन्वय । अभिनिवेशशब्दस्यार्थ **आग्रह इति** । 'अविद्यमान जीवस्य प्रतिभाति तदीयवत्' इति तात्पर्योक्ते । **भय** ससारभयम् । 'बुध. भक्त्या ईश आभजेत्' इति उपास्योपासकभावोक्त्या जीवपरयोर्भेद. स्फुट. । **नो चेत्** उक्तमर्थमनङ्गीकृत्य,

द्वितीयशब्दस्य निर्विशेषब्रह्मातिरिक्तप्रपञ्चमात्रमर्थमङ्गीकृत्य तत्र अभिनिवेशात सत्यत्वभावनया भय स्यादित्यप्रामाणिकार्थ वर्ण्यते चेत् ॥ ३६१ ॥

**आत्मतोऽन्यद् द्वितीयँ चेद् भयं तत्राग्रहाद्यदि ।**
**तर्हीशभक्तिभजनरूपे मुख्ये द्वितीयके ।**
**कथमन्ते विधिश्च स्याद्यत्पूर्वार्धे निषिध्यते ॥ ३६२ ॥**

**गुरुदेवतयोरात्मा चित्तं यस्येति विग्रहे ।**
**पदं तदपि वक्तीशभजकस्य गुणान्तरम् ॥ ३६३ ॥**

विरुद्धतामेवोपपादयितु अत्रैव श्लोके अनेकद्वितीयवस्तुविधान दर्शयति **तर्हीति**। कर्ता बुध । क्रिया आसम्यक् भजनम् । ईश कर्म । एकया भक्त्या इति ईशभजने इत्थ भाव । गुरुदेवतात्मा इत्यनेन 'यथा देवे तथा गुरौ' इति प्रमाणोक्ता गुरुदेवतयो योग्यताऽनुसारिणी भक्ति । एतत्सर्व द्वितीय साक्षाद्भेद-साधकत्वान्मुख्यमित्याह **मुख्ये इति**। तदुक्त अनुव्याख्याने 'कर्तृकर्मणोरुत्सर्गतो भिदा' इति । अङ्गीकृतश्चाय नियम स्वकर्मकसविद्रूपत्वमनङ्गीकुर्वता मायिना ॥ ॥३६२ ॥ ३६३ ॥

**न चेत्प्रागुक्तभजनं विरुद्धार्थः कथं वद ।**
**लिङर्थस्सोऽपि बलवान्विशेषणपदार्थतः ॥ ३६४ ॥**

बलवान् 'न विधौ पर शब्दार्थ' इति शाबरवचनात् ॥ ३६४ ॥

**अतो ग्रान्थिकमुद्राज्ञो नापातार्थेन तुष्यति ॥ ३६५ ॥**

ग्रान्थिक मुद्रा प्रमाणविरोधाभावरूपयोग्यताघटितागमलक्षणम् ॥ ३६५ ॥

**पूर्वोत्तराविरुद्धार्थं वदेन्मीमांसया बुधः ।**
**न चेदाकाशशब्देन परं ब्रह्म कथं जगुः ॥ ३६६ ॥**

**पूर्वेति**। तदुक्त वार्तिके 'पौर्वापर्यपरामृष्ट शब्दोऽन्या कुरुते मतिम्' इति। **जगुः** मीमासका इति शेष ॥ ३६६ ॥

**ग्रन्थेऽस्मिन्देहगेहादि भयहेतुतयोच्यते।**
**स्थले स्थले तत्समोक्त्या तस्यैव स्याद्**
**द्वितीयता ॥ ३६७ ॥**

**स्थले स्थले** 'हित्वाऽऽत्मपात गृहमन्धकूपम्'। 'हित्वा गृह ससृतिचक्रवालम्' 'किमु व्यवहितापत्यदारागारधनादय' इत्यादिषु। **द्वितीयता** भयजनकताऽवच्छेदक रूपम् ॥ ३६७ ॥

**सद्धर्मं साधुभिस्सङ्गं तत्पूरुषनिषेवणम्।**
**यो ह्यपेक्षितमाचष्टे निराचष्टे कथं हि तत् ॥ ३६८ ॥**

**सद्धर्मं** 'धर्मस्यापवर्ग्यस्य' 'तच्छ्रद्धया भगवद्धर्मचर्यया' इत्यादिना, एव **सत्सङ्ग** 'तुलयाम लवेनापि न स्वर्ग नापुनर्भवम्। भगवत्सङ्गिसङ्गस्य' 'सङ्गस्तेष्वथ ते प्रार्थ्य' इत्यादिना, **तत्पूरुषनिषेवण** 'महत्सेवा द्वारमाहुर्विमुक्ते' इत्यादिना **अपेक्षितं** पुरुषार्थहेतुम्। **तत्** भयनिवृत्तिहेतुतया स्वयमेव तात्पर्यतो विहित एतत्सर्वं द्वितीय वस्तु। **निराचष्टे** भयहेतुतया ब्रूयात् ॥ ३६८ ॥

**अपि चाभिनिवेशस्य भयदत्वे स एव हि।**
**त्याज्यस्स्यात्सोऽपि बाध्यो न द्वितीयं केन**
**बाध्यते ॥ ३६९ ॥**

**स एव** अभिनिवेश एव न तु द्वितीयमित्येवकारार्थ। अन्यथा चोरापराधेन माण्डव्यस्य शूलारोपणन्याय। **बाध्यो न** यत्र भयदत्व तत्र त्याज्यत्वमित्येव व्याप्ते। कण्टकादिषु तथैव दर्शनात्। न तु बाध्यत्वमिति। तत्रैव व्यभिचारात्। द्वितीयबाध्यत्वम् तु कफोणिगुडायितमिति भाव ॥ ३६९ ॥

**अतोऽद्वितीयभावस्य कथमाशात्र कथ्यताम् ।**
**गृहात्प्रव्रजिते भिक्षौ किं गेहं भस्मसाद् भवेत् ॥ ३७० ॥**

**प्रव्रजिते** यद्भयहेतु तत् त्याज्यमिति अनुसन्धाय इति पूरणीयम् । **भस्मसाद् भवेदिति** । दूरे बाधित इति हृदयम् । अन्यथा भस्मीभावस्य सत्यत्वेनैव व्याप्ते बाधाभावे निदर्शनत्वानुपपत्ते । ज्ञाननाश्यत्व मिथ्यात्व इत्यभिप्रायेण वा उक्ति ॥ ॥३७० ॥

**द्वयोऽयं देहगेहादिस्स्वभावेनैव देहिनाम् ।**
**अविद्यमानोभिमानाद्भाति स्वीयतया किल ॥ ३७१ ॥**

भागवते तत्रैवोत्तरश्लोकार्थ (श्लो ३८) विविनक्ति **द्वय इति** । अविद्यमानोऽप्यवभाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथो यथा । तत्कर्मसङ्कल्पविकल्पक मनो बुधो निदध्यादभय तत स्यात्' अस्यार्थ हरिवशासमाख्योक्त्या तात्पर्ये निर्णीत । 'आत्मनो देहगेहादि द्वयशब्देन भण्यते । अविद्यमान जीवस्य प्रतिभाति तदीयवत् । जाग्रद्वत्तु यथा स्वप्न प्रतिभाति मनोरथ । विद्यमानवदेवैवम् देहादीशावशे स्थितम् । विभाति स्ववशत्वेन सैषा ससृतिरुच्यते । तस्मात्तद्विषय त्यक्त्वा मनो विष्णौ निवेशयेत् इति ॥ ३७१ ॥

**सर्वथा विद्यमानत्वे शशशृङ्गायितो भवेत् ।**
**पारमार्थेन तादृक्त्वं तव मे तूक्तवर्त्मना ॥ ३७२ ॥**

पारमार्थ्येन अविद्यमान इति तु अयुक्तम् । प्रमितस्य पारमार्थ्यनिषेधायोगात् । स्वव्याहत च एव व्याख्यान यथोक्त भामत्याम् । 'प्रमाणानि खलु स्वगोचरे प्रवर्तमानानि तत्वमित्येव प्रवर्तन्ते इति ॥ **उक्तवर्त्मना** अकारवाच्यविष्णोर्वशत्वेन विद्यमान- इत्युक्तमार्गेण ॥ ३७२ ॥

**ईशात्सर्वेश्वराद्विष्णोरपेतस्य ततः प्रभोः ।**
**ब्रह्मणस्तु द्वितीयेऽपि ब्रह्मण्यभिनिवेशतः ॥ ३७३ ॥**

**निर्गुणाख्येऽभिमानेन भयं भवति यन्नृणाम् ।**
**विपर्ययः स्मृतिश्च स्यान्मुकुन्दब्रह्ममोचनात् ॥ ३७४ ॥**

इदानी 'भय द्वितीयाभिनिवेशात' इति पद्य अद्वैतशैवमतयोर्निरासकत्वेन प्रवृत्तिकर्मनिरासपरत्वेन च व्याख्याति **ईशादित्यादिभिर्नवभिः** ॥ ईशब्दवाच्याया लक्ष्म्या **ईशात्** अत एव सर्वेश्वराद्विष्णोरपेतस्य, तस्मिन् परब्रह्मत्वबुद्धिशून्यस्य, प्रत्युत तत प्रभोर्ब्रह्मण सकाशात्, **द्वितीयेऽपि** प्रमाणबाह्यतया गर्हिते दुराग्रहमात्रकल्पिते निर्गुणे **ब्रह्मणि अभिनिवेशतः** परब्रह्मत्वदुराग्रहवत **विपर्ययः** मिथ्याज्ञान तन्निमित्तक भय अन्धतम स्यात् । तत्र हेतु **मुकुन्दस्य** मोक्षप्रदस्य **ब्रह्मणः** मोचनात् अपलापादिति ॥ ३७३ ॥ ३७४ ॥

**सगुणस्य द्वितीयं हि निर्गुणं स्यान्न चापरम् ।**
**निरर्थोऽसि निरर्थाख्यं भेदकं यदि मुञ्चसि ॥ ३७५ ॥**

निर्गुणमित्यत्र निरुपसर्गस्याभाव अर्थ । तथा च **सगुणस्य द्वितीय** भिन्नम् । सजातीयेत्यर्थस्य परेणैव अनादरणात् भिन्नमित्येवार्थस्तेन वाच्य । **निर्गुणमेव** गुणरहितमेव स्यात् । न च **अपरं** गुणपूर्णम् । स्वस्य स्वस्मादेव भिन्नत्वासभवात् । न वा अपर त्रिगुणभरित प्रकृत्यात्मकम् । अन्यथा निरुपसर्गस्य अर्थ भेद **मुञ्चसि** । **यदि** । तर्हिनिरथौसि शब्दार्थानभिज्ञ **असि** भवे ॥ ३७५ ॥

**द्वितीयकोटिस्थेशात्ते द्वितीयं स्यात्तदेव हि ॥ ३७६ ॥**

**ते** तव मते, 'ब्रह्म सत्य जगन्मिथ्या' इत्येवरूपे, द्वितीयकोटिस्थेशात् जगदन्तर्भूतात् ईशात् सगुणात् द्वितीयम् **तदेव** निर्गुणमेव **हि** उक्तनिरुपसर्गसामर्थ्यात् स्यात् ॥ ३७६ ॥

**अतो भक्त्या तमेवेशं भजेद्यस्तु गुरुर्भुवि ।**
**देवता च भवेत्तादृशाचार्ये यत्नवान्बुधः ॥ ३७७ ॥**

**अतः** निर्गुणे अभिनिवेशस्य तमआख्यभयहेतुत्वात् **तमेव** **मुकुन्दमेव ईश** परब्रह्मत्वेन 'परब्रह्म परधाम पवित्र परम भवान्' इति गीतोक्तवर्त्मना **भजेत्** । तदर्थं **गुरुः** मध्व स चासौ **देवता** वायु । तयोरभेदात् । तच्छास्त्राध्ययने **आत्मा** यत्नः यस्य स तादृश भवेत् । आत्मा यत्ने धृतौ देहे इत्यभिधानम् ॥ ३७७ ॥

**इति वाक्यार्थमालोच्य त्यजान्यद्भजनः प्रभुम् ॥ ३७८ ॥**

**अन्यत्** नैर्गुण्यभावनाम् ॥ ३७८ ॥

**अविद्यमानो ह्यत्यन्ता सन्नपि द्वयशब्दितः ।**
**द्वितीयो निर्गुणाख्यात्मा ध्यातुर्नैर्गुण्यवादिनः ।**
**दुर्धिया भाति तत्वं तु तन्न किन्त्वच्युताभिदः ॥ ३७९ ॥**

'अविद्यमान' इति श्लोकमुक्तार्थे योजयति । **अविद्यमानः** अत्यन्तासन् । स्वकीयत्वेन इत्यध्याहार अस्या योजनाया नापेक्षित । द्वयशब्दार्थस्य निर्गुणस्य सर्वथाऽप्रामाणिकत्वादेव । **द्वयः** निर्गुण आत्मा । ध्यातु सर्वमपि ध्यानरूपमुपासन अविद्यमानविषयकमेवेति वासनावत मायिन **धिया** उक्तदुर्धिया **भाति** मुखत **तत्वं तु तन्न** । 'भावाभावविवर्जित समरस' इति वदद्भिस्तैरेव निर्गुणस्य प्रामाणिकत्वरूपतत्त्वताऽनङ्गीकारात् । किन्तु अच्युताभिध- 'अच्युतो यो गुणैर्नित्यमेवाखिलै'रित्युक्त गुणपरिपूर्ण एव **तत्त्वं** स्वतन्त्रतत्त्वम् ॥ ३७९ ॥

**अस्मात्पद्यद्वयात्पूर्वपद्ये स्पष्टोदितः किल ।**
**उपर्युपरि चक्राङ्कोऽधोऽधो नारायणश्च यः ॥ ३८० ॥**

पूर्वपक्षे 'मन्ये कुतश्चिद्भयमच्युतस्ये'ति पद्ये, **उपर्युपरि** अव्यवहितोपरितने 'शृण्वन् सुभद्राणि रथाङ्गपाणे' इति श्लोके रथाङ्गपाणिरिति चक्राङ्क अधोऽध अव्यवहिताधोभागस्थे 'नारायणायेति समर्पये तत्' इति श्लोके नारायणश्च **यः** स एव तत्त्वमिति पूर्वेणान्वय ॥ ३८० ॥

**दैवत्वे नासदीशादेर्वा द्वयस्याग्रहाच्च भीः ।**
**गुरुत्वेन तु तत्सेवाऽसूचिपूर्वविशेषणात् ॥ ३८१ ॥**

शैवादिमतमपाकरोति **दैवत्वेनेति**। सर्वोत्तमत्वेन इत्यर्थ । असन् अविद्यमानश्चासौ ईशादिश्च तस्य द्वयस्य रुद्रादे । आग्रहात् परदेवतात्वाभिमानात् । 'साम्याधिक्ये तदन्येषामित्युक्तपरतत्वप्रद्वेषात् **भीः** अधमा गति । गुरुदेवतात्मा इति विशेषणेन इतरदेवतासु गुरुत्वदेवत्वबुद्धि· योग्यतानुसारिणी आवश्यकीत्याह गुरुत्वेनेति । 'परिवारतया ग्राह्या अपि हेया प्रधानत ' इत्युक्ते । एतदाह **गुरुत्वेनेति**। यद्वा मीमासकाभिमतकाम्यकर्मनिराकरणमनेन क्रियते । तथा हि । **अविद्यमानः** शास्त्रतात्पर्यविषयतया अविद्यमान रोचनार्थ फलश्रुतिरिति वचनात् 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादिशास्त्रतात्पर्याविषय इत्यर्थ । 'न ह्यल्पफलभाग्वेदो वासुदेवैकसश्रयः' इति भागवततात्पर्योक्ते । **द्वयः** 'नारायणायेति समर्पयेत्तत्' 'शृण्वन् सुभद्राणि रथाङ्गपाणे ' इत्यत्रैव पूर्वत्र उत्तरत्र चोक्तान्निवृत्तिकर्मणो भिन्न प्रवृत्तिकर्मसमूह । **ध्यातुः** 'इदमद्य मया लब्ध इम प्राप्स्ये मनोरथम्' इति विषयविचारमग्नस्य **धिया** कामकलुषितया **अवभाति** शास्त्रतात्पर्यविषयतया प्रतीयते । कामिन कृपणालुब्धा पुष्पेषु फलबुद्धय· इति तात्पर्यवचनात् । तस्मात् बुध· कर्मसकल्पविकल्पक मनो निरुध्यात् बहिर्मुख यथा न भवति तथा निगृह्णीयात् । सिद्धविशेषे इष्टे इष्टसाधने च हरौ स्थापयेच्च । तत अभय स्यात् । 'निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्' इत्युक्त निर्वाण भवेत् इति ॥ ३८१ ॥

**त्वमेवाहमिति प्रोक्तेप्यैक्याशा नैव शक्यते ।**
**त्वमेवाहमिति प्राहुरतिस्निग्धं यतो जनाः ॥ ३८२ ॥**

**अहं पृथक्पृथक्त्वं किं त्वमेवाहमिति प्रभुः ।**
**स्वमन्त्रिणमतिप्रेम्णा किं न वक्ति प्रियंवदः ॥ ३८३ ॥**

**तस्मादेतादृशे वाक्ये प्रतीतार्थे तु बाधिते ।**
**प्रेमग्राह्यमबाधे तु स्वरूपैक्यमिति स्थितिः ॥ ३८४ ॥**

**अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः।**
**न नौ पश्यन्ति कवयश्छिद्रं जानुमनागपि ॥ ३८५ ॥**

बोध्यस्य मरणसमये बोधकस्तस्मै तत्त्व उपदिशति **अहं भवान्न चान्यस्त्वं इत्यादिना।** अय श्लोक **अग्रे (३७५)** समग्र उदाहृत । स श्लोकस्तात्पर्ये व्याख्यात । जीवसत्ताप्रदत्वाच्च सदृशत्वाच्च केशव । कथ्यते तदभेदेन न तु जीवस्वरूपत इति॥ तत्र प्रतीत स्वरूपैक्य भेदानुभवबाधितम्। अत अतिप्रेमनिमित्तकोऽय औपचारिको व्यपदेश । रूढोपचारत्वान्न प्रयोजनापेक्षा इत्याह **त्वमित्यादिभिः** ॥ ३८२ ॥ ३८३ ॥ ३८४ ॥ ३८५ ॥

**इति भागवते प्रोक्ता ततो हंसस्य वागपि।**
**लोकानुसारिणी बोध्यहंसे प्रेमैव शंसति।**
**बोध्यबोधकयोरज्ञसुज्ञयोरैक्यवादिनी ॥ ३८६ ॥**

इति भागवते (च स्क अ २८ श्लो ६९) प्रोक्ता सुज्ञस्य हसस्य परमात्मन बोधकस्य, अज्ञ हस बोध्य जीव प्रति वाक्, यथा लोके नृप प्रियममात्य प्रति 'ममात्मा भद्रसेन' इति उपचारेण वक्ति तदनुसारिणी तात्पर्यत प्रेमैव शसति। न तु स्वरूपैक्यम्। आत्मनो जीवस्य धर्मिण अज्ञत्वेन बोध्यत्वेन च प्रत्यक्षेण, तथा प्रतियोगिन परस्य सर्वज्ञत्वेन बोधकत्वेन च निर्णीतत्वेन ऐक्यप्रतीते जीवे साक्ष्यनुभवबाधेनानुत्थानादेवेति भाव ॥ ३८६ ॥

**अथवा बिम्बभूतस्य स्वस्य स्वप्रतिबिम्बतः।**
**जीवाद्व्यक्त्यविनाभावं न त्वैक्यं वक्ति बाधितम् ॥ ३८७ ॥**

स्वस्य परस्य। अविनाभाव सयुजौ इति श्रुत्युक्ता व्याप्तिम्। व्याप्तौ ऐक्यव्यपदेश. 'सर्वं समाप्नोषि ततोऽसि सर्व' इति गीताया समर्थित ॥ ३८७ ॥

**विशिष्टैक्यानभिमतेर्मुख्यार्थस्तु तवापि न।**
**अमुख्यार्थानुसारेण कुतो लोकव्यतिक्रमः ॥ ३८८ ॥**

तुशब्देन परस्य प्रातिपदिकद्वयस्य मम तु विभक्तिमात्रस्य अमुख्यार्थता इति विशेष सूचयति । एव परेणाश्रिताया जहदजहल्लक्षणाया सर्वथाऽप्रामाणिकत्व च ॥ ३८८ ॥

**बर्हिष्मन्नेतदाख्यानं पारोक्ष्येण प्रकीर्तितम् ।**
**यत्परोक्षप्रियो देवो भगवान् विश्वभावनः ।**
**इति पौरंजनोपाख्यानोपसंहारवागियम् ॥ ३८९ ॥**

बर्हिष्मन्निति नारदस्य वचनम् । **पारोक्ष्येण** सात्विकाना यथार्थज्ञान इतरेषा विपरीत यथा भवेत्तथा समुग्धप्रकारेण । देव इत्यनेन 'परोक्षप्रिया इव हि देवा ' इति श्रुतिप्रमाण द्योत्यते । **विश्वभावनः** विश्वस्य सुरासुरप्रपञ्चस्य भावन तत्तद्योग्यताऽनुरोधेन भावयिता ॥ ३८९ ॥

**अतः परोक्षतस्तत्त्वमत्र सर्वत्र कीर्तितम् ।**
**इतोऽप्यापातदृश्योऽर्थो नात्र नम्यो मनीषिणा ॥ ३९० ॥**

'इतोऽपि' इत्यत्रापिपदेन लोके रूढोपचारेण तादृशप्रयोग समुच्चिनोति ॥ ॥३९० ॥

**अहं भवान्न चेत्येकं वाक्यं वाऽत्र विभिद्यते ।**
**तेन हंसान्तराभेदं हंसराट्स्वस्य निह्नुते ॥ ३९१ ॥**

मुख्यवृत्त्याऽपि श्लोक अनुरूपविभागाश्रयणेन भेदपरतया योजयति **अहमिति** ॥ 'अह भवान्' इति सामानाधिकरण्येन तादात्म्य प्रसज्य नयानिषेधेऽन्योन्याभावार्थ स्फुट । **हसराट्** परमात्मा । **निह्नुते** निराकरोति ॥ ॥३९१ ॥

**अन्यस्त्वमित्यन्यदेव वाक्यं तेनात्मभिन्नताम् ।**
**तस्य ब्रवीति हंसोऽसौ त्वमेवाहं विचक्ष्व भोः ॥ ३९२ ॥**

इति वाक्यान्तरेणासौ त्वमेव त्वय्यहं मतिम्।
कुरु नान्यैरिति ब्रूते स्पष्टं तर्ह्यावयोर्भिदा ॥ ३९३ ॥

कुतो न दृश्यते सर्वैरिति शङ्कान्तरे सति।
तस्मादुत्तरवाक्येन तां शंकां प्रतिषेधति ॥ ३९४ ॥

क्षीरान्तर्नीरमिव यदावां मिश्रौ सदा मिथः।
न नौ पश्यन्ति तच्छिद्रं मध्ये तेनावयोर्भिदा ॥ ३९५ ॥

न स्पष्टं दृश्यते सा वै दृश्यते च विवेकिभिः।
इति वा गूढतत्वोक्तेर्हृदयं बुध्यतां बुधैः ॥ ३९६ ॥

अन्यस्त्व इति पुनरपि भेदोक्ति अभ्यासेन तात्पर्यज्ञापिका एतद्विपरीता ऐक्यबुद्धि अनर्थकरत्वात् कुत्रापि न कार्येत्याह **त्वमेवेति**। त्वय्येव अह मति कुरु न तु ब्रह्मणि न वा जीवान्तरे। ननु ईश्वरो न जीवाद् भिन्न। जीवाद् भेदेनानुपलभ्यमानत्वात् इति चेन्न सामान्यव्याप्तौ नानावृक्षरसेषु मधुभावमापन्नेषु व्यभिचार। चेतनत्वे सति इति विशेषणेऽपि समुद्रसङ्गतनदीदेवतासु व्यभिचार। तासा क्षीरनीरवच्चिद्योगात् पञ्चद्रौपदीवदेकदेहवत्वन्यायप्राप्त्या स्वपरस्वरूप-ज्ञानमत्यन्तविविक्ततया नास्तीति व्यभिचारकथन नानुपपन्न (वि त श्री ५६८)। तदेतदभिप्रेत्याह **क्षीरान्तर्नीरमिवेति**। **न स्पष्ट दृश्यते इति** च। 'विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुष' इति गीतोक्तिमनुरुध्याह **दृश्यते चेति**। तथा च बलवत्सजातीयप्रतिबन्ध स्वाभिव्यञ्जकयोगसामर्थ्यादिराहित्य इत्यादिनिमित्ता-देवानुपलम्भ इति हृदयम् ॥ ३९१ ॥ ३९२ ॥ ३९३ ॥ ३९४ ॥ ३९५ ॥ ३९६ ॥

व्याप्यव्यापकभावं च व्यतिरिक्तत्वमात्मनः।
अन्योन्याश्रिततां नो चेद्बोध्यबोधकतां तथा ॥ ३९७ ॥

व्यभिचारेण नष्टां च स्मृतिमव्यभिचारतः।
अविनाभावपर्यायात्कथं लब्धां च सोऽवदत् ॥ ३९८ ॥

**सव्यापकतयाऽत्मानं व्यतिरिक्ततयाऽत्मनि।**
**विद्वान्स्वप्न इवामृश्य साक्षिणं विरराम ह ॥ ३९९ ॥**

**परे ब्रह्मणि चात्मानं परंब्रह्म तथात्मनि।**
**वीक्षमाणोऽविहायेक्षामस्मादुपरराम ह ॥ ४०० ॥**

**एवं समानसो हंसो हंसेन प्रतिबोधितः।**
**स्वस्थस्तद्व्यभिचारेण नष्टामाप पुनस्स्मृतिम्॥ ४०१ ॥**

अत्रैव पुरजनाख्याने सुस्पष्ट भेदपरान् त्रीन् श्लोकान् अग्रे (३९९, ४००, ४०१) उदाहरिष्यन् तदर्थ विविनक्ति **व्याप्येति**॥ अत्र परमात्मन, **व्यापकतया, आत्मान** इति कर्मतया, **व्यतिरिक्ततया** इति भिन्नतया **आत्मनि** इति अधिकरणतया, '**परे**' '**पर**' इति च उत्कृष्टतया निर्देशात् सतात्पर्य भेद समर्थितो ध्येय । 'स्वप्न इव' इत्यत्रोक्त स्वप्नसाम्य, 'अनित्यत्वविकारित्वपारतन्त्र्यादिरूपत । स्वप्नादिसाम्य जगतो न तु बोधनिवर्त्यता' इति तत्त्वनिर्णयोदाहृतप्रमाणानुसारेण ध्येयम्। '**अविहायेक्षा**' इति ससारोपरमानन्तरमपि ज्ञानस्यानुवृत्तिकथनेन, सर्वथा ज्ञाननाश एव पुरुषार्थ इति मायिमत निरस्त ज्ञेयम्। मग्नस्य हि परेऽज्ञाने कि न दुःखतर भवेत्' इति ज्ञाननाशस्य अपुरुषार्थत्वेन निन्दनात्। अत एव 'विहायेक्षा' इति पदच्छेदेऽपि ईक्षाशब्द वृत्तिज्ञानपर एव व्याख्येय । अत्रैव 'नष्टा स्मृतिमवाप ह' इति पुन परमात्माख्यहसोपदेशेन ज्ञानप्राप्तेरेव शासनात्। स्वस्थ इति स्वरूपेणावस्थितिरूपमोक्षोक्त्या 'अस्मादुपरराम' इत्यत्र अस्मादित्यस्य ससारादित्यर्थाश्रयणमेवोचित न तु ज्ञानमात्रादिति। तथा सति प्रागुक्तदोषापातात्। वीक्षाशब्दस्य स्त्रीलिङ्गत्वेन अस्मादिति परामर्शानुपपत्तेश्चेति दिक्॥ ३९७ ॥ ॥३९८ ॥ ३९९ ॥ ४०० ॥ ४०१ ॥

**इति तत्रैव तेनोक्तवचनानि विचारय।**
**न चारय मतिं नीचस्योच्चभावे कदाचन ॥ ४०२ ॥**

तत्रैव पौरञ्जनोपाख्याने एव। तेन नारदेन। कदाचन मुक्तौ ससारे वा॥ ॥४०२॥

**यथोल्मुकाद्विष्फुलिङ्गाद्धूमाद्वापि स्वसंभवात्।**
**अप्यात्मत्वेनाभिमताद्दाहकोऽग्निः पृथङ्मतः ॥ ४०३ ॥**

**भूतेन्द्रियान्तःकरणात्प्रधानाज्जीवसंज्ञितात्।**
**आत्मा तथा पृथग्द्रष्टा भगवान्ब्रह्मसंज्ञितः ॥ ४०४ ॥**

यथेत्यादिश्लोकद्वय (भा तृ ३९ अ श्लो ३९-४०) कपिलाख्याने विद्यमान तत्र पूर्वश्लोके— 'यथा पुत्राच्च वित्ताच्चे'त्यत्र देहात्मनो स्फुटतरविवेक समर्थित । अत्र ब्रह्मण प्रकृतिप्राकृताभ्या जीवाच्च भेद सोपपत्तिक समर्थ्यते। 'अप्यात्मत्वेनाभिमतात्' इति विमति सूचिता। उत्तानदृशा अभिन्नत्वेन प्रतीयमानादित्यर्थ । विमत ब्रह्म, तद्विरुद्धधर्माधिकरणत्वात् यथाऽग्नि उल्मुकात्। न चासिद्धि । ब्रह्मणो द्रष्टृत्वात् भूतेन्द्रियादेश्चातथात्वात्। नापि दृष्टान्त साधनविकल । अग्नेर्दाहकत्वात्। उल्मुकस्य दाह्यत्वात्। एव ब्रह्म प्रधानभिन्न तत एव तद्वदेव। **जीवसंज्ञितात्** 'अहमित्येव यो वेद्य स जीव इति सज्ञित । स दु खी स सुखी चैव स पात्र बन्धमोक्षयो' इति श्रुत्या साक्षिप्रत्यक्षेण च बन्धदु खाधिकरणात्। **आत्मा** अन्तर्यामी। 'यो विज्ञाने तिष्ठन् . एष ते आत्माऽन्तर्यामी' इति श्रुते । **द्रष्टा** सर्वज्ञ । 'न हि द्रष्टुर्दृष्टे विपरिलोपो विद्यते' इति श्रुते । **ब्रह्मसंज्ञितः**— 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणा' इति श्रुते गुणपूर्ण । जीवस्त्वनेवविध प्रमित । तथाच प्रयोग जीवब्रह्मणी, पृथक्, उक्तरूपविरुद्धधर्माधिकरणत्वात् अग्न्युल्मुकवत् इति। एव स्वसभवादित्युक्त जन्यजनकभावरूपविरुद्धधर्माधिकरणत्व प्रयोगत्रयेऽपि हेतुरनुसन्धेय॥ न चानुमानाना अप्रयोजकता। प्रकृतिप्राकृताना परमात्माधीनत्वस्य ईशावास्यमिद सर्वं यत्किञ्च जगत्या जगत्' इत्यादिश्रुतिप्रमितत्वात्। एव जीवस्येशाधीनत्वस्य भिन्नोऽचिन्त्य परमो जीवसङ्घात्' इति सोपपत्तिकश्रुतिनिर्णीतत्वात्। न च भेदस्यापारमार्थिकत्वम्। 'पृथगात्मान प्रेरितार च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ।' इति तज्ज्ञानस्य मोक्षहेतुत्वोक्तेः॥ ४०३॥ ४०४॥

**तृतीयस्कन्धगैषा वाग्जडाज्जीवात्पृथक्कृतम् ।**
**अद्वितीयश्रुतेरर्थं तृतीयं ब्रह्म शंसति ॥ ४०५ ॥**

-अनेनैव भागवतश्लोकेन 'एकमेवाद्वितीय ब्रह्म' इति श्रुतेर्मायावादिकल्पित ऐक्यपर अर्थोऽप्यपहसित इत्याह **तृतीयेति॥ जडात्** विजातीयात् । **जीवात्** सजातीयात् । मायावादिनो हि अत्र वाक्ये एवकारेण सजातीयभेद निषिध्यते, अद्वितीयशब्देन च विजातीयभेद इत्याहु । इह च भागवते जीवजडाच्च भेद सुदृढतया समर्थित । तत्कथमिवाद्वितीयश्रुति भेद निषेद्धु शक्नुयादिति भाव । का तर्हि अद्वितीयश्रुतेरेतच्छ्लोकानुगुणोऽर्थ इत्यत आह **तृतीयमिति**। अनेन अद्वितीयपद न प्रसज्यप्रतिषेधार्थक किन्तु न द्वितीय किन्तु तृतीय इति पर्युदासार्थकमेव व्याख्येय इति भाव ॥ ४०५ ॥

**तस्माद्भेदमभेदोक्तेरर्थं चाहेति मे मतिः ॥ ४०६ ॥**

**तस्मादिति** एवमर्थान्तरस्यापि सभ्भवादिति भाव । **अभेदोक्तेः** अभेदपरतयाऽद्वैतिभिरभिमतोक्ते । भेदमर्थ चेति योजना । चशब्देन, प्रसज्यप्रतिषेधार्थकत्वाश्रयणेऽपि 'अद्वित यपदस्य सजातीयवस्त्वन्तरनिषेधपरत्वात्' इति वादावल्युक्तमर्थ समुच्चिनोति ॥ ४०६ ॥

**अप्यात्मत्वेनाभिमतादित्यज्ञान्यभिमानजाम् ।**
**अश्रद्धेयामैक्यबुद्धिं गर्हार्थोऽपिरगर्हयत् ॥ ४०७ ॥**

**परपक्षं प्रतिक्षिप्य स्वपक्षस्थापनोद्यता ।**
**यदियं वाक्ततश्चैषा केषां तोषाय नेष्यते ॥ ४०८ ॥**

एव तर्हि 'अह ब्रह्मास्मी'ति श्रुतेरैक्यपरतया अद्वैतिभिर्व्याख्याने किं निमित्तमित्यतस्तेषामविवेक एव निमित्तमित्याह **अपीति**। तदुक्त तत्त्वनिर्णये 'अह ब्रह्मास्मीत्यादि तु अन्तर्याम्यपेक्षये'त्यादि । तट्टीकाया च तदेव मुख्यामुख्यत्वाभ्या पिण्डविषय शब्द अविवेकिनो बाह्येषु जीवादिष्वेव प्रयुञ्जते यथा दहतिशब्द काष्ठे । प्राज्ञास्तु अमुख्यमशमनादृत्य मुख्यार्थे हरौ प्रयुञ्जते' इति । 'सङ्गतात्र

विविच्यते' इति सप्तमस्कन्धतात्पर्योक्तमात्रानुसन्धेयम्। तदेतदभिप्रेत्याह **अगर्हयदिति** ॥ ४०७ ॥ ४०८ ॥

**भगवत्त्वेन नैर्गुण्यमखण्डार्थं च संज्ञया।**
**निराचष्ट ब्रह्मनिष्ठां स्पष्टमाचष्ट चान्यताम्।**
**अनुवादित्वशङ्काया गर्भस्त्रावोऽभवत्ततः ॥ ४०९ ॥**

परपक्षप्रतिक्षेपप्रकारमेवाह **भगवत्त्वेनेति संज्ञया** ब्रह्मसज्ञित इत्यत्रोक्तेन गुणपूर्णत्वरूपपरममुख्यार्थवाचकेन सज्ञाशब्देन **अखण्डार्थं** सर्ववैदिकशब्दाना लक्षणया निर्विशेषचिन्मात्रपरताम्। न हि गङ्गापदलक्ष्य तीर गङ्गापदसज्ञितमिति कोऽत्यनुन्मत्तो निर्दिशतीति भाव। **ब्रह्मनिष्ठा** ब्रह्मधर्मिकाम्। **अन्यता** जीवादिप्रतियोगिक अन्योन्याभावलक्षण स्वरूपभेदम्। पृथगित्युक्तपृथक्त्वस्य अन्योन्याभावस्वरूपभेदापरपर्यायत्वस्य अदृश्यत्वनयाऽनुव्याख्याने समर्थित-त्वादिति भाव। **स्पष्ट** उल्मुकादिदृष्टान्तप्रदर्शनेन अविनाभावसमर्थनेनेति भाव। **अनुवादित्वेति**। 'न च जीवेश्वरभेद सिद्ध इत्यनुवादकत्व भेदवाक्यानाम्। आगम विना ईश्वरस्यैवासिद्धे' इति तत्त्वनिर्णयोक्तेरिति भाव ॥ ४०९ ॥

**तत्त्वसंख्यानकार्याय योऽवतीर्णो महीतले।**
**सोऽम्बां प्रत्याह नातत्वं तत्सर्वं परमार्थसत् ॥ ४१० ॥**

**स्पष्टदृष्टान्तदृष्टत्वादम्बासम्बोधनत्वतः।**
**तत्त्वदृक्कपिलोक्तित्वात्सेयं नैव पदाच्चलेत् ॥ ४११ ॥**

कपिलोक्ते· आप्तोक्ततासाधनेन निरवकाशतामाह द्वाभ्या **तत्त्वेत्यादिना**। तत्त्वदृगित्युक्त्या वक्त्रानुकूल्य अम्बा प्रतीत्युक्त्या श्रोत्रानुकूल्य तत्त्वसख्यानकार्यायावतीर्ण इत्युक्त्या प्रसङ्गानुकूल्य चोक्तानि ध्येयानि। नैव पदाच्चलेदिति निरवकाशतामाह ॥ ४११ ॥

**अस्पष्टहंसवाक्तस्मादस्माद्विस्पष्टवाक्यतः ।
अविनाभावमेवाह तत्सर्वमतिमङ्गलम् ॥ ४१२ ॥**

**अस्पष्टहंसवाक्** 'त्रयाणामेकभावाना यो न पश्यति वै भिदा' इति वाक् । भिदाशब्दस्य अनेकार्थकत्वेन अस्पष्टत्वम् । **वाक्यतः** लोपनिमित्ता पञ्चमी । वाक्यमनुसृत्य । **अविनाभावं** स्थानैक्य मत्यैक्य वा । एवशब्देन स्वरूपाभेद व्यवच्छिनत्ति । **तत्** तस्मात् । **सर्वं** भागवतवाक्यम् । **अतिमङ्गलं** परममङ्गलस्य विष्णो महिम्न एव प्रतिपादकम् ॥ ४१२ ॥

**मतिभेदोपि भेदे स्यान्नैकदैकस्य धीर्द्विधा ॥ ४१३ ॥**

'द्वासुपर्णेति'श्रुति सर्वथा निरवकाशतया स्वरूपभेदमेव वक्तीति समर्थनायोपोद्घात रचयति **मतीति** । नेय श्रुतिर्मतिभेदपरतया सावकाशयितुमर्हा । अत्र मतिभेदार्थकपदाश्रवणात् । प्रत्युत सखायाविति मत्यैक्यस्यैव बोधनात् । तुष्यत्विति न्यायेन द्वावित्यस्य मतिभेदावन्तावित्यर्थाश्रयणेऽपि स कालभेदेन विद्यमान स्वरूपैक्यसाधकोऽभिप्रेयते उत युगपत् । नाद्य । कालभेदेन विवदमानाना ब्राह्मणाना स्वरूपैक्यादर्शनात् । न द्वितीयो विरोधादित्याह **भेदे स्यात् इति** । स्वरूपभेदे सत्येव स्यात् इति भाव । विमतौ स्वरूपभेदवतो युगपदेव भिन्नमतिमत्वात् । विपक्षे हेतूच्छित्तिमाह **नैकदेति** । यदि स्वरूपभेदो न स्यात् एकत्वमेव स्यात् इति यावत् तर्हि **एकदा युगपदेव द्विधा धीर्न** स्यात् मतिभेदो न स्यादिति तर्क उक्तो ध्येय ॥ ४१३ ॥

**युगपन्मतिभेदो वा युगपत्स्थानभिन्नता ।
वैलक्षण्यं च युगपद्भिन्नयोरेव नान्यथा ॥ ४१४ ॥**

उक्ता व्याप्ति युगपत् स्थानभेदे, युगपत् विरुद्धलक्षणयोगित्वरूपवैलक्षण्ये चातिदिशति **स्थानेति** वैलक्षण्यमिति च ॥ ४१४ ॥

**तद्भेदश्रुतिसुन्दर्यास्स्वार्थस्सूत्रायते गले ।
उक्तार्थेषु विनीतापि यद्भेदं नैव मुञ्चति ॥ ४१५ ॥**

तत् उक्तव्याप्तित्रयबलात्। **स्वार्थः** स्वरूपभेद·। **उक्तार्थेषु** मतिभेद-स्थानभेद-वैलक्षण्यरूपेषु। **यत्** यस्मात्। **भेदं** स्वरूपभेदम्। **गले सूत्रायते** मङ्गलसूत्रवत् अप्रच्युत दृढनिबद्ध एवावतिष्ठते ॥ ४१५ ॥

**सखायौ सयुजौ चेति पददार्ढ्याच्चलेच्च न ॥ ४१६ ॥**

**दार्ढ्यात्** सखायाविति पदस्य मत्यैक्यवाचित्वात् सगुणावित्यस्य स्थानैक्याभिधायित्वात्। **न चलेत्** तद्विरुद्धार्थकल्पनस्यावकाशमेव न दद्यात् ॥ ॥४१६ ॥

**अन्योऽयमन्य इत्युक्ते द्वाविमाविति चोदिते ।**
**भिन्नाविमाविति प्रोक्ते किमन्योऽर्थोऽपि मान्यते ॥ ४१७ ॥**

अर्थान्तराश्रयणे सुस्पष्टपदान्तरविरोधमाह **अन्य इति** ॥ ४१७ ॥

**बद्धत्वापूर्णतात्तृत्वपूर्वैर्जीवप्रकाशकैः ।**
**नित्यमुक्तत्वपूर्णत्वानत्तृत्वाद्यैः परप्रियैः ॥ ४१८ ॥**

**विरुद्धधर्मसद्रत्नैश्चूडारत्नायितैः सदा ।**
**अलङ्कृता भेदवाक्तु नैव स्वार्थं विमुञ्चति ।**
**एकास्यो वा दशास्यो वा तां न भीषयितुं क्षमः ॥ ४१९ ॥**

उपपत्तिविरोधाच्च न स्वरूपैक्यमर्थ सभवतीत्याह **बद्धत्वेति**। देहजनितकर्मफलस्य पिप्पलस्य अत्तृत्वेन **बद्धत्वम्**। कर्मफलसापेक्षत्त्वेन **अपूर्णत्वम्**। अस्वादुन एव स्वादुत्वेन अदनात् पराधीनतया **अत्तृत्व** इत्येव जीवप्रकाशकै । अतादृशत्वात् परमात्मन· नित्यमुक्तत्वादय धर्मा तै । एकास्य शिशुपालो रुक्मिणीमिव दशास्यो रावण सीतामिवेति ध्वनि·। दशजिह्वः व्याहतभाषी मायावादी प्रकृते ॥ ४१९ ॥

**ऐक्यश्रुतिस्तु मत्यैक्ये स्थानैक्ये स्वार्थमुज्झति ।**
**एकीभूताविमावित्यत्रैक्यं न हि तयोर्द्वयोः ॥ ४२० ॥**

ऐक्यश्रुतिः 'एकीभवन्ति' इत्यादिका। उज्झति परित्यजति। लोके निरूढत्वादित्याह एकीभूताविति। ऐक्यं स्वरूपैक्यम्। तदुक्त भगवत्पादै 'ऐक्यवाक् सम्यक् सावकाशा यथेष्टत ' इति ॥ ४२० ॥

**अतो भेदश्रुतेरग्रे कस्य स्यात्प्रत्यवस्थितिः ।**
**तस्मात्क्रूरकृपाणी सा रिपुसैन्यभयङ्करी ॥ ४२१ ॥**

तस्मात् निरवकाशत्वादिनिमित्तकबलवत्त्वात् ॥ ४२१ ॥

**नित्यानामपि नित्यो यश्चेतनानां च चेतनः ।**
**काम्यानर्थानिमान्सर्वाननित्यसुखदाञ्जडान् ॥ ४२२ ॥**

**एको बहूनां जीवानां विदधाति किलाञ्जसा ।**
**सोऽन्तर्यामि किलैतेषां सर्वे नित्यसुखार्थिनः ॥ ४२३ ॥**

**आत्मस्थमनुपश्यन्ति नाभेदेन तमीश्वरम् ।**
**केचित्पश्यन्ति केचिच्च न पश्यन्ति किल प्रभुम् ॥ ४२४ ॥**

**शाश्वतं तु सुखं तेषामुक्तरीत्यैव पश्यताम् ।**
**नाभेदकृतबुद्धीनां नाज्ञानां च भवेत्किल ॥ ४२५ ॥**

**इत्यशेषं श्रुतिर्नित्यो नित्यानामिति शंसति ॥ ४२६ ॥**

इदानी 'नित्यो नित्याना चेतनश्चेतनाना एको बहूना यो विदधाति कामान्। तमात्मस्थ येऽनुपश्यन्ति धीरास्तेषा सुख शाश्वत नेतरेषा' इति काठकश्रुतिं अशेषसिद्धान्तप्रमेयसग्राहिका व्याकरोति अष्टविंशतिश्लोकै **नित्येत्यादिभिः ॥** **नित्यः** नित्यत्व प्रति स्वातन्त्र्यवान्। स्वय निरवधिकनित्यत्वाश्रयश्च। 'स्वातन्त्र्यं तद्गतत्व च शब्दवृत्तेर्हि कारणम्' इत्युक्ते। एव चेतन इत्यत्रापि ध्येयम्।

नित्यत्वचेतनत्वादिस्वभावधर्मान्नित्यपि नियामकत्व 'द्रव्य कर्म च कालश्च' इत्यादिप्रमाणात् आकाशाधिकरणन्यायानुसारेणावगन्तव्यम्। इद च 'नित्यानित्यजगद्धात्रे' इति ईशावास्यभाष्यटीकाया विवृतम्। अतिशयेन नित्यत्व च चतुर्विधा नाशराहित्यम्। चेतनत्वे अतिशयश्च स्वपराशेषविषयक-स्वतन्त्रज्ञानरूपत्वम्। **कामान्** = कर्मणि व्युत्पत्त्या चेतनै काम्यमानान् अशेषान् वैषयिकपदार्थान्। **एकः** 'तस्य एकत्वसख्याविधानपरत्वात्' इति वादावल्युक्तरीत्या एकत्वसख्यावान्। असहाय स्वतन्त्रो वा। **बहूनां** अनन्ताना जीवराशीनाम्। **विदधाति** सृजति। अनेन अचेतनसर्वजगत्स्रष्टृत्वमेवोक्त भवति। सर्वस्य जीवोपभोग्यत्वेन तददृष्टजन्यत्वात्। **आत्मस्थं** 'य आत्मनि तिष्ठन्' 'एष ते अन्तर्याम्यमृत' इत्यन्तर्यामिनयोक्तदिशा आत्मान्तर्यामिण **अनुपश्यन्ति** नत्वात्मस्वरूपत्वेन। तेषामेव शाश्वत सुख, **नेतरेषां** भेदेन अपश्यता अभेदेन पश्यता वा ॥ ४२२ ॥ ४२३ ॥ ४२४ ॥ ४२५ ॥ ४२६ ॥

**चेतनस्यैव जन्मादिकर्तृत्वं यल्लटोदितम्।**
**तटस्थत्वकथा तस्य मठस्थाभूत्कुयोगिनाम्॥ ४२७ ॥**

**यत्** = यस्मात्। **चेतनस्यैव** = य इति परामृष्टस्यैव चेतन इत्यस्य। **लटा** = ৎ विदधातीत्यत्रत्येन कर्त्रर्थकेन प्रत्ययेन। **तटस्थत्वकथा** = जन्मादिकर्तृत्व अविद्याया एव लक्षण, ब्रह्म तु तदारोपाधिष्ठानमात्रम्। अतो नेद ब्रह्मण स्वरूपलक्षण किन्तु तटस्थमेवेति मायिना वाद। **मठस्था** = स्वगोष्ठीनिष्ठप्रलापमात्रम्॥ ४२७ ॥

**ब्रह्मोपादानतावार्ता निर्मूला चाभवत्ततः।**
**कर्तृत्वाद्येशधर्माणामध्यासोऽपि निराकृतः ॥ ४२८ ॥**

**ततः** विश्वतोमुखस्य सूत्रस्योदाहरणवाक्येऽत्र विदधातीति कर्तृत्वस्यैवोक्ते चेतनस्य विकारित्वलक्षणोपादानत्वासभवाच्च। आद्यपदेन नित्यत्वचेतनत्वादयो ग्राह्या। **निराकृत इति** अध्यस्तधर्मेषु अत्रोक्तमोक्षहेतुसाक्षात्कारविषयत्वा-सभवादिति भाव ॥ ४२८ ॥

**महासामर्थ्यमीशस्य प्रभुत्व च प्रसाधितम् ।**
**स्वातन्त्र्यं तस्य जीवानां पारतन्त्र्यं च साधितम् ॥ ४२९ ॥**

हरि महासामर्थ्यवान् अशेषजगत्स्रष्टृत्वात् प्रभु शाश्वतसुखप्रदत्वात् व्यतिरेकेण जीववत् इति **प्रसाधितम्**। अखिलजगदुपादानगोचरापरोक्षज्ञानस्य सार्वज्ञस्य कर्तृत्वान्तर्गततत्वयैव सिद्धिरित्याह **सार्वज्ञेति**। नित्यो नित्याना इति स्वभावनियामकत्वकथनेन एव चेतनश्चेतनाना इति जीवान्प्रति बिम्बत्वशासनेन च सिद्धमाह **स्वातन्त्र्यमिति**। तत एव प्रतिबिम्बाना जीवाना पारतन्त्र्य च सिद्धमित्याह **जीवानामिति** ॥ ४२९ ॥

**निर्धारणे तु या षष्ठी सा निर्धारितवस्तुनि ।**
**आधिक्यं वक्त्यतश्चेशे सार्वज्ञं नित्यदेहिता ॥ ४३० ॥**

निरवधिकप्रवृत्तिनिमित्ताश्रयत्वरूपमहायोगवृत्ते नित्यचेतनशब्दयोर्वर्णितत्वेन नित्यत्वचेतनत्वयो आधिक्य निरतिशयत्व च सिद्धमित्याह **आधिक्यमिति**। तदेव विविच्याह **सार्वज्ञमिति**। चेतनत्वे अतिशय सार्वज्ञ नित्यत्वेऽतिशयश्च नित्यदेहितेति विवेको द्रष्टव्य ॥ ४३० ॥

**अभ्यासेन गुणेष्वस्यास्तात्पर्यं गम्यते श्रुतेः ॥ ४३१ ॥**

**अभ्यासेनेति** स्वातन्त्र्यस्य नित्य इति स्वभावनियामकत्वेन एक इत्यसहायत्वेनेत्यादिना एव सार्वज्ञस्य चेतन इति परमचेतनत्वेन विदधातीति जगत्कर्तृत्वेन इत्येव प्रत्येक गुणानामसकृदुक्त्येत्यर्थ ॥ ४३१ ॥

**अनन्तानन्तजीवेषु स्थितस्याप्येकतोक्तितः ।**
**अनन्तस्वावताराणां स्वस्य चाभेद ईरितः ॥ ४३२ ॥**

**अनन्तानन्तजीवेषु** = चेतनाना, तेषा, नेतरेषा, इत्यादिबहुवचनप्रयोगेण तथा बहूनामिति असङ्कोचेन बहुत्वोक्त्या च सिद्धानन्त्यविशिष्टेषु। **एकतोक्तितः** = चेतन नित्य आत्मस्थ इत्याद्येकवचनप्रयोगेण तथा एक इति कण्ठोक्त्या च।

**स्वावताराणां =** स्वस्यान्तर्यामिरूपाणा, यद्वा **बहूनां =** साधूना तत्तत्काले परित्राणाय कामान्विदधातीत्युक्ततदभीष्टदानसिद्धये स्वीकृताना रामकृष्णाद्यवतार-रूपाणाम्। **अभेदोक्त्या** एक इति तथा य त इत्येकवचनेन च। अभेद स्वगतभेदराहित्यम् ॥ ४३२ ॥

**भेदकार्यकरश्शक्तिविशेषः परमात्मनि।**
**पुच्छस्य पुच्छिनैक्यं तत्कैमुत्येन प्रसाधितम्॥ ४३३ ॥**

**विशेष इति** न च अचिन्त्यशक्त्यैवोपपत्ति। भेदव्यवहारनिर्वाहाय यथाप्रमाण विशेषस्याप्यभ्युपगमनीयत्वात् इत्याशय। **कैमुत्येनेति।** विश्लिष्टानामैक्ये सश्लिष्टस्य पुच्छस्य सुतरा तत्सिद्धेरिति भाव ॥ ४३३ ॥

**स्वाभेदेन गुणादीनां चिन्मयत्वं(मबाध्यता) प्रसादितम्।**
**ध्येयतोक्त्येष्टदैवत्वं सौन्दर्यं सुप्रसन्नता ॥ ४३४ ॥**

चिन्मयत्व इत्यत्र मयट तादात्म्यमर्थ। गुणाना चित्स्वरूपतोक्त्या अरूपमस्पर्शमित्यादिश्रुते प्राकृतगुणनिषेधो गतिरुक्ता भवति। **ध्येयतेति** अनुपश्यन्तीत्यस्य निदिध्यासनसाक्षात्कारोभयकर्तृत्वार्थस्य विवक्षितत्वात् मानसवासनापरिणतस्य वस्तुनो मनसाऽवलोकनस्यैव च ध्यानरूपत्वादिति भाव। एवविध आदरनैरन्तर्याभ्या बहुकालोपचित ध्यान, ध्येयस्य दैवस्य इष्टत्व सौदर्य सुप्रसन्नत्व च विना न सङ्घाघटीतीति भाव ॥ ४३४ ॥

**तदन्तस्थस्य सार्वज्ञशक्तिस्वातन्त्र्यपूर्वकाः।**
**स्त्रष्टृत्वकामदातृत्वमुक्तिदत्वादयो गुणाः।**
**सर्वेश्वरत्वपूर्णत्वनित्यत्वाद्याश्च साधिताः ॥ ४३५ ॥**

**तदन्तस्थस्येति।** अन्तर्यामित्वरूपस्यात्मत्वस्य गुणपूर्तिरूपत्वात् सार्वज्ञादि-गुणानामपि सिद्धिरनेनैव सुलभेत्युक्त भवति ॥ ४३५ ॥

**मोक्षोपयोगिज्ञानत्वं तमित्युक्त्यैषु दर्शितम् ।**
**ततोऽपि तद्गुणांभोधेः पारमार्थ्यं प्रसिद्ध्यति ॥ ४३६ ॥**

**पारमार्थ्यमिति** आविद्यकज्ञानेनाविद्यानिवृत्तिरूपमोक्षस्यासभवादेवेति भाव ॥ ४३६ ॥

**मुक्तानां बहुता मुक्तस्वामित्वं च प्रभोरभूत् ।**
**आत्मस्थभगवद्दृष्टेर्मुक्तावप्यनुवर्तनम् ॥ ४३७ ॥**

तेषामिति बहुवचनेन मुक्ताना बहुत्वम् । येऽनुपश्यन्ति तेषामेव नेतरेषामित्युक्त्या 'यस्य प्रसादात्परमार्तिरूपादस्मात्ससारान्मुच्यते नापरेण' इति प्रमाणानुरोधेन मोक्षस्य प्रसादैकसाध्यत्वलाभेन 'मुक्ताना परमा गतिरि'त्युक्त मुक्तस्वामित्व च सिद्धमित्याह **मुक्तेति** । अनुपश्यन्तीत्यस्य दर्शनजन्यप्रसादवन्तो भवन्तीत्यर्थकत्वात् । अनुपश्यन्तीति दर्शनस्य मोक्षानन्तरमनुवृत्ति तस्य सुखरूपता च लब्धेत्याह **आत्मेति** ॥ ४३७ ॥

**पञ्चभेदास्तया सिद्धा मुक्तेर्नित्यसुखात्मता ।**
**भेदज्ञानैकसाध्यत्वमुक्तसर्वविशेषणैः ॥ ४३८ ॥**

**तारतम्येन तद्दृष्टिर्जीवानां त्रिप्रकारता ।**
**आत्मस्थद्रष्टृभिन्नत्वं द्वेधा भवति यद्विदाम् ॥ ४३९ ॥**

शाश्वत सुखमित्युक्त्या लब्धमर्थमाह **नित्येति** । एतेन निर्विशेषात्मभावत्व एकविशतिदु खध्वसरूपता इत्यादिना मोक्षस्वरूप अन्यथा वर्णयतो दुर्वादा निराकृता । आत्मस्थ न तु आत्मत्वेन इत्युक्त्या लब्धमर्थमाह **भेदेति** । **तच्च विज्ञान** पूर्वोक्त भेदज्ञानम् । विशेषणै व्यावर्तकधर्मै सहितम् । तमिति सकलगुणविशिष्टस्यैव परामर्शादिति भाव । 'अनु' इत्यस्य अनुसृत्येत्यर्थ । योग्यतया अनादिसिद्धयोग्यतातारतम्यलाभ । अनेन ॐ नाविशेषादिति सूत्रार्थ उक्त । अनेन साधने तारतम्यकथनेन 'साधनस्योत्तमत्वेन साध्य चोत्तममाप्नुयुरि'ति

प्रमाणानुसारेण मुक्तौ च तारतम्यसिद्धि निरूपिता। त्रिप्रकारतामुपपादयति **नेतरेषामिति**। तथा हि। इतरेषामित्युक्त आत्मस्थत्वेन सर्वोत्तमत्वेन तावद् द्रष्टृभिन्नत्व द्वेधा। ऐक्येव असर्वोत्तमत्वेन च। तथा च तत्त्वज्ञानिन अन्यथाज्ञानिनः मिश्रबुद्धयश्चेति त्रिप्रकारता। तदनुरोधेण फलस्यापि त्रिप्रकारताऽनेनैवोक्ता ध्येया। तत्त्वज्ञानिना शाश्वत सुखम्। ऐक्यज्ञानिना तु शाश्वत नसुखम्। नञो विरोधार्थकत्वेन शाश्वत दु खम्। मिश्रबुद्धीना तु न शाश्वत सुख, दु खामिश्र सुख वा, किंतु दु खमिश्रमेवेत्यर्थलाभात्॥ ४३९ ॥

**चेतनानां बहुत्वोक्त्या जीवभेदः परस्परम्।**
**दातुः प्रभोरनेकेभ्यो भेदश्चैकस्य सिद्ध्यति ॥ ४४० ॥**

**बहुत्वोक्त्येति**। बहूनामिति साक्षात् कण्ठत, नित्याना, चेतनाना, ये, तेषा, इति बहुवचनप्रयोगेण चेत्यर्थ। **एकस्येति**। एक इत्युक्तस्य य· तमिति च एकवचनान्तशब्देन परामृष्टस्य चेत्यर्थ॥ दातु· प्रभोरिति च भेदकधर्मकथनम्। तेन अनेकेभ्य इत्यनन्तर प्रतिगृहीतृभ्य भृत्येभ्य इति चोपस्कर्तव्यम्॥ ४४० ॥

**तेन जीवेशयोर्भेदस्साधितस्सोपपत्तिकः।**
**मोक्षोपयोगिज्ञानत्वाद्भेदस्यात्यन्तसत्यता ॥ ४४१ ॥**

ज्ञानत्वात् = ज्ञानविषयत्वात्॥ ४४१ ॥

**काम्यानां च बहुत्वोक्त्या जडभेदः परस्परम्।**
**तेषामीशकृतत्वोक्त्या जडेश्वरभिदा तथा ॥ ४४२ ॥**

काम्यानां मुक्तैरमुक्तैश्च काम्यमानाना गन्धमाल्यादीनाम्॥ ४४२ ॥

**सृष्ट्युक्त्या तस्य जगतस्सत्यत्वमपि सिद्ध्यति।**
**सदैव वर्तमानत्वं लटाविश्वस्य सूचितम् ॥ ४४३ ॥**

**सत्यत्वमिति**। 'सतो हि घटादेरुत्पत्तिर्दृष्टा नासत शशविषाणादेरि'ति मायिभाष्योक्तरीत्यैवेति भाव। **लटेति** क्रियासातत्यार्थकेनेति भाव। **वर्तमानत्वं**

प्रवाहत इति शेष । 'न काप्यनीदृश विश्व तत्तत्कालानुसारत ' इति भगवत्पादोक्ते ॥ विधानविधीयमानयो समकालीनत्वनियमात् 'याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्य समाभ्य ' इति समाख्यानाच्च ॥ ४४३ ॥

**जीवसंबन्धितोक्त्या च जडजीवभिदा स्फुटा ॥ ४४४ ॥**

**जीवसंबन्धितेति** बहूनामिति षष्ठ्या इत्यादि ॥ ४४४ ॥

**एकजीवकथा जीवाभेदो जीवेश्वराभिदा ।**
**चिद्रूपतैव जीवानां चित्यकर्तृत्वमित्यपि ॥ ४४५ ॥**

**जीवानां इति।** ब्रह्मणश्चेति योज्यम् । **चिद्रूपता** जहदजहल्लक्षणया प्रातिपदिकार्थत्वम् । **अकर्तृत्वं** अन्त करणगतकर्तृत्वादीना चिति अध्यास ॥ ॥४४५ ॥

**निष्प्रकारैक्यविज्ञानान्मुक्तिर्जगदसत्यता ।**
**सकृत्सर्वविमोक्षश्चेत्येतत्सर्वं हि दूषितम् ॥ ४४६ ॥**

**निष्प्रकारकेति।** तमात्मस्थ इति सविशेषणस्यैव परामर्शादिति भाव । **सकृदिति।** तेषा नेतरेषा इति बद्धमुक्तव्यवस्थोक्तेरिति भाव ॥ ४४६ ॥

**एतावन्तमपि ह्यर्थमेकैव श्रुतिराददे ।**
**सर्वश्रुत्यर्थकुशलौ सूत्रभाष्यकृतौ स्तुमः ॥ ४४७ ॥**

**तस्मादेकाङ्गवीरोऽयं वेदव्यासभटाग्रणीः ।**
**तत्तद्वाक्यैश्च तत्सिद्धौ द्विर्बद्धस्य सुबद्धता ॥ ४४८ ॥**

**अथ** पूर्वश्लोकोक्तो भाष्यकार· **एकाङ्गवीरः** सूत्रानुगृहीतेन **एकेनापि** श्रुतिवाक्येन **अङ्गेन वीरः** सिद्धान्तभूतसर्वप्रमेयसमर्थनकार्यस्यान्तगामी । एव तर्हि कि प्रातिस्विकतया तत्तत्प्रमेयसाधकाना इतरेषा प्रमाणानामनुवादकत्वेनाप्रामाण्य इत्यत आह **द्विः इति।** उपलक्षण बहुवारमित्यर्थ । **बद्धस्य** प्रमितस्य **सुबद्धता**

सुदृढतया क्षिप्रनिशङ्कप्रवृत्तिजनकता। तदुक्त भगवत्पादै बहुप्रमाणसवादश्च दार्ढ्यहेतुरेव' इति। एव सुधायामपि 'यावद्यावदधिक प्रमीयते तावत्तावन्नि शङ्का क्षिप्रप्रवृत्ति प्रसूते इत्यनुभवसिद्धमि'ति। अनेनैव लोकव्यवहारमप्यत्र प्रमाणयति द्विरिति। न तु द्वितीयादिबन्धनस्य अकार्यकारितेति भाव ॥ ४४८ ॥

**तद्व्यासकृतविस्तारा श्रुतिः सूत्रानुसारिणी।**
**तानि सर्वाणि भेदादेस्साधकानीति सुस्थितम् ॥ ४४९ ॥**

**विस्तार:,** विभाग अर्थनिर्णयो वा तानि सूत्राणि। तदुक्त महाभारततात्पर्यनिर्णये सर्वदोषविहीनत्व गुणै सर्वैरुदीर्णता। अभेद सर्वरूपेषु जीवभेद सदैव हि। विष्णोरुक्तानि सूत्रेषु सर्ववेदेड्यता तथा' इति तस्मात्सूत्रार्थमागृह्य कर्तव्य सर्वनिर्णय इति च ॥ ४४९ ॥

**किंच सद्युक्तिपरशोरेकीभावो बिभेति ते।**
**द्वैधीभावमते सोऽपि सहायत्वमुपेयिवान् ॥ ४५० ॥**

**सद्युक्तिः** सूत्रव्युत्पादितयुक्तिसमुदाय स एव **परशुः** तस्मात्। परशो दारुसयोगेन दारुद्वैधीभाव एव यथा दृष्टस्तथेति ध्वनि। अत साधूक्तमभियुक्तै 'भेदपराण्येव खलु ब्रह्मसूत्राणि' इति ॥ ४५० ॥

**घटेन गगनस्येव यदि देहाद्युपाधिना।**
**गच्छता तत्रतत्रत्यब्रह्मभागस्य जीवता ॥ ४५१ ॥**

**संपद्यते ततोऽन्ये तु न जीवा इति मन्यसे।**
**मतं न मायिनोऽप्येतच्चर्चार्थं परमुच्यते ॥ ४५२ ॥**

भेदस्य स्वाभाविकत्वसिद्धये तदौपाधिकत्व दूषयति घटेनेत्यादिभि। अत्र त्रय प्रकारा सभाविता। गमनवता घटेन उपाधिना अवच्छिन्नस्तत्प्रदेशस्य आकाश· यथा घटाकाशसज्ञा लभते तथा गच्छता देहेनावच्छिन्न तत्तत्प्रदेशस्थ

ब्रह्मैव जीवभावमापद्यते इति । यद्वा तटाकादुद्धृत घटे स्थित जलमिव व्याप्तब्रह्म चित पृथक्कृत्य समुद्धृतश्चिद्भाग एव जीव इति । अथवा स्वरूपोपाधिना अत्यन्त भिन्ना एवाणुभूता जीवा उत्क्रान्तिगत्या गतिमन्त इति च । तत्र आद्यपक्षे जीवस्य नैव गमनादिकम् । कितु उपाधिभूतदेहस्यैव । द्वितीये घटेन सह तदन्तस्थोदकस्येव देहेन सह जीवस्यापि गमनादिक भवति । तृतीयस्तु सिद्धान्तसमत इति विवेक । तत्र अन्तिम परिशेषेण निर्धारयितु आद्य तावद्दूषयिषु प्रस्तावयति **घटेनेति** । ननु मायिभि कुत्राप्यनुपन्यस्तोऽय पक्षो न विकल्पमर्हतीति चेन्न । 'न ममत्व मुमुक्षूणामनिर्वचनीयवादिनामि'ति वदन् दूषणमात्रदुर्व्यसनी पर स्वसिद्धान्तमप्यपलप्य पक्षमेत परिगृह्णामीति वक्तुमुत्सहेतापि । अत सभावितस्याप्यनूद्य दूषण श्लिष्टमित्याह **मतमिति** ॥ ४५१ ॥ ४५२ ॥

**तर्हिदेहाद्युपाधीनां गमनं केन हेतुना ।**
**ब्रह्मणो निष्क्रियत्वोक्तेस्तदन्यस्य जडत्वतः ॥ ४५३ ॥**

अस्मिन् पक्षे देहाद्युपाधेर्गमन कि ब्रह्मण क्रियया उत स्वत । नाद्य इत्याह **ब्रह्मण** इति । न द्वितीयोऽपीत्याह **जडत्वत इति** ॥ ४५३ ॥

**परिस्पन्दक्रिया नैव परे ब्रह्मणि ते मते ।**
**ततस्तत्क्रियया देहक्रिया नेत्यक्रिया भवेत् ॥ ४५४ ॥**

परिस्पन्देति प्रकृतापेक्षया । वस्तुतस्तु क्रियासामान्यनिषेध एवेति मन्तव्यम् । फलितमाह **अक्रियेति** ॥ ४५४ ॥

**इतः क्षिपति किं कश्चित्ततः कर्षति किं परः ।**
**अतस्स्थिरांशजीवत्वे स्थैर्यस्यात्र गतागतम् ॥ ४५५ ॥**

चेतनान्तरेण क्षेपणे उत्कर्षणे वा उपाधौ गतिरुपपद्यतामिति तत्राह **किमिति** । आक्षेपे । नास्त्येव तन्मते ब्रह्मव्यतिरिक्त चेतनान्तरमिति भाव ॥ ४५५ ॥

**शून्यगेहस्थघटवद्देहो देही घटाभ्रवत्।**
**अतिदूरस्थितस्वर्गगमनं त्वतिदूरतः ॥ ४४६ ॥**

**वातोऽपि तिर्यक्पवनः को वा तं जडमुन्नयेत्।**
**शवभूषणवत्सर्वं जीवजातमभूदहो ॥ ४५७ ॥**

कि चैतस्मिन्मते पुण्येन ऊर्ध्वलोकप्राप्तिप्रत्याशा दूरमिहिता । सा न देहस्थ-क्रियया प्रवर्तकाभावादित्याह **शून्येति** । वातस्यापि जडत्वेन देहसमानयोगक्षेमत्वान्न प्रवर्तकत्वमित्याह **वात इति** । नापि जीवस्य क्रियया तस्य निष्क्रियत्वाभ्युपगमात् । **शवभूषणवदिति** शवे प्रवर्तकचेतनाभावात् भूषणस्य च स्वय निष्क्रियत्वादिति भाव ॥ ४५७ ॥

**किं चैकपदविन्यासे प्रागंशे देहनिर्गतेः।**
**मृतिस्यादपरांशे तु जनिस्याद्देहसङ्गतेः ॥ ४५८ ॥**

**देहयोगवियोगौ हि जीवजन्ममृती श्रुते।**
**पदे पदे प्रेतकर्म जातकर्म करोति कः ॥ ४५९ ॥**

अभ्युपगम्यापि देहे क्रिया चेतने स्थिरत्वोपगमेन प्राप्त दोष सप्रमाणमनूद्य अतिप्रसङ्गोक्त्या अपहसति **किं चेति** पदेपदे इति च ॥ ४५८ ॥४५९ ॥

**तदंशाज्ञानमूलस्य मनआदेरपि क्षयात्।**
**कल्पान्तलय एवायं कल्पादिमजनिश्च सा ॥ ४६० ॥**

कि चेय पादनिक्षेपमात्रेण उपाधिसबन्धापगमेन जायमाना मृति शुद्धब्रह्मभावरूपमोक्षापत्तिरेवेत्यापतति । तदशस्य जीवस्य मनआदेर्लिङ्गदेहस्यापि क्षयादित्याह **कल्पान्तेति** मुक्तिकालीनेत्यर्थः । तथा च मूत्रपुरीषोत्सर्जनार्थं एकपादविक्षेपेणैव मोक्षप्राप्ते श्रवणादिसाधनानामकरणीयत्वापत्ति । **सा** अपराशस्य सपद्यमाना ॥ ४६० ॥

**पूर्वांशे कर्म नष्टं हि नान्यांशेऽपि क्व देहिता ।**
**कृतहान्यकृतप्राप्त्या मतमेतद्विगर्हितम् ॥ ४६१ ॥**

दोषान्तर चाह **पूर्वेति**। नष्ट हि यस्मात् तत **कृतहानिः** कृताना कर्मणा वैयर्थ्यम् । अन्याशे कर्म न इत्यन्वय । कि तत इत्यत आह **क्व देहितेति**। पूर्व तु तस्य देहसबन्धमभ्युपगम्यैव जनिरुक्तेति भाव । पूर्वकर्माभावेऽपि तस्य देहसबन्धाभ्युपगमे दोषमाह **अकृतप्राप्त्येति**। तेनानुभूयमानाना फलाना निष्कारणकत्वापत्ति । विस्तर 'भेदपराण्येव खलु ब्रह्मसूत्राणि' इति ग्रन्थे (प ८१ द्वि. भागे) ॥ ४६१ ॥

**अन्ते मृतिश्च का वाच्या देहस्यांशान्तरे स्थितेः ।**
**इन्द्रियोपरतेस्सा चेत्सुप्तिश्च मरणं भवेत् ॥ ४६२ ॥**

**चिद्रूपसाक्षिसामर्थ्यात्तद्वत्स्याद्धि प्रबुद्धता ॥ ४६३ ॥**

कि च अत्र पक्षे मृतिजन्मनी एवानुपपन्ने । तथा हि । मृतिर्नाम कि सर्वथा देहचेतनयोर्वियोग उत सत्यपि सबन्धे इन्द्रियमात्रोपरमो वा । नाद्य तदभावादित्याह **देहस्येति**। न द्वितीय । सुप्तेरपि मरणत्वापत्ते ॥ पुनरुत्थान तु सुप्तिवदेव स्यादित्याह **सुप्तिरिति तद्वदिति च** ॥ ४६२ ॥ ४६३ ॥

**उपादेयमुपादानगत्यैवान्यत्र गच्छति ।**
**पूर्वांशाज्ञानजो देहः कथं तस्य ह्यचालने ।**
**चलेदन्यत्र तन्माता गुर्विणी सर्वदा तव ॥ ४६४ ॥**

प्रकारान्तरेण देहस्य चलनशून्यता साधयति **उपादेयमिति**। एवकारेण उपदानगतेर्व्यापकत्वमुक्त भवति। वह्निमानेव धूमवानितिवत्। देहस्य च निष्क्रियमज्ञानमेवोपादानम् । तथाच प्रयोग, देह निष्क्रियो निष्क्रियोपादानकत्वात् घटवदिति । तथा च तव देहस्य जनन्युदरान्निष्क्रमणाभाव एवेत्याह **तदिति** ॥ ॥४६४ ॥

**उत्पत्तिस्थितिनाशश्च तत्रतत्रैव देहिनाम् ।**
**भवेयुर्निष्क्रियासङ्गाद्देहोऽपि स्याद्विनिष्क्रियः ॥ ४६५ ॥**

निष्क्रियाया चित सङ्गात् ॥ ४६५ ॥

**व्याप्तांशस्यैव जीवत्वे गजादौ गजमात्रता ।**
**अणावणुप्रमाणं चेत्यागतं ह्यतिनिन्दितम् ॥ ४६६ ॥**

कायपरिमाणवादिजैनमतप्रवेशापत्तिरूपदोषान्तरमाह **व्याप्तेति** । तत्तद्देह-व्याप्तेत्यर्थ ॥ ४६६ ॥

**योंशो विप्रत्वमापेदे स एवांशः क्षणान्तरे ।**
**हीनोऽपि स्यादिति प्राप्ता नानायोनिः पदे पदे ॥ ४६७ ॥**

स्थिराशप्रदेश प्रति विप्रदेहापगमानन्तर चण्डालदेहोपगमे सतीत्यर्थ ॥ ॥४६७ ॥

**उत्क्रान्तिगत्या गतीनामित्याह ब्रह्मसूत्रकृत् ।**
**अतोऽणुजीवता श्लाघ्या योग्या वाग्मिजनप्रिया ॥ ४६८ ॥**

श्रुतिसूत्रविरुद्ध चैतन्मतमित्याह **उत्क्रान्तीति** ॥ ४६८ ॥

**चलदंशो हि जीवस्यान्नास्थिरांशः कदाचन ।**
**चैतन्याचलने कस्य चलनं स्याज्जगत्रये ॥ ४६९ ॥**

चित· स्वतो निश्चलत्वे जगन्मात्र निश्चल स्यादित्याह **चैतन्येति** ॥ ४६९ ॥

**चलच्चेतनहस्तस्थो घटश्चलति नापरः ॥ ४७० ॥**

उपपादयति **चलदिति** ॥ ४७० ॥

**परिस्पन्दक्रिया नैव परे ब्रह्मणि ते मते ।**
**सहस्रोपाधिसंबन्धेऽप्यक्रियस्य क्रिया न हि ॥ ४७१ ॥**

**किं क्रियानिष्क्रिये व्योम्नि स्यात्कारकशतैरपि ।**
**स्थिरांशजीववादोतो न स्थिरः प्राज्ञसंसदि ॥ ४७२ ॥**

सहस्रोपाधिसबन्धेऽपि स्वभावधर्मस्य चितो निष्क्रियत्वस्य नैवापाय इति सोपपत्तिकमाह **परिस्पन्देति व्योम्नीति च**। एतेन तटाकादुद्धृतजलस्य घटस्य गमनादिना गमनादिकमिव ब्रह्मचिदुद्धृतचिदशस्य जीवस्य देहगमनादिना गमनादिकमिति द्वितीयपक्षोऽपि निरस्त । चेतनस्य सक्रियत्वे खलु तदधीनक्रियाया घटे, तत एव तदन्तस्थे जले सभवेऽपि त्वत्पक्षे ब्रह्मचित निष्क्रियत्वेन तदुद्धृतचिदशभागेऽपि जीवे क्रियाऽसभवो न तत एव घट इव देहे वा, तदुपाधिसबन्धनिर्मितेन तदन्तर्गतजल इव औपाधिकजीवे वा उत्क्रान्तिगत्यागतीना दुर्घटत्वमेवेत्याशय ॥ ४७२ ॥

**अतः श्रौताणुतासिद्धा तवापि च ममापि च ।**
**देहान्तःकरणान्तस्थस्सोधोञ्चत्यूर्ध्वमञ्चति ॥ ४७३ ॥**

अत = जीवे अणुत्वस्य अत एव ब्रह्मभिन्नत्वस्य चाङ्गीकारमन्तरा उक्तदोषाणा दुष्परिहरत्वात् । श्रौता = 'अणुर्ह्येष आत्मा' इत्यादि श्रुतिसिद्धा । **सः** बिम्बभूतस्य ब्रह्मण स्वतन्त्रक्रियाया अधीना या क्रिया तद्वान् अणु जीव ॥ ४७३ ॥

**एवं चोभयतः पाशारज्जुर्बध्नाति ते गलम् ॥ ४७४ ॥**

**उभयतः** सार्वभक्तिक· तसिः जीव स्थिराश इति चलदश इति च उभयपक्षेऽपीत्यर्थ· ॥ ४७४ ॥

**स्थिरांशस्यैव जीवत्वे भवदैक्यकथा वृथा ।**
**चलदंशस्य जीवत्वे भवदैक्यकथा वृथा ॥ ४७५ ॥**

उपपादयति **स्थिरेति**। कथाया खलु परप्रत्यायनमेव फलम्। सा च वक्तृश्रोतुर्वा वक्तुर्वा अन्योन्य प्रति गमन एव सभवति। स्थिराशजीवपक्षे च उभयोरपि गमन असभवि। अत त्वदैक्यकथा निष्फलैवेत्याह **वृथेति**। चलदशपक्षेऽपि कथा वृथा प्रमाणविरुद्धत्वादनुपादेयेति योज्यम्। ब्रह्म हि विभुनिष्क्रिय च। तदुद्धताशस्तु भवान् परिच्छिन्न सक्रियश्च। एवमीदृशयोरैक्य कथ न प्रमाणबाधितमिति भाव ॥ ४७५ ॥

**तस्मात्त्वदैक्यवादोऽयं तवैक्यायैव केवलम् ॥ ४७६ ॥**

**तस्मात्** प्रेक्षावत श्रोतुरसभवात्। **ऐक्याय** = एकाकित्वाय। केवलमित्यनेन अशाशिनोरैक्य व्यवच्छिनत्ति ॥ ४७६ ॥

**अणुरेव हि जीवोऽयं कण्ठेऽक्ष्णि हृदि वा स्थितेः।**
**देहाद्देहान्तरगतेरुद्गतेश्चाप्यवाग्गतेः ॥ ४७७ ॥**

**प्रवेशाच्च यवव्रीहितिलमाषादिकाङ्कुरे।**
**अन्नद्वारा च पितरि पितृद्वारा च मातरि ॥ ४७८ ॥**

**अणूनि जीवचैतन्यान्यन्यानि च तनौ तनौ।**
**नानाकर्मानुबन्धीनि नानायोनिगतानि च ॥ ४७९ ॥**

अत· स्थिराशपक्षस्य चलदशपक्षस्य च दुष्टत्वात्, तृतीय, स्वभावत अणुत्वभिन्नत्वपक्ष एव, निर्दोषत्वात्समाश्रयणीय इत्याह **अणुरेव हीत्यादिभिश्चतुर्भिः**। अद्वैतभाष्येऽपि 'उत्क्रान्तिगत्यागतीना' इत्यारभ्य दश सूत्राणि जीवाणुत्वसमर्थनपरतयैव व्याख्यातानि। व्याप्तत्वप्रतिपादकानि श्रुतिवाक्यानि जीवभिन्नपरमात्मपराण्येवेति च ॐ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् इति सूत्रेण समर्थितम्। यातु स्वयमेव प्रमाण व्याख्याताना दश सूत्राणा पूर्वपक्षसूत्रत्वोक्ति सा स्वमतदुराग्रहमूलैव। अत्र विशेष भे.प.ब्र सूत्राणि ग्रन्थे (प. ७२२-८२) ॥ ४७७ ॥ ॥४७८ ॥ ४७९ ॥

**अन्यच्च ब्रह्मचैतन्यं सदा सर्वत्र तिष्ठति।**
**स्वच्छमच्छेद्यमच्छिद्रं कूटस्थमचलं ध्रुवम् ॥ ४८० ॥**

ब्रह्मणो व्याप्ताश खण्डश सच्छिद्य निष्पन्ना अशाः जीवा इति पक्षे प्राग्दूषितमपि पुन सुबहुधा दूषयिष्यन्प्रतिजानीते **अच्छेद्यमच्छिद्रमिति** ॥ ४८० ॥

**तदच्छेद्यं कथं छेद्यं भागे भागे त्वविद्यया।**
**अच्छेद्योयमदाह्योयमित्युक्तेः का गतिर्वद ॥ ४८१ ॥**

**इत्युक्तेः** गीतावचनस्य । का गतिरिति निरवकाशत्व द्योत्यते ॥ ४८१ ॥

**निश्छिद्रस्य कथं छिद्रमसाध्यं साध्यते तया।**
**अविद्याया न विद्यास्ति यया साध्यं च साध्यते ॥ ४८२ ॥**

**निश्छिद्रस्य** 'तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यत' इति सर्वत्र व्याप्ततया प्रमितस्य। **छिद्रं** परिमितत्वम्। **कथ साधयेत्** प्रमाणविरुद्धस्यार्थस्य साधनाशक्यत्वादेवेति भाव । ईश्वरोऽपि खलु प्रमाणदृष्टमेव अणुत्वमहत्त्वादिक अन्यैर्दुर्घट स्वस्य अचिन्त्यशक्त्या घटयतीत्येव न तु प्रमाणविरुद्ध किमपि । तदुक्त सुधाया "नन्वीश्वरशक्तिरपि कथम्। यावत् प्रमाणसिद्ध तावत सुघटस्य दुर्घटस्य वा घटनाया पटुरिति ब्रूम" इति। योगिना योगविद्यायामपि सैव गति । विद्याविरोधिन्या अविद्यायास्तु विद्यासामान्यमेव असभवि। दूरे योगविद्या। प्रमाणविरुद्धार्थसाधकत्व तु असभवित्वादशक्यशङ्कमिति हृदयम् ॥ ४८२ ॥

**या स्वांशगततत्खंडानुन्नयेच्चाप्यधो नयेत्।**
**जनयेन्मारयेन्नानाक्लेशौघं भोजयेत्किल ॥ ४८३ ॥**

बहुजीववादे अद्वैतिभि कल्पिता सर्वाऽपि प्रक्रिया पूर्वोक्तेनैव दूषितेत्याह **येति। स्वेति स्वांशाः** अविद्याया अशा.। **तद्गताः** तदवच्छिन्ना। **तत्खण्डाः** ब्रह्मण खण्डा **तान्** जीवान् इत्यर्थ । 'तदेतत्सर्वं प्रमाणविरुद्ध स्वव्याहत च। तथा हि। अविद्याया व्याप्तशुद्धचिदावरकत्वाभ्युपगमेन स्वयमपि व्याप्तत्वेन तस्या पुन

अशाभ्युपगम व्याहत । ब्रह्मण असङ्गत्वाभ्युपगमेन अविद्यासङ्गेन तदवच्छिन्नत्व व्याहतम् । ब्रह्मण अखण्डत्वेन तत्खण्डा जीवा इति च व्याहतम् । जडभूताया स्वत प्रवृत्तिशून्याया· जीवाना उन्नमनादिक्लेशभोजकत्व च व्याहत इति सर्वाऽपि प्रक्रियैषाऽपहसनीयेत्याह **किलेति** ॥ ४८३ ॥

**न हि जीर्णपटो ब्रह्म माया मुषिकवेषधृक् ॥ ४८४ ॥**

ब्रह्मण अच्छेद्यत्व मायाया अच्छेदकत्व चेत्यत्र क्रमेण व्यतिरेकदृष्टान्तौ जीर्णपट मुषिका चेत्याह **न हीति** ॥ ४८४ ॥

**निष्क्रियं शक्तिशून्यं च कृष्यमाणमविद्यया ।**
**ते ब्रह्म तद्व्रणं सर्वं केनोपायेन पूरयेत् ॥ ४८५ ॥**

ब्रह्मणि सच्छिद्रत्वमेवासभवीत्युक्तम् । इदानी कथञ्चित्कृतस्य छिद्रस्य पूरणमपि तेनासभवीत्याह **निष्क्रियमिति** । तथा हि कि शुद्धमेव ब्रह्म छिद्र पूरयति उत छिद्रदेश आगत्य जीवभाव प्राप्यानन्तरम् । नाद्य इत्याह **शक्तिशून्यमिति** । न द्वितीय इत्याह **निष्क्रियमिति** । आगमनक्रियाशून्यमित्यर्थ । न हि पट स्वय छिद्रप्रदेशमागत्य त पूरयतीति युज्यत इति भाव ॥ ४८५ ॥

**कारागृहं नयन्तीं तां शक्तं चेत्किं न वारयेत् ॥ ४८६ ॥**

शक्तिशून्यत्व तर्कमुखेन स्थापयति **कारागृहमिति** । न च वारयति । अत शक्तिशून्य इति विपर्यये पर्यवसातव्यम् ॥ ४८६ ॥

**अतस्तत्प्रक्रियां ब्रह्म मत्वा स्वाङ्गस्य विक्रियाम् ।**
**तद्वक्त्रव्रणशान्त्यर्थं भेदाख्यारण्यकौषधम् ॥ ४८७ ॥**

**चिच्छक्तिरूपकवचमस्पर्शाय पदे पदे ।**
**स्वयं दृढीकृत्य जीवान्क्षुधितायै समादिशत् ॥ ४८८**

प्रक्रिया = ब्रह्मैव जीवभाव प्राप्य ससारभागिति कथनरूपाम् । स्वस्य अगस्य स्वरूपस्य नित्यमुक्तत्वस्य **विक्रियां** अपलापिनीम् । **तस्याः** अविद्याया । वक्त्रेण ससर्गेण । सभावितस्य **व्रणस्य** ससारस्य । **शान्त्यर्थं** अत्यन्ताभावार्थम् । **आरण्यकं** उपनिषत्प्रतिपाद्य **औषधं** = 'द्वा सुपर्णा' 'अन्यमीशमस्य महिमान' इत्यादि निरवकाशवाक्यप्रतिपाद्य नित्यविलक्षणत्वाख्यम् । कवच 'माया व्युदस्य चिच्छक्त्या' इत्युक्त्या मायासबन्धव्युदसनपटुम् । **पदे पदे** = नित्यदा । **क्षुधितायै** = आश्रयसापेक्षस्वरूपायै ॥ ४८८ ॥

**ब्रह्मखण्डा न जीवास्तद्ब्रह्मणि क्वाप्यखण्डनात् ।**
**अखण्डितं च तद्ब्रह्म निश्छिद्रत्वाद्विनिश्चितम् ॥ ४८९ ॥**

**निश्छिद्रत्वात्** = खण्डानर्हत्वात् । अतो न साध्याविशिष्टता ॥ ४८९ ॥

**धर्मखण्डोऽपि ते नास्ति का कथा धर्मिखण्डने ।**
**अखण्डवादी किं न त्वं सखण्डत्वं हि मन्मतम् ॥ ४९० ॥**

**अखंडवादी** = वेदाना धर्मससर्गरहितवस्तुप्रतिपादकत्ववादी ॥ ४९० ॥

**चित्रशक्तिविशेषश्च यद्यस्ति परमात्मनि ।**
**कथं दुःखार्णवे मंक्तुमुत्सहेत स बुद्धिमान् ॥ ४९१ ॥**

**दुःखार्णवे इति** । तदुक्त वादावल्या 'अशिन परमेश्वरस्यैव स्वाभाविकाभेदे सकलजनदुःखानुसन्धानापादनात्' इति ॥ ४९१ ॥

**ईशशक्त्यैव सर्वत्र शक्तिर्नोचेन्न कुत्रचित् ।**
**नर्ते त्वत्क्रियते किं च नेत्याद्या गर्जति श्रुतिः॥ ४९२ ॥**

**नेति** त्वत् ऋते तव प्रेरणा विना दूरे समीपे वा न किंचित् क्रियते इति । तदुक्त भगवत्पादै, 'न हि प्रतिबिम्बस्य स्वातन्त्र्येण क्रिया' इति । **मानापातासहिष्णुत्वेन**

त्वदभ्युपगताऽविद्या तु शशविषाणायिता। तस्या शक्तिरेव नास्ति। दूरे ब्रह्मणि खण्डापादनशक्तिरिति भाव ॥ ४९२ ॥

**स किलांबांकगोपालः कुक्षौ महदिदं जगत्॥ ४९३ ॥**

ईश्वरे श्रुतिसिद्धा युगपदणुत्वमहत्त्वादिरूपा विचित्रशक्ति यशोदाप्रत्यक्ष-सवादोक्त्या द्रढयति **स इति** ॥ ४९३ ॥

**विचित्रशक्तियुक्तोऽसौ सर्वज्ञः सकलेश्वरः।**
**स्वतन्त्रोऽखिलकर्ता च सदाऽणीयान्महान्किल ॥ ४९४ ॥**

**तच्छक्त्या किं न घटते सोऽपि न स्वात्मघातकः।**
**स्वरोमापि क्वचिच्चक्री चक्रेण निचकर्त किम्॥ ४९५ ॥**

चक्रेण स्वरोमनिकर्तन तु अप्रामाणिक उपपत्तिविरुद्ध च न ईश्वरशक्त्या घटनार्ह इति भाव ॥ ४९५ ॥

**सत्यसङ्कल्पतो विष्णुः कुरुते क्वचिदद्भुतम्।**
**क्वचिच्च न करोतीशो नासाध्यं तस्य विद्यते ॥ ४९६ ॥**

**सत्यसङ्कल्पतः** प्रमाणसिद्धघटनासङ्कल्पत ॥ **क्वचित्** अप्रामाणिकम्॥ ॥४९६ ॥

**यदि ब्रूषे जडं शक्तं जितं सांख्यकुमारकैः।**
**जडप्रकृतिकर्तृत्ववादस्याप्यनुपद्रवात् ॥ ४९७ ॥**

जितमिति 'ईक्षतेर्नाशब्दमिति' त्वया कृत तन्निराकरण व्याहत स्यादिति भाव ॥ ४९७ ॥

**जडस्य न विवेकोऽस्ति च्छिन्द्यात्तर्हि नभोऽपि**
**तत्॥ ४९८ ॥**

**छिन्द्यादिति।** इद चोपलक्षणम्। 'स्यादात्माऽपि हि तादृश' इति भगवत्पादोक्तातिप्रसङ्गान्तराण्यनुसन्धेयानि ॥ ४९८ ॥

**चित्खण्डने समर्थस्य सुकरं जडखण्डनम्।**
**वृक्षच्छेदिकुठारस्य(पत्रच्छेदेन किं बलं)**
**पक्वच्छेदेन किं मुखम्॥ ४९९ ॥**

'यो हि दुष्कर करोति स सुकर करोत्येव' इति न्यायमुपेत्याह **चिदिति**॥ ॥४९९ ॥

**उक्तश्रुतिप्रमाणाच्च पयोम्बुवदिति स्मृतेः।**
**मणिमन्त्रौषधादीनां प्रभावेऽपि प्रभोर्वशे ॥ ५०० ॥**

**स्मृतेरिति।** तस्याश्च प्रामाण्य 'पयोम्बुवच्चेत्तत्रापीत्युक्त साधयितु पय । दधि कुर्वन्तमनिश सेवेऽह दधिवामन' इति श्रीसत्यसन्धोक्तमधुनाऽपि प्रत्यक्षतोऽपि सिद्धम्॥ ५०० ॥

**इति व्यासमतं तिक्तो गुडस्ते पित्तदेहिनः ॥ ५०१ ॥**

**इति व्यासमत** = रचनानुपपत्त्यधिकरणेन जडस्य स्वत प्रवृत्ति निराकुर्वतो व्यासस्य मतम्। ते अविद्याया कर्तृत्व वदत । **पित्तदेहिनः** दुराग्रहदूषितचेतस । **तिक्तः** अयथार्थज्ञानविषय । अनेन गृह्यमाणारोपनिदर्शनेन परस्य व्याहतभाषिण उन्मत्ततरत्व ध्वनयति॥ ५०१ ॥

**निर्विशेषं हि ते ब्रह्म न शक्तं कास्य शक्तता।**
**यन्नारका सुखाम्भोधावुन्मज्जति निमज्जति॥ ५०२ ॥**

**निर्विशेषमिति** तदुक्त तत्त्वोद्योते 'न च सत्त्वादय धर्मा परमार्थतो मायावादिनाऽप्यङ्गीक्रियन्ते' इति। उन्मज्जतीत्यापातत बहुजीववादे नित्यमेव निमज्जनमेव स्यात्। यथोक्त तत्त्वनिर्णयटीकाया 'देवदत्ताभिधोपाध्यपगमेऽपि

यज्ञदत्ताद्यभिधानामनन्तोपाधीना अनपगमेन मुक्त्यभावप्रसङ्गादिति (९२०) ॥ ॥५०२ ॥

**चिन्मात्रब्रह्मशक्तिस्ते सिद्धान्तं हन्त कृन्तति ।**
**जडाविद्याशक्तिपक्षः पूर्वपक्षं विविक्षति ॥ ५०३ ॥**

**यद्यज्ञानविशिष्टस्य शक्तत्वं तर्हि तत्क्षिपेत् ।**
**उत्क्षिपेच्च ततो दुःखामयदात्तत्त्वमात्मनः ॥ ५०४ ॥**

किच शक्ति चिन्मात्रस्य उत अविद्याया अथवा विशिष्टस्य । नाद्य इत्याह **चिदिति** । सिद्धान्त निर्विशेषवादम् । न द्वितीय इत्याह **पूर्वपक्षमिति** त्वया निराकृत प्रधानवादम् । न तृतीयोऽपीत्याह **क्षिपेदित्यादिना** । असङ्गाभिमतस्य चिन्मात्रस्य अविद्यासङ्गेन विशिष्टभावस्यैव दुर्घटत्वादिति हृदयम् ॥ ५०३ ॥ ५०४ ॥

**अतः शक्त्या परीहारः प्रहारोऽभूत्त्रिधाऽपि ते ।**
**प्रागुक्तानुपपत्तिस्तद्विपत्तिरभवद्ध्रुवम् ॥ ५०५ ॥**

**तद्विपत्तिः** तस्या शक्ते अभाव ॥ ५०५ ॥

**अखण्डिते च यस्मिन्ये सञ्चरन्ति ततस्ततः ।**
**न ते खण्डाः पृथग्द्रव्यं तद्भागास्सुतरां न हि ॥ ५०६ ॥**

परिशेषसिद्ध जीवब्रह्मभेद व्यवस्थापयति **अखण्डिते चेति** । तदुक्तमनुव्याख्याने अविकार सदा शुद्धो नित्य आत्मा सदा हरिरि'ति । **न ते खण्डाः** स्वरूपाशा । भेदेनोपलभ्यमानत्वात् । उभयो चेतनयो विकारविकारिभावसभवेन सुतरामित्युक्तम् ॥ ५०६ ॥

**ब्रह्मणो जीवभावोक्तिरतोऽयुक्ततराविदाम् ।**
**यतः प्रागक्रिया व्याप्ता चिदेका सक्रियास्त्वमी ॥ ५०७ ॥**

**अयुक्ततरा** 'सर्वज्ञाद्ब्रह्मणोऽन्यत्व जगतो ह्यनुभूयते' इति अनुव्याख्यानोक्तरीत्याऽनुवादेन। वस्तुत सर्वदेति विभावनीयम्। **अक्रिया** पराधीनक्रियारहिता। तुनाऽणुत्वसमुच्चय ॥ ५०७ ॥

**अनादितोऽपि जीवास्ते सञ्चरन्ति पृथक्च तत्।**
**अतो मोक्षेऽपि नैवैक्यं न हि कन्थापरः पुमान् ॥ ५०८ ॥**

**न हि कन्थेति** 'भिन्नाना समुदायस्य नाम ब्रह्मेति तद्भवेदि'त्यनुव्याख्यानोक्तदिशा इति भाव ॥ ५०८ ॥

**जीवाणुत्वं श्रुतिप्रोक्तमावयोर्मतमेव हि।**
**परंब्रह्म परिस्पन्दक्रिया दूरतरं च ते ॥ ५०९ ॥**

**आवयोरिति।** यद्यपि मायी विभुत्व वदति तथाऽपि तद्भाष्ये 'उत्क्रान्तिगत्यागतीनामि'त्यादिदशभि सूत्रै अणुत्वस्यैव सोपपत्तिक समर्थितत्वेन उत्तरत्र तद्गुणसारत्वादित्यादितिप्रभृतिचतुर्भि सूत्रैस्तन्निराकरणस्य स्वव्याहतत्वेन निर्मूलत्वेन चैवमुक्तिरिति ध्येयम्। विस्तरस्त्वत्र 'भेदपराण्येव खलु ब्रह्मसूत्राणि' इति ग्रन्थे। **ते इति** निष्क्रियत्वाभ्युपगन्तु ॥ ५०९ ॥

**किमु व्योमकुठारेण च्छित्वा तत्खण्डमन्यतः।**
**नयेन्मयोग्रा माया वा त्वन्माया वा कदाचन॥ ५१० ॥**

माया कर्तृ। व्योम कर्म। किम्वाक्षेपे प्रमाणविरुद्धस्य केनापि अकरणादेवेति भाव ॥ ५१० ॥

**हरेरनेकताणुत्वं महत्वं चेति मन्मतम्।**
**अतो गतागताद्यं च युक्तं शक्त्या मम प्रभोः॥ ५११ ॥**

प्रभोरिति हेतुगर्भ विशेषणम्। **शक्त्या** अचिन्त्यया तदधीनविशेषेण च। तदुक्त अत्तृत्वनयेऽनुव्याख्याने 'स विशेषोऽपि क्रियाशक्त्यात्मना स्थिर 'इत्यादि ॥ ॥५११ ॥

**तव त्वनेकताणुत्वे नैव स्तो महदेव तत्।**
**शक्तिश्च नास्ति तेनोक्तं समस्तं कस्तदुत्तरेत् ॥ ५१२ ॥**

**तव** निर्विशेषवादिन । तत् दूषणजातम् ॥ ५१२ ॥

**मायावच्छिन्नरूपेषु तेष्वेवं सन्तरत्स्वपि।**
**चैतन्यमपरिच्छिन्नं यदन्यद्ब्रह्म तद्धि न ॥ ५१३ ॥**

**माया** स्वभावाज्ञानम्। **अन्यत्**—नित्यातादृशम् ॥ ५१३ ॥

**यत्तद्ब्रह्मपरं व्यासं श्रुत्या स्मृत्या च कीर्त्यते।**
**स एव भगवान्विष्णुर्वैष्णवा यमुपासते ॥ ५१४ ॥**

**स एवेति।** यो भागो न विकारी स्यात् स एवास्माकमीश्वर- इत्यनुव्याख्यानोक्ते ॥ ५१४ ॥

एवकारेण व्यवच्छेद्य पराभिमत मायाशबलमित्याह **अन्तरिति। द्वयं** ब्रह्मद्वयम् ॥ ५१५ ॥

**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः।**
**इतिश्रुतेर्न चेद्व्याप्तचैतन्यद्वयमापतेत् ॥ ५१५ ॥**

**जीवाभेदेऽपि यस्याशा ब्रह्म कस्माद्भिनत्यसौ।**
**कल्पनागौरवं यत्स्याद्विद्याया लाघवं च यत्॥ ५१६ ॥**

**आशा** आशामात्र न तु सिद्धि । **भिनत्ति** 'सदैव गुणवत्त्वेऽस्य भिन्न स्यान्निर्गुण सदा। न च मिथ्यागुणत्व स्यादनिर्वाच्यस्य दूषणादि'त्यनुव्याख्यानोक्तेरिति भाव । **कल्पनागौरवमिति** पराभिमतब्रह्मद्वय-स्याप्यप्रामाणिकत्वेन अप्रामाणिकानेककल्पनापत्ते ॥ ५१६ ॥

**जीवान्जग्रास या माया व्याप्ते ब्रह्मणि किं तया ।**
**कविर्मनीषीपरिभूर्यथार्थान्सोसृजत्किल ॥ ५१७ ॥**

**जग्रास** तदाश्रयेति यावत् । तदुक्त 'स्वभावाज्ञानवादस्य निर्दोषत्वादि'ति । **व्याप्तस्य** त्रिविधव्याप्तिमत सर्वज्ञस्य । किमित्याक्षेपे । 'अज्ञताऽखिलसवेत्तुर्घटते न कुतश्चन' इत्युक्ते । **कविः** सर्वज्ञ । 'याथार्थ्यतोऽर्थान् व्यदधात्' इति श्रुतेरर्थतोऽनुवाद **यथार्थानित्यादि** ॥ ५१७ ॥

**अतः सत्यजगत्सृष्टौ मिथ्याऽज्ञानं तव प्रियम् ।**
**कुत्रोपयुज्यते तस्मात्स्वजायां न परेर्पय ॥ ५१८ ॥**

**अतः** असृजदिति सृष्ट्युक्त्यैव जगत्सत्यत्वसिद्धे । तदुक्त मायिनैव, 'सतो ह्युत्पत्तिर्विनाशो वा दृष्टो घटादे नासत शशविषाणादेरि'ति । **तव प्रियमिति** जगत अज्ञानकार्यत्वेन मिथ्यात्वसिद्धिमभिलषत इति भाव । किन्तु तन्मिथ्यात्व कफोणिगुडायितम् । 'अनवस्थितिस्तथा च स्यादन्योन्याश्रयताऽथवा' इति दूषणादिति भाव । स्वजाया जीवाश्रिता परे नारोपय । 'निर्विशेषे स्वय भाते किमज्ञावृत भवेदि'ति तन्निराकृते ॥ ५१८ ॥

**अतो घटमठाकाशाद्युपमा विषमोपमा ॥ ५१९ ॥**

**अतः** उपाधिसबन्धासभवात् ॥ ५१९ ॥

**घटे घटप्रमाणोऽसौ मठमात्रो मठेऽपि च ।**
**घटे गच्छति नो गच्छेदागच्छति न चाव्रजेत् ॥ ५२० ॥**

**महाकाशस्य खण्डोऽसौ महाकाशस्वभाववान् ।**
**तस्य तद्रूपताऽप्यस्तु मत्यादीनां हरित्ववत् ॥ ५२१ ॥**

**जीवास्त्वाकाशमध्यस्थ त्रसरेणुगणोपमाः ।**
**तस्माद्ब्रह्मैक्यमेतेषा नाभूदस्तिभविष्यति ।**
**अणूनां गगनेनेव मणीनामिव सूत्रतः ॥ ५२२ ॥**

स्वगतभेदविवर्जितस्याव्याकृताकाशस्योपमा ब्रह्मणस्तत्स्वरूपाशाना मत्स्यादीनामेव घटते इत्याह **घटे इत्यादिना** द्वाभ्याम् । तदुक्त यावान्वा अयमाकाशस्तावानेष अन्तर्हृदय आकाश भिन्नाशाना जीवाना ब्रह्मणश्चाधाराधेयभावे दृष्टान्तावाह **अणूना मणीनामिति** च । 'मयि सर्वमिद प्रोत सूत्रे मणिगणा इव' इति स्मृति । 'नित्य सर्वगते ब्रह्मणि आश्रितस्तिष्ठति स्वय अणुश्च जीव ।' नित्य सर्वगतस्थाणुरिति तत्रैव गीतायाम् ॥ ५२२ ॥

**अनादिब्रह्म किल ते जीवास्सर्वेऽप्यनादयः ।**
**तद्भेदस्याप्यनादित्वेऽभेदो भूद्ब्रह्मणः कदा ॥ ५२३ ॥**

**अनादित्वं च भेदादेः षडस्माकमनादयः ।**
**इति त्वद्ग्रन्थ एवोक्तमतो युक्तिविचारणे ।**
**नाखण्डब्रह्मचित्खण्डो जीवराशिरभूदयम् ॥ ५२४ ॥**

ते इत्यनेन उत्तरश्लोकोक्ता तत्समति निरूपयति । तथा हि तत्सिद्धान्तोक्ति 'जीव ईशो विशुद्धा चित् भेदस्तस्यास्तयोर्द्वयो । अविद्या तच्चितोर्योग षडस्माकमनादय ' इति ॥ ५२३ ॥ ५२४ ॥

**इदानी तु भिदास्त्येव न भविष्यति सा कदा ।**
**अज्ञाननाशेऽप्यज्ञानाकार्यानादेरनाशनात् ॥ ५२५ ॥**

'न त्वेवाह जातु नास न त्व नेमे जनाधिपा । न चैव न भविष्याम सर्वे वयमत परमि'ति गीतोक्तिमनुरुध्याह **इदानीमिति**। तथा च प्रयोग भेद न मिथ्याज्ञानानिवर्त्यत्वात् । न चासिद्धि अज्ञानाकार्यत्वात् । तत्रापि हेतु अनादित्वात् इति । न चाप्रयोजकता । अनादेर्निवृत्तौ ब्रह्मणोऽपि निवृत्ति स्यादिति विपक्षे

बाधकसद्भावात् । न च निवर्तकाभाव उपाधि । उक्तहेतुना पक्षेऽपि तत्साधनेन साधनानव्यापकत्वात् । **अज्ञाननाशेऽपीति।** अपिना अभ्युपगमवाद आह। अज्ञानस्याप्यनादित्वेन ब्रह्मसमानयोगक्षेमतया निवृत्त्यनुपपत्तिरेव। तदुक्त वादावल्या 'अनादिभावरूपस्य विज्ञानविलापनासभवाच्च ब्रह्मवदि'ति। न चाकस्माद्विनिवृत्ति ब्रह्मणोऽपि तथाभावापत्तेरिति दिक् ॥ ५२५ ॥

**तदनुद्धतखण्डानां तत्रैक्यं च न युक्तिमत् ।**
**घटाकाशे महाकाशस्यैक्यं स्यान्न घनावलेः ॥ ५२६ ॥**

**अनुद्धतखण्डानां** = स्वरूपाशभावानापन्नानाम्। **न युक्तिमत्** = नान्यदन्यात्मता याति इति युक्तिविरुद्धम् ॥ ५२६ ॥

**मुक्तास्तु धौतमणिवत्पङ्कार्द्रमणिवत्सृतौ ॥ ५२७ ॥**

'मुक्तिर्हित्वाऽन्यथाभाव स्वरूपेण व्यवस्थितिरि'ति भागवतवचनमनुरुध्य मुक्तिस्वरूप सदृष्टान्तमाह **मुक्ता इति**। तुना तदाऽप्यभेद व्यावर्तयति ॥ ५२७ ॥

**सर्वतोऽप्यपरिच्छिन्नचैतन्यब्रह्मणि स्थिरे ।**
**इतस्ततश्चरच्छिन्नचैतन्यं ह्यन्यदेव हि ॥ ५२८ ॥**

**सर्वतः** देशात कालत गुणतश्च। **छिन्नेति** प्रकारत्रयेणापि परिच्छिन्नेत्यर्थ । 'ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतिस्तु जीवभावमपरित्यज्य ब्रह्मण्येव स्थितिमाहेति भाव ॥ ५२८ ॥

**मुग्धस्त्रीमूर्धमालावदब्धिस्थजलजन्तुवत् ।**
**व्योमस्थपक्षिश्रेणीवद्भूमिस्थजनजालवत् ॥ ५२९ ॥**

मुग्धेत्यादिक आधाराधेयभावमात्रे दृष्टान्त । ब्रह्म तु निन्यातादृशचिच्चैत्य-नियन्तृ इति विशेष ॥ ५२९ ॥

**अथ सर्वा व्यवस्थेयं दृश्यते केवलं जनैः ।**
**वस्तुतो नास्ति तत्सर्वं मृषेति यदि मन्यसे   ॥ ५३० ॥**

**अथेति** एकजीववादमाशक्य प्रत्याचष्टे । **केवलं** भ्रान्त्या । एक जीव अमुक इति अनिश्चयात् । जनैरित्युक्त **सर्वं** बहूना सद्भाव तेषा गमनागमनादिकम् ॥ ॥५३० ॥

**देहादिकं मृषा तेऽस्तु नानादेहस्थचेतनाः ।**
**मृषा चेद्गमनं न स्याद्रज्जुसर्पो न सर्पति   ॥ ५३१ ॥**

अस्तु इत्यभ्युपगम । **मृषा** अचेतनवत् स्वरूपेणैव कल्पिता । आरोपितस्य गमनाद्यभावे दृष्टान्त **रज्जुसर्प** इति ॥ ५३१ ॥

**अस्ति तत्रापि चैतन्यभ्रमस्स्थाणुषु पुंभ्रमे ।**
**चरेयुर्भ्रमकाले वा व्यावहारिकताऽपि ते   ॥ ५३२ ॥**

चैतन्यारोपाङ्गीकारेऽपि नोक्तदोषनिस्तार इत्याह **स्थाणुषु पुभ्रमे** इति ॥ ॥५३२ ॥

**वृथा भूद्बाधतः पूर्वमप्येषां गत्यदर्शनात् ।**
**सत्येन ब्रह्मणा तेषामैक्यं न स्यान्मृषात्मनाम् ॥ ५३३ ॥**

**बाधतः पूर्वं अपि** भ्रान्तिदशायामपि । **एषा** रज्जुसर्प-स्थाणुपुरुषादीनाम् । किच त्वया 'परेऽव्यये सर्व एकीभवन्ती'त्यादिश्रुत्यर्थतया बहूना ब्रह्मैक्यमभिप्रेयते । बहूनामेवाभावे तेषा वाक्याना त्वन्मतेऽप्रामाण्य प्रसज्यत इत्याह **सत्येनेति** ॥ ५३३ ॥

**अथ सन्त्येव चैतन्यभागास्ते सर्वदेहगाः ॥**
**तेषां ब्रह्मविभेदस्तु मृषेति यदि मन्यसे   ॥ ५३४ ॥**

बहुजीववादमुपक्षिप्य दूषयति। **अथेति। सन्त्येवेति।** तेन गमनागमनाद्युपपत्ति । तर्हि एकीभवन्तीति श्रुतिविरोध इत्यत आह **भेदस्तु मृषेति** ॥ ॥५३४ ॥

**सर्वत्र निष्क्रियं ब्रह्म निश्छिद्रं वर्तते किल ॥ ५३५ ॥**

**नानादेहगतान्ये तान्यनन्तान्यत्यणूनि च।**
**चैतन्यान्यादितस्सन्ति सञ्चरन्ति पृथक्पृथक्॥ ५३६ ॥**

**अन्यतोऽनुद्धतांशानामनादिपरिवर्तिनाम्।**
**अणूना सक्रियाणा च बहूनां क्लेशभोगिनाम्॥ ५३७ ॥**

**सदा सर्वत्र पूर्णेन निश्छिद्रस्थिरमूर्तिना।**
**एकेन निर्विकारेण क्लेशाना दूरवर्तिना ॥ ६३८ ॥**

**भेदो मृषेति यद्वाक्य यच्छास्त्रं तत्कृते कृतम्।**
**बधिरास्तत्र शिष्यास्स्युरुन्मत्ता वा न बुद्धिमान्॥ ५३९ ॥**

एवमप्युक्तसर्वदोषानिस्तार एवेत्याह **सर्वत्रेति।** अनादीना तत एव ब्रह्मवत्सत्याना भेदकधर्माणा अङ्गीकार भेदस्य त्वनङ्गीकार व्याहत । तत्प्रतिपादक शास्त्र प्रेक्षावद्भिस्तिरस्कारमेवार्हतीत्याह पञ्चभि । तत्र जीवगता धर्मा अणुत्व सक्रियत्व बहुत्व क्लेशभोगित्व इत्यादय । ब्रह्मगतास्तु सदा सर्वत्र पूर्णत्व निश्छिद्रत्व एकत्व स्थिरमूर्तित्व निर्विकारत्व क्लेशातिदूरत्व इत्यादय । न च धर्माणामपि मिथ्यात्वम्। अनादित्वेन स्वभावत्वात्। स्वभावहानौ स्वरूपहानिप्रसङ्गात्। तदुक्त 'निर्दोषश्रुतिसाक्षिभ्या प्रमिते ब्रह्मजीवयो । सर्वशक्त्यल्पशक्तित्वे मिथ्येति च न युज्यते' इति ॥ ५३५ ॥ ५३६ ॥ ५३७ ॥ ॥५३८ ॥ ५३९ ॥

**मृषा भेदं घटव्योम प्रचलेत्तत्र तत्र किम्।**
**जलेन जलपङ्केन लिप्यते किं दिने दिने ॥ ५४० ॥**

अस्तु वा भेदो मृषा तथाऽपि जीवेषु चलनादिक क्लेशलेपादिक च नैवोपपद्यते इति सदृष्टान्तमाह **मृषेति** ॥ ५४० ॥

**किंतु स्वभावभिन्नानां रेणूनां गगनादिना ।**
**तत्र तत्र क्रिया नास्ति विक्रिया च ततस्ततः ॥ ५४१ ॥**

**निष्क्रियब्रह्मभागाश्चेत्सक्रियत्वं न कर्हिचित् ।**
**निष्क्रियाकाशभागास्ते सक्रियाः केन वा कृताः ॥ ५४२ ॥**

अत गगनादिना रेणूणामिव स्वभावभेदाङ्गीकार एव एकत्र क्रियाऽभाव अपरत्र तत्सद्भाव इत्यादिविरुद्धधर्मोपपत्तिरित्याह **किं त्विति** ॥ ५४१ ॥ ५४२ ॥

**तज्जीवेश्वरभेदो वा मूकता वा गतिस्तव ।**
**स्फोटो यन्नाक्रियेणैक्ये ताल्वोष्ठपुटसंपुटे ॥ ५४३ ॥**

भेदमिथ्यात्वे परस्परविरुद्धयोरिति न्यायेन अभेदोन्मज्जनापत्त्या निष्क्रियेण ब्रह्मणैक्यमापन्नस्य जीवस्यापि निष्क्रियत्वे ताल्वोष्ठपुटविदारणरूपमुखव्यादाना-भावेन मूकीभावापत्तिरिति भावेनाह **तदिति** ॥ ५४३ ॥

**व्यावहारिकतोक्तिस्ते स्पर्धते पदमञ्जरीम् ।**
**बाधश्चेदस्ति तर्ह्यर्थ नास्तितैवेति किं तया ।**
**बाधश्चेन्नास्ति ते शास्त्र नास्तितैवेति किं तया ॥ ५४४ ॥**

**व्यावहारिकेति** व्यावहारिक बाध्यमिति चानर्थान्तरम् । तदुक्त मायिभि 'बाध्यविषये च व्यावहारिकमित्यस्याद्वैतिपरिभाषामात्रसिद्धत्वात्' इति । सत्य च अबाध्यम् । तथा च व्यावहारिकसत्यमित्यस्य अबाध्य बाध्य चेत्यर्थकत्वापत्त्या व्याहतिरेव । शास्त्रस्य बाध्यत्वे वन्ध्यासुतवचस इवासाधकत्वम् । अबाध्यत्वे सदद्वैतभङ्ग इत्याह **बाधश्चेदिति** । तदुक्त भगवत्पादै 'मिथ्यात्व यदि दु खादेस्तद्वाक्यस्याग्रतो भवेदि'त्यादि ॥ ५४४ ॥

**सर्वानुभवसिद्धस्य मर्यादारक्षकस्य च ।**
**जीवेश्वरादिभेदस्य मृषा त्वं केन हेतुना ॥ ५४५ ॥**

**मर्यादेति।** तदुक्त वादावल्या 'यदि भेददर्शन न स्यात्तर्हि सकलव्यवहारविधुर पर प्रसज्येतेति ॥ ५४५ ॥

**यथानुभवमेवार्थस्सदा सर्वत्र तिष्ठतु ।**
**जीवोजीवोस्तु सर्वत्र जडमस्तु जडं सदा ॥ ५४६ ॥**

**ईशस्सर्वत्र चेशोस्तु यथापूर्वमिति श्रुतिम् ।**
**उपेक्ष्य लोकसंहारः क्रियते केन हेतुना ॥ ५४७ ॥**

**न ह्यनादिभवेप्यस्य व्यत्ययोऽर्थस्य कस्यचित् ।**
**इदानीं न कुतो भाविकाले व्यत्यास इष्यते ॥ ५४८ ॥**

**यथाऽनुभवमिति।** 'बल्येवानुभवस्त त्र' इति ब्रह्मतर्कवचनत अनुभवस्य बलवत्त्वेनान्यतो बाधायोगादिति भाव ।'जगत्प्रवाह सत्योऽय पञ्चभेदसमन्वित । न क्वाप्यनीदृश विश्व तत्तत्कालानुसारत इत्युक्ते । याथातथ्यतोऽर्था-न्व्यदधाच्छाश्वतीभ्य समाभ्य इति श्रुतेश्च । **श्रुतिं** 'धाता यथापूर्वमकल्पयदि'ति श्रुतिम् । सहार मिथ्यात्वापादनम् । **कुत इति।** तदुक्त न्यायामृते भाविबाधकशङ्कानिरासभङ्गे 'अहेतुकार्यशङ्केव स्वक्रियादिविरोधत । भाविबाधक-शङ्का न युक्ताऽध्यक्षे श्रुताविव' इति ॥ ५४६ ॥ ५४७ ॥ ५४८ ॥

**निर्दुःखस्वसुखप्राप्त्या मुक्तिश्चैक्यं विना भवेत् ॥ ५४९ ॥**

नन्वेव 'परेऽव्यये सर्व एकीभवन्ती'ति श्रुत्या मुक्तावेकीभावोक्ते का गतिरिति चेत् च्विप्रत्ययेन स्वरूपैक्यस्य बाधितत्वेन निर्दु खत्वस्वयोग्यसुखरूपत्वादिना सादृश्यैक्यमेवेत्याह **निर्दुःखेति** ॥ ५४९ ॥

**वेदस्तु सर्वं ब्रह्मेति सर्वस्याप्येकतां स्फुटम् ।**
**वक्ति तत्र तु जीवैक्यमात्रे केन भरस्तव ॥ ५५० ॥**

ननु 'सर्वं खल्विद ब्रह्म' 'आत्मैवेद सर्वम्' इत्यादिश्रुति स्वरूपैक्य वक्ति । अत अनुभवसिद्धोऽपि भेदो बाध्यतामित्यत आह **वेद इति**। यद्येव तर्हि वेदे श्रद्धालुना सर्वशब्दार्थजडेनाप्यैक्यमङ्गीकार्य न तु चिन्मात्रैक्य विशेषहेत्व-भावादित्याह **केनेति** ॥ ५५० ॥

**दृष्टस्तु जडभेदोऽस्तु मृषा च व्यावहारिकः ॥ ५५१ ॥**

विशेषहेतुमाशङ्कते **दृष्ट** इति । जडभेदोऽनुभवसिद्धो न बाधार्ह इति चेद्धन्त तर्हि अनुभवसिद्धे जीवभेदेऽपि धीमता दृष्टि । स व्यावहारिको मृषा चेत् जडभेदोऽपि तथैवास्तु इत्याह **जडेति** ॥ ५५१ ॥

**यदि तद्व्यतिरेकेणासत्त्वमर्थो जडे तव ।**
**चेतनेऽप्यस्तु नित्यत्वान्न चेन्नित्यजडेऽपि न ॥ ५५२ ॥**

ननु सर्व ब्रह्मेति श्रुतिर्न जडैक्य वक्ति । किंतु ब्रह्मव्यतिरेकेण जडस्यासत्त्वम् । जीवस्य तु स्वरूपैक्य अतो नोक्तदोष इति चेन्निर्मूलैषा सकृच्छ्रुतसर्वशब्दार्थे द्विधा कल्पना वाक्यभेदापत्तेरित्याह **चेतनेऽपीति।** ननु चेतनस्य नित्यत्वान्नासत्त्वकल्पनमिति चेदेव तर्हि अविद्याया अपि तव ब्रह्मवदनादित्वात्तत एव च नित्यत्वावश्यभावात्तस्यापि जीववद्ब्रह्मणा स्वरूपैक्यमेवास्तु न तु पुन तद्व्यतिरेकेणासत्त्वमित्याह **नित्यजड** इति। तदुक्त श्रीभगवत्पादै 'स्यादविद्यात्वमात्मन' इति। इद चाभ्युपेत्योक्तम्। अनित्यस्यापि जडस्य पराभिमतस्य ब्रह्मव्यतिरेकेण त्रैकालिकासत्त्वस्य अनुपपत्तेरेवेति ध्येयम् । तदुक्त 'स्वकाले ह्यस्तिता गृह्णन् साक्षात्कारस्त्रिकालगम्। प्रतिषेध निरुन्धानो गृह्णात्येवाह्यबाध्यतामि'ति ॥ ५५२ ॥

**ईशत्वसर्वकर्तृत्वसर्वज्ञत्वादयो गुणाः ।**
**अलभ्यास्तपसाप्यन्यैस्सर्वप्राणिमनोहराः ।**
**जीवैक्ये खलु सर्वेषामेषां नाशो भविष्यति ॥ ५५३ ॥**

किच जीवैक्यपक्षे बहुविप्लवापाताज्जडैक्यपक्ष एव त्वयाऽङ्गीकारार्ह इत्याह **ईशेति । मनोहरा इति ।** तदुक्त भागवते प्रथमस्कन्धे 'एते चान्ये च भगवन् नित्या यत्र महागुणा प्रार्थ्या महत्त्वमिच्छद्भिर्न च यान्ति स्म कर्हिचिदि'ति । जडैक्ये तु चित्त्वनाश सन्नपि 'यत्राल्पीयास्ये दोषा सपक्ष' इति न्यायेन सह्य इति भाव ॥ ५५३ ॥

**दुर्घटं घटयन्ती ते माया चित्त्वं जडे दिशेत् ।**
**तेन चित्त्वादिनाशस्स्यान्न जडैक्येऽपि ते मते ।**
**तच्चेदैक्यं सुखग्राह्यमिदं कस्मान्न गृह्यते ॥ ५५४ ॥**

किच दुर्घट घटयन्ती तवाविद्या चित्त्वमपि जडे घटयेदेवेति न तस्यापि नाशभयमिति सोपहासमाह **दुर्घटमिति । सुखेति** अनुभवविरोधमवधीर्य अविद्याप्रभावेणेत्यर्थ । **इदं** जडैक्यम् ॥ ५५४ ॥

**अनर्घरत्नचोरस्तु रक्ष्यो मृद्भाण्डतस्करः ।**
**शिक्ष्यः किल कृपालुस्तु दीनेषु कुरुते दयाम् ॥ ५५५ ॥**

अनर्घ्यरत्नाना ईशगुणाना चोर अपलापपर्यवसित जीवाभेद । मृद्भाण्ड चित्त्वम् । तस्य तस्कर अपलाप शिक्ष्य अग्राह्य । किलापहासे । कृपालु अविद्या । दीनेषु जडैक्यपक्षे एव । **दया कुरुते** चित्त्व घटयेत् ॥ ५५५ ॥

**जडस्यानन्दमयता जडं जन्मादिकारणम् ।**
**जडादज्ञाननाशस्ते दुर्घटं घटयेज्जडम् ॥ ५५६ ॥**

अविद्या दुर्घटत्वस्य तदाभिमतभूषणत्वविवरणव्याजेन बहुधा मायिमतप्रमेयाणा प्रमाणविरुद्धता व्युत्पादयति **जडस्येत्यादिना । आनन्दमयता =** सूत्रकृन्निर्णीतब्रह्मत्व पूर्वपक्षीकृत्य सिद्धान्तीकृता कोशरूपता । जड अज्ञान

जन्मादिकारण न तु ब्रह्मेति ब्रह्मस्वरूपलक्षणस्य तटस्थतोक्ति । चित अज्ञानस्फोरकत्वमुपेत्य जडात् चरमवृत्तिज्ञानादेव अज्ञाननाश ॥ ५५६ ॥

**ज्ञानत्वरूपं चित्त्वं च वक्ष्यामोनुपदं जडे ।**
**दुष्करं तस्करत्वं तदस्मिन्ब्रह्म यशस्करे ॥ ५५७ ॥**

अनुपद (५६३ श्लो) ज्ञानरूपमनस्तत्त्वेनेत्यत्र । ज्ञानकार्यस्याज्ञाननिवृत्त्यादे जडेन वृत्तिज्ञानेनैव करणाभ्युपगमादस्यैव चित्त्व अतथाभूतस्यात्मनो ज्ञानरूपत्वाभाव । यथोक्त वादावल्या जडत्वहेतुभङ्गे 'आत्मनो ज्ञानस्वरूपता न निर्वाह्यतामारोहतीत्यादि'ना । **दुष्करं** विपरीतलक्षणया सुकरमिति भाव । **तस्करत्वं** प्रकाशतस्करत्व एव यशस्करत्वमित्यत्रापि विपरीतलक्षणया तद्गुणापलापेन अपयशस्करत्वमिति हृदयम् । तदुक्त भगवत्पादै 'याथातथ्यमविज्ञाय शास्त्राणा शास्त्रदस्यव' इत्यादि । एव घटादीना द्रष्टृत्व आत्मनश्च जडत्व - इत्यादि विरुद्ध सर्वमपि स्यात् इति ॥ ५५७ ॥

**मायाशक्त्या जडस्यापि सार्वज्ञादिप्रदानतः ।**
**ऐक्ये तु न जडात्मैक्यं तस्करस्याद्धि कस्यचित् ॥ ५५८ ॥**

नन्वेवमपि जडैक्याङ्गीकारे ब्रह्मण सार्वज्ञादिहानापत्तिरित्यतो मा भैषी त्वदाराध्यदेवताऽविद्यास्वशक्त्या जडेऽपि ब्रह्मणि सार्वज्ञादिक घटयिष्यति इति सोपहासमाह **मायेति । न तस्करः स्यादिति ।** अप्रमाण सर्व घटयेदेवेति भाव ॥ ॥५५८ ॥

**अथवा जडतामीशे दत्वा माया स्वशक्तितः ।**
**जडैक्यमेव घटयेदिदं तेऽतिप्रियं मतम् ।**
**यत्र त्वस्येति वाक्योक्तमुक्तेरत्युपयोगतः ॥ ५५९ ॥**

जडैक्य कथ ममातिप्रियमित्यत आह **यत्रेति ।** यत्रत्वस्येति श्रुत्यर्थतया त्वया मुक्तौ ज्ञानसाधननिषेधेन मुक्ताना पर्यवसितजडत्वोपपादकत्वेन

त्वदभिमतमुक्तिस्वरूपोपोद्बलनादिति भाव ॥ ५५९ ॥

**नात्मानं न परांश्चापि तव मुक्तस्तदेक्षते ।**
**जडमुक्तस्तु सर्वत्र जडैक्ये नित्यमुक्तता ॥ ५६० ॥**

न केवलमेतावत् कितु जडैक्ये सर्वदा ज्ञानाभावेन नित्यमुक्तत्वरूपातिशयोऽपीत्याह **नेति**। तदा मुक्तिदशायामेव। **सर्वत्र** नित्यदा स्वरूपविषयकज्ञानशून्य ॥ ५६० ॥

**फले त्वतिशयाद्वाक्यं जडैक्यपरमेव तत् ।**
**सुखात्मता जडेऽपि स्यान्मानसं हि सुखं नृणाम् ॥ ५६१ ॥**

**जडेऽपीति**। 'विषयसबन्धेनापि आत्मस्वरूपानन्द एवाभिव्यज्यते' इति विवरणोक्ते । न च सुखरूपत्वेऽपि सुखविषयकतत्त्व जडस्य नास्तीति वाच्यम् । निर्विशेषत्ववादिना चितोऽपि तदनङ्गीकारादेवेति भाव ॥ ५६१ ॥

**मोक्षश्च तार्किकाचार्यमोक्षवद्वा भविष्यति ॥ ५६२ ॥**

प्रसङ्गेन तार्किकाभिमता सुखदु खोभयध्वसलक्षणा जडैक्यपर्यवसायिनी मुक्तिमपि दृष्टान्तमुखेन धिक्करोति **मोक्षश्चेति** ॥ ५६२ ॥

**ज्ञानरूपमनस्तत्त्वेनैक्ये ज्ञानत्वमप्यलम् ।**
**स्यादेव यत्समस्तस्य ज्ञानं मानसमावयोः ।**
**न ते किञ्चिदनिष्टं स्यादस्माकं महती क्षतिः ॥ ५६३ ॥**

मनस्तत्त्वेन जडेन । मानस 'धीर्भी सर्व मन एवे'ति श्रुते । **अस्माकं** दूषणाना भूषणत्वममन्यमानाना यथानुभूतगुणदोषस्वरूपतत्त्वविदाम् । **महती क्षतिः** जीवजडैक्ये ब्रह्मणोङ्गीक्रियमाणे प्रमितभेदापलापेन अपसिद्धान्त ॥ ५६३ ॥

**तथापि चित्त्वमात्रस्य त्यागाद्धीतो जडैकताम् ।**
**श्रुतामपि जहासि त्वं यर्हि तर्हि तवैकताम् ॥ ५६४ ॥**

**महागुणापहर्त्रीं त्वं त्यज भक्त्या भजाच्युतम् ।**
**न चेत्प्रभुर्महाचोरं त्वामन्धेतमसि क्षिपेत् ॥ ५६५ ॥**

**तथाऽपि** श्रुतपरित्यागाख्यदूषणस्य स्वसिद्धान्ताभिमत भूषणत्व परित्यज्यापि । **तवैकता** = त्वदुपलक्षितजीवैकता त्यज । अन्यथा त्वा सूत्रनिर्णीताना श्रुतिमहातात्पर्यविषयाणा अनन्तगुणानामपहर्तारम् । **महाचोर** 'अचूचुरद्वेदसमूहवाह ततो महातस्करमेनमाहु ' इत्युक्तदिशेति भाव । अन्धेतमसि क्षिपेत् । अन्धन्तमोऽप्यलङ्कारो नित्यदु ख शिरोमणिरि'ति भगवत्पादोक्ते ॥ ॥५६४ ॥ ५६५ ॥

**दृश्यमानमिदं सर्वं ब्रह्मेत्यैक्यानुशासनात् ।**
**जडस्य ब्रह्मणैक्येऽपि का ते हानिर्निगद्यताम् ॥ ५६६ ॥**

कि च पराभावबोधकमिद पद 'अन्तवन्त इमे देहा' इत्यत्रेव दृश्यमानजडपरमेवाश्रयितु युक्त न तु प्रत्यगात्माभिधायकमित्याह **दृश्यभावमिति ।** ते = अनुपपत्तीना मायोपोद्बलकत्वेन अलङ्कारतामङ्गीकुर्वाणस्य ॥ ५६६ ॥

**स्वावेद्यत्वं स्वभातत्व जडैक्ये शोभतेतराम् ।**
**सार्वज्ञादिगुणानां च मिथ्यात्वं शोभतेतमाम् ॥ ५६७ ॥**

आत्मन इव निर्विकल्पकस्वव्यवहारे घटादिजडस्य सविदन्तरापेक्षा शून्यत्वस्य स्वप्रकाशत्वस्य श्लिष्टत्वात् इत्याह **शोभतेतरामिति ॥** सार्वज्ञादिगुणाना जडे मिथ्यात्व तु सर्वसमतमित्याह **शोभतेतमामिति** ॥ ५६७ ॥

**रागादिदोषशून्यत्वमपि युक्ततरं भवेत् ।**
**सुखत्वमनुभूतित्वं मनोवत्स्यान्निराकुलम् ।**
**जडोपादानताऽप्यस्य पञ्चम्योक्तातिशोभते ॥ ५६८ ॥**

**सृष्टिस्त्वदृष्टतोस्त्वेषा भाट्टानामिव ते मते ।**
**मिथ्याभूतं च कर्तृत्व कस्य न स्यादुदीर्यताम् ॥ ५६९ ॥**

एवमनुपपत्त्यन्तरापातेन त्वन्मत भूषिततर स्यादित्याह त्रिभि **रागादीत्यादिना** ॥ **निराकुलमिति** मनोदृष्टान्तेन, जडत्वेन हेतुना सुसाधत्वादिति भाव । **पञ्चम्येति** 'यतो वेमानि' इत्यत्रत्यया ॥ ५६९ ॥

**चित्त्वादिधर्मशून्यैस्तु चेतनैर्घटसन्निभैः ।**
**अप्यैक्यं युक्तमेवास्येत्यस्तु सर्वं समञ्जसम् ॥ ५७० ॥**

**घटसन्निभैः** तत्रापि जडत्वादिधर्माणा त्यागेन पदार्थत्वरूपेणेत्यर्थ ॥ **समञ्जस** विपरीतलक्षणया सर्वानुपपत्तिभाजनम् ॥ ५७० ॥

**यद्येवमपि तत्रार्थस्तद्विनाऽसत्त्वमेव ते ।**
**चेतनेऽप्यस्त्वसावर्थो द्विधा क्लृप्तिस्तु ते मुधा ॥ ५७१ ॥**

**द्विधा** जीवस्यैक्य जडस्य मिथ्यात्व इत्येवरूपेण ॥ ५७१ ॥

**गजो मिथ्या यथा तद्वन्मिथ्या किल पलायनम् ।**
**बन्धो मिथ्याविमोक्षश्च मिथ्या किल भवन्मते ॥ ५७२ ॥**

**मोक्षश्च मिथ्येति** । अन्यथा सदद्वैतभङ्गात् ॥ ५७२ ॥ ५७३ ॥

**अतः किं चेतनैरेतैः कर्तृता भोक्तृतोज्झितैः ।**
**सर्वत्रैक्यश्रुतीनां स्यादेवं चेदेकवाक्यता ॥ ५७३ ॥**

**साम्येऽपि श्रुतियुक्तीनां हान्यभावेऽपि केवलम् ।**
**यदि स्वमतरक्षायै विवक्षेयमपेक्ष्यते ॥ ५७४ ॥**

**श्रुतियुक्तीनां** विरोधस्येति शेष ॥ **स्वमतेति** सकलप्रमाणविरुद्ध-स्वव्याहतमतरक्षायै इत्यर्थ 'सर्व समाप्नोषि ततोऽसि सर्व' इति गीताशाङ्करभाष्ये भेदमाश्रित्य सर्वव्यापकमित्यर्थोक्तिरिति ध्येयम् ॥ ५७४ ॥

**सर्वस्य तदधीनत्वमर्थं सा वक्ति न द्विधा ॥ ५७५ ॥**

**तदधीनत्वमिति** 'स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि । सादृश्ये चैक्यवाक्सम्यक् सावकाशा यथेष्टत ' इति भगवत्पादीयवचनात् ॥ ५७५ ॥

**अतो वाक्यबलादैक्यमाशास्यं न क्वचित्त्वया ॥ ५७६ ॥**

**ऐक्य** अनुभवविरुद्ध जीवैक्यम् । तदुक्त भगवत्पादै 'न चानुभवविरोधे आगमप्रामाण्यानुभवस्यैवाप्रामाण्यप्राप्ते ' इति । **क्वचिदिति** त्वद्भाष्यकारेणापि विरोधभिया तत्रतत्र 'सर्वकाम सर्वगन्ध ' 'त एतस्यैव सर्वे रूपमभवन्' 'कामोऽस्मि भरतर्षभ' 'नमोऽस्तु सर्वत एव सर्व' इत्यादौ सामानाधिकरण्यस्य भाक्तत्वमुपेत्य नियामकत्वव्यापकत्वादिभेदपरार्थस्यैवाश्रयणात् अत्र पुन स्वरूपैक्योक्तौ स्वव्याघातापत्तेरिति भाव । विस्तरस्त्वत्र 'भेदपराण्येव खलु ब्रह्मसूत्राणि' इति ग्रन्थे (प ९५-१०२) द्रष्टव्य ॥ ५७६ ॥

**विरुद्धापातलब्धेऽर्थे तवैवाय दुराग्रहः ।**
**अभिमान्युपदेशेन व्यासस्त्वर्थान्तरं जगौ ॥ ५७७ ॥**

**जगौ** अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामिति नये । अर्थान्तर अभिमानिदेवतारूपम् ॥ ५७७ ॥

**श्रुतिश्चतुर्मुखैक्यं च मन्यते न परात्मनः ।**
**जीवैक्यं किमु तेनैव मोचिताऽनेकसङ्कटा ॥ ५७८ ॥**

**मोचितानेकसकटा** इति बहुव्रीहि श्रुतिरित्यनेन अन्वय । मत्स्यरूपेण इति शेष । तदुक्त भागवते 'प्रलयपयसि धातु सुप्तशक्तेर्मुखेभ्य श्रुतिगणमपनीत प्रत्युपादत्त हत्वा । दितिजमि'ति ॥ ५७८ ॥

**हरिश्च स्वगुणान्दिव्यान्न मुञ्चति न तान्दिशेत् ।**
**तपसाराधितोऽपीषत्कर्तृज्ञातृत्वदो ह्यसौ ॥ ५७९ ॥**

**हरिरिति** 'न कर्तृत्व न कर्माणि लोकस्य सृजति प्रभुरि'ति गीतोक्ते । स्वातन्त्र्येणेति शेष ॥ **तपसेति** 'एव पुरा धारणयाऽऽत्मयोनि नष्टा स्मृति प्रत्यवरुह्य तुष्यन् । तथा ससर्जेदमि'ति भागवतोक्ते ॥ ५७९ ॥

**तस्मान्नात्मैक्यमन्येषां केषामपि सदित्सति ।**
**यः पौण्ड्रकवधं चक्रे यश्चेदिपमखण्डयत् ॥ ५८० ॥**

**न दित्सति** इच्छाया अप्यभावे कुतो दानम् । न हि कोऽपि प्रेक्षावान् स्वैश्वर्य स्वयमेव घातयति । वध 'अथ च दैत्यहतिस्तमसि स्थिरा नियतसस्थितिरेव नान्यथा' इत्युक्तरूपम् ॥ ५८० ॥

**सोहंभावात्किमन्योऽस्ति द्रोहः पौण्ड्रकराक्षसे ।**
**स चेच्छास्त्रस्य तत्त्वार्थः कुतस्तं शिक्षयेत्प्रभुः ॥ ५८१ ॥**

**सोऽहमिति** । वासुदेवोऽहमवतीर्णो जगत्पति ' इति तेन कृष्ण प्रति दूतमुखेन सन्देशप्रेषणात् ॥ ५८१ ॥

**सत्यं प्रियं वचो वाच्यं वाच्यं नासत्यमप्रियम् ।**
**यदच्युतोऽहमित्युच्चैरुच्चरन्पौण्ड्रकश्च्युतः ॥ ५८२ ॥**

**च्युतः** तमसि पातित ॥ ५८२ ॥

**यया भियैकवाक्यस्थं जडैक्य त्यज्यते त्वया ।**
**तयैव त्यज जीवैक्यं विरम्य व्यापृतिर्न चेत् ॥ ५८३ ॥**

**भिया** अनुभवविरोधात् ॥ ५८३ ॥

**धौतवाससि दत्तोऽन्नरसो रजकमन्दिरे ।**
**एकीकर्तु प्रयत्नेन ताडितोऽपि पुनः पुनः ॥ ५८४ ॥**

'न हि भिन्नमभिन्नता याति' न्यायस्यात्यबाध्यता लौकिकदृष्टान्तोक्त्या द्रढयति **धौतेति**। तथा स्थानैक्यमेवार्थ ॥ ५८४ ॥

**एकीभूत इति प्रोक्तोऽप्येकतामेति किं पटे।**
**वाक्यं तद्बाधितार्थत्वात्सोपचारं प्रकल्प्यते ॥ ५८५ ॥**

**ग्रामेऽस्मिन्नेक एव त्वमित्युक्तेश्चापि किं भवान्।**
**अतोऽन्यस्यान्यवस्तुत्वं वाक्यैर्यत्नशतैरपि।**
**कर्तुं न शक्यं किं वाचा काचो नीलमणिर्भवेत्॥ ५८६ ॥**

विशिष्टैक्यस्य उदाहरणमाह **ग्राम इति**। सादृश्यैक्येऽपि तदाह **काच** इति ॥ ५८६ ॥

**भ्रमराद्भ्रमरोऽन्यस्स्याद्दीपाद्दीपान्तरं भवेत्।**
**तयोरैक्यं न तत्रापि द्वितायास्स्पष्टमीक्षणात्॥ ५८७ ॥**

"कीट पेशस्कृतारुद्ध कुड्ये यान्तमनुस्मरन्। सरभभययोगेन विन्दते तत्सरूपतामि"त्यत्रापि समानरूपताप्राप्तिरेवोक्ता न त्वेवैक्यमित्याह **भ्रमरादिति**। ईशसृष्टौ तेजोविनिमयदृष्टान्तोक्तिरपि दीपे दीपान्तरेषु च अभिमानिदेवतैक्यविवक्षयैवेत्याह **दीपादिति**। जडदीपयोरैक्यमपहसनीयमित्याह **द्विताया इति** ॥ ५८७ ॥

**अयोऽपि स्वर्णतायोग्यं स्वर्णं स्यान्न तु मृत्तिका।**
**तत्किं स्वर्णान्तराभिन्नं विक्रियायां क्रयोऽधिकः॥ ५८८ ॥**

जीवस्यापि योग्यतावत सत एव मुक्तौ परमात्मना सादृश्यैक्य न सर्वस्य। तत्रापि नित्यमुक्तिस्वभावात्परमात्मनोऽत्यन्तभेद एवेत्यत्र दृष्टान्तमाह **अयोऽपीति** ॥ ॥५८८ ॥

**क्षीरान्तस्स्थितनीरस्याप्यन्तर्भेदोऽग्निनेक्ष्यते ।**
**अदनानदनाभ्यां हि यथा जीवेशयोर्हृदि ॥ ५८९ ॥**

**अग्निना** पाकेन । **ईक्ष्यते** जलस्य नाश, क्षीरस्य तु घनीभाव इति विरुद्धधर्माभ्यामनुमीयते । यद्वा वसिष्ठादियोगिभि प्रत्यक्षेणैव ईक्ष्यते । एव हसपक्षिणा । अदनानदनाभ्या = एक तयो खादति पिप्पलान्न अन्यो निरन्नोऽपि बलेन भूयानि'ति स्मृत्युक्तरूपाभ्याम् । अत्रापीक्ष्यत इत्यस्य पूर्ववदर्थद्वयम् । यद्वा आगमेनेश्वर प्रतियोगिन जानत तद्विरुद्धस्वभावमात्मान प्रत्यक्षीकुर्वत साक्षिणाऽपि ईक्ष्यते । तदुक्त 'भुञ्जान वा गुणान्वितम् । विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुष' इति ॥ ५८९ ॥

**एवं भिन्नस्वभावानां जीवानां ब्रह्मणीश्वरे ।**
**अपरिच्छिन्नचिद्रूपे परिच्छिन्नाणुरूपिणाम् ॥ ५९० ॥**

**अनादितोऽप्यनन्तानामनन्तक्लेशभोगिनाम् ।**
**ऐक्यं वाक्यशतेनापि वक्तुं शक्यं न कुत्रचित् ॥ ५९१ ॥**

**वाक्यशतेनेति** प्रत्यक्षविरुद्धार्थे वाक्याना योग्यताऽभावे नाप्रामाण्यापत्ते । अङ्गीकृता चेय व्यवस्था मायिनाऽपि तत्त्वमसिवाक्ये प्रत्यक्षाविरोधाय लक्षणामाश्रयता । उक्त च तेनैव 'प्रत्यक्षेण विरोधोऽयमुभयोरुपलभ्यते' इति । ऐक्य तयोर्लक्षितयोर्न वाच्ययोरिति च । एव गीताशाङ्करभाष्ये १८ अध्याये 'न हि अग्निरनुष्ण अग्निर्न प्रकाशते इति ब्रुवच्छ्रुतिशतमपि प्रामाण्यमश्नुते' इति ॥ ५९० ॥ ॥५९१ ॥

**मुख्यार्थबाधे वाक्यानामन्योऽर्थः कथ्यते बुधैः ।**
**यजमानः प्रस्तरः किमग्निर्माणवकोऽपि वा ॥ ५९२ ॥**

**किं योषिदग्निरादित्यो यूपोऽन्धो मणिमीक्षते ।**
**मृदब्रवीत्किमु(ग्रा)ग्ला वा प्लवते**
**किमपाञ्चवाक् ॥ ५९३ ॥**

**एता सा बाधितार्थानां यथाऽन्योऽर्थो मतस्तव ।**
**तथापि बाधितार्थैक्यवाक्येऽप्यन्योर्थ ईर्यताम् ॥ ५९४ ॥**

**वाक्यानां** वेदे वेदानुसारिणाम् । तदुक्त तत्त्वोद्योते 'वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना' इति । **निदर्शयति** । यजमान यजमानकार्यकारी । **अग्निः** अग्निसदृश । **योषिदग्निरिति** 'नन्वग्नि प्रमदा नाम घृतकुम्भसम पुमान् । सुतामपि रहो जह्यात्' इति भागवतोक्ते योषित् आग्निसदृशीत्यर्थ । **आदित्यः** आदित्यसदृश । **अन्धः** प्राग्गुरूपदेशात् ज्ञानहीन **मणि** प्रधान परमात्मानम् । **मृत्** तदभिमानिदेवता । इत्येव अविरुद्धोऽर्थो ज्ञेय । **अन्यार्थः** सादृश्यैक्यादिरूप ॥ ॥५९२ ॥ ५९३ ॥ ५९४ ॥

**दृष्टार्थबाधो वाचा स्यात्तस्यास्स्वार्थे दृढे सति ।**
**बाधाभावे दृढोऽर्थस्स्यादित्यन्योन्याश्रयो न चेत् ॥ ५९५ ॥**

'न हि प्रत्यक्षसिद्धमन्येन केनापि बाध्य दृष्ट' इति तत्त्वोद्योतोक्ति विवृणोति **दृष्टेति** । न च वैपरीत्य शक्यम् । प्रत्यक्षस्य स्वभावत प्रबलत्वात् । 'न हि पञ्चानन हरिणशावकाभावमपेक्ष्य वनमवगाहते इत्युक्ते ॥ ५९५ ॥

**गङ्गायां घोष इत्युक्तिः किं बाधं बाधते स्वयम् ।**
**बाधेन बाधिता(वा)र्था स्यादन्यार्थेति**
**विचार्यताम् ॥ ५९६ ॥**

नो चेत् 'गङ्गाया घोष' इत्यत्र सर्वसप्रतिपन्न लक्षणाश्रयण न स्यादित्याह **गङ्गायामिति** ॥ ५९६ ॥

**यद्यापातप्रतीतोऽर्थो बाधितोऽपि भवेद्गिराम् ।**
**तर्ह्याकाशादिशब्देन ब्रह्ममीमांस्यते कुतः ॥ ५९७ ॥**

अन्यथा सर्वाऽपि मीमासोन्मूलिता स्यादित्याह **यदीति** आकाशाद्यधिकरणस्य चित्राज्याद्यधिकरणस्य च प्रवृत्तिर्न स्यात् ॥ ५९७ ॥

**श्रुतबाधितसंत्यागे भाष्यं दुर्भाष्यमेव ते ।**
**श्रुतबाधितसंवादे भाष्यं दुर्भाष्यमेव ते ॥ ५९८ ॥**

एकादशभि श्लोकै उभयत· पाशारज्जुभि· पर बध्नाति **श्रुतेत्यादिना। श्रुतं** आपातत ऐक्यमिथ्यात्वादिक तत्त्व तद् बाधित च सकलप्रमाणै । तादृशास्यार्थस्य सत्यागे सर्वसिद्धान्तहान्यापत्त्या भाष्य दुर्भाष्यमेव। तादृशास्यार्थस्य सवादे स्वीकारे मीमासाया एव नैरर्थक्येन भाष्य पुनर्दुर्भाष्यमेव ॥ ५९८ ॥

**यदीश्वरोऽसमर्थस्स्यात्कथं सर्वं जगद् भवेत्।**
**यदीश्वरस्समर्थस्स्यात्कथं सर्वं जगद् भवेत् ॥ ५९९ ॥**

**कथं तस्मादिति** पूरणीयम्। असमर्थस्य स्रष्टृत्वायोगात् अन्यस्य च कर्तुरभावात् तदभावे च कार्यजगदुत्पत्त्यनुपपत्ते । द्वितीययोजनिकाया समर्थ जगदिति सामानाधिकरण्यम्। निर्विकारस्य समर्थस्य सत स्वेच्छया जगदात्मना भवनासभवात्। 'सच्च त्यच्चाभवत्' इति तु अन्तर्यामिबहुरूपभवनार्थकमेवेति हृदयम् ॥ ५९९ ॥

**यदीश्वरो महेशस्स्यादनीशत्वं कथं भजेत्।**
**यदीश्वरोऽप्यनीशस्स्यादनीशत्वं कथं भजेः ॥ ६०० ॥**

अनीशत्व नीचजीवैक्यम्। **कथं भजेरिति।** अनीशभजनेन प्रयोजनाभावात् ॥ ६०० ॥

**यदि सत्या हरेर्धर्माः कथमैक्यं न बाधितम्।**
**यद्यसत्यहरेर्धर्माः कथमैक्यं न बाधितम् ॥ ६०१ ॥**

**सत्या इति।** सत्यविरुद्धधर्माधिकरणयोरैक्यायोगात्। **असत्या इति** ऐक्यस्यापि धर्मत्वाविशेषेण बाधावश्यभावात् ॥ ६०१ ॥

**अभेदान्नैक्यबाधश्चेत्कथं धर्मस्य बाधनम्।**
**अभिन्नधर्मबाधश्चेत्कथं धर्मस्य बाधनम् ॥ ६०२ ॥**

ऐक्यवदेव धर्मत्वाविशेषात् सार्वज्ञादीना बाधाभाव तत एव ब्रह्मस्वरूपत्व चाङ्गीकर्तव्यम्। अन्यथा अद्वैतहान्यापत्ते। ऐक्यस्य ब्रह्मस्वरूपत्व च 'एकधाऽनुद्रष्टव्यमि'ति श्रुत्यर्थतया परेणोररीकृतम्। **एवमपि** ऐक्यवदेव ब्रह्माभिन्नत्वेऽपि सार्वज्ञादिधर्माणा बाधाङ्गीकारेऽतिप्रसङ्गमाह **अभिन्नेति। धर्मस्य** एवेत्युपस्कर्तव्यम्। किन्तु धर्मिणो ब्रह्मणोऽपि बाध स्यात् इत्याशाय ॥ ६०२ ॥

**अभेदान्न गुणाश्चेत्स्युः कथमैक्यं भवेत्तव।**
**अभेदेऽपि गुणाश्चेत्स्युः कथमैक्यं भवेत्तव ॥ ६०३ ॥**

जीवब्रह्मैक्यवदेव स्वरूपयो सापेक्षत्वनिरपेक्षत्वे क्वचित्प्रतीतत्वाप्रतीतत्वे अस्येदमिति सबन्धितयाऽवभासोऽपर्यायशब्दवाच्यत्व इत्यादिवैचित्र्य द्रष्टव्य' इति वादावल्युक्त समाधिमभिधास्यन्नाक्षिपति **अभेदादिति। गुणाश्चेन्न स्युरिति।** 'ब्रह्मण आनन्द' इत्यादिधर्मधर्मिभावसबन्धावभासापर्यायशब्दवाच्यत्वादयो न स्युरिति भाव। परिहरति **कथमिति।** ब्रह्मण ऐक्यमिति सबन्धावभासादीना ऐक्येऽपि सत्त्वात्तत्रापि त्वदुक्तानुपपत्तय प्रसरन्त्येवेति भाव। कस्तर्हि परिहार इत्यत मन्मते विशेषाङ्गीकारेण स सुलभ इत्याह **अभेदेपि।** मन्मत इति शेष। त्वन्मते तु उक्तानुपपत्तयो वज्रलेपायिता इत्याह **तवेति।** निर्विशेषवादिन इत्याशाय ॥ ६०३ ॥

**श्रुत्युक्तं यदि तत्त्वं स्यादद्वैतस्य न तत्त्वता।**
**श्रुत्युक्तं यद्यतत्त्वं स्यादद्वैतस्य न तत्त्वता ॥ ६०४ ॥**

किञ्च श्रुत्युक्त तत्त्व न वा। आद्ये आह **अद्वैतस्येति।** द्वा सुपर्णेत्यादि निरवकाशसुबहुश्रुतिबाधितत्वादिति भाव। द्वितीय आह **अद्वैतेति।** प्रमाणविषयो हि तत्त्वम्। औपनिषदस्य ब्रह्मणस्तदैक्यस्य च प्रमाणान्तरेण न तावत्सिद्धि सभाविनी। अत श्रुत्यैव तत्सिद्धिरेष्टव्या। तदुक्तमपि चेदतत्त्व इति उच्येत तर्हि निष्प्रमाणकत्वादद्वैतस्य अतत्त्वतैवेति भाव ॥ ६०४ ॥

**यदि ज्ञानं हरेस्सत्स्यान्न ज्ञाता ज्ञानवानसौ ।**
**यदि ज्ञानं हरेर्न स्यान्न ज्ञाता ज्ञानवानसौ ॥ ६०५ ॥**

परमतेऽज्ञानासभवमाह **यदीति** । समानाश्रयविषयकयोर्ज्ञानाज्ञानयोर्विरोधात् ब्रह्मणश्च सर्वज्ञत्वात् सर्वस्यापि तेन ज्ञातत्वेन कुत्रापि विषये तस्याज्ञान न घटते इति भाव । तदुक्त 'अज्ञताऽखिलसवेत्तुर्घटते न कुतश्चने'ति । अथैतद्दोषपरिजिहीर्षया ब्रह्मणो ज्ञान नाङ्गीक्रियते तर्हि तस्यासाधकत्वापत्त्या अज्ञानसिद्धि न स्यात् । तन्मते साक्षिणो ब्रह्मण एव अज्ञानसाधकत्वात् । तथा हि तद्वचन 'आश्रयत्वविषयत्व भागिनी निर्विशेषचितिरेव केवला' इत्यादि । ज्ञान ज्ञानविषय अज्ञान तद्वान् नेत्यर्थ ॥ ६०५ ॥

**यदि ज्ञानेऽपि चाज्ञानं न संसारो हरेरयम् ।**
**यदि ज्ञानेन चाज्ञानं न संसारो हरेरयम् ॥ ६०६ ॥**

अथ सर्वज्ञस्याप्यज्ञान सर्वज्ञत्वाविरोध्येव किञ्चिदङ्गीक्रियते चेत् काममङ्गीक्रियता तथा सति तस्य पारिभाषिकत्वापत्त्या हरे ससारानापादकत्वादित्याह **यदीति** । **अयं** वास्तवाज्ञानकार्यो दु खाद्यनुभवरूप । अज्ञानस्य ज्ञानविरोधित्वपक्षे आह **यदीति** । सर्वज्ञे हरौ तथाविधस्य ससारकारणस्याज्ञानस्यासभवादेव न ससार इति भाव ॥ ६०६ ॥

**यदीश्वरो जगद्व्यापी कथमैक्यं न बाधितम् ।**
**यदीश्वरो न तद्व्यापी कथमैक्यं न बाधितम् ॥ ६०७ ॥**

आद्ययोजनिकाया ऐक्यमित्यनन्तर अणुभि· जीवैरित्युपस्कर्तव्यम् । विरुद्धधर्माधिकरणत्वेन भेदस्यैव प्रमितत्वादैक्य बाधितमेवेति भाव । द्वितीययोजनिकाया, न जगद्व्यापी किन्तु वैकुण्ठैकदेशभाग एव स्थितो यदीत्यर्थ । ऐक्यमित्यनन्तर भिन्नदेशस्थितैर्जीवैरिति शेष· । न च वैकुण्ठ एव स्थितैर्मुक्तैस्तर्हि ऐक्यमस्त्विति वाच्यम् । तत्रापि भुवनैकपतेर्भवनस्य भिन्नभागदेश एव सत्त्वादिति भाव ॥ ६०७ ॥

**ऋजुमार्गे गतोऽप्यन्धो घट्टकुट्यां निषीदति।**
**वक्रमार्गे गतोऽप्यन्धो घट्टकुट्यां निषीदति ॥ ६०८ ॥**

**गतेऽपि पृष्ठतोगत्वा कपोले ताडयेद्बली।**
**आगतस्यापि मन्दस्य कपोले ताडयेद्बली।**
**पक्षद्वयेऽप्येकदोषप्रसञ्जनमपीदृषम् ॥ ६०९ ॥**

मायाया अनुपपत्तिरलङ्कार इति स्वीकृत्य स्वमतस्य दुष्टता स्वयमेव ब्रुवाणस्य मायिन सर्वत्राप्येव उभयत पाशारज्जवो दुष्परिहरा इत्येतल्लौकिक-दृष्टान्तोक्तिपुरस्सरमाह **ऋज्विति** ॥ ६०८ ॥ ६०९ ॥

**अल्पोल्पवित्तेऽप्यात्मानं वित्तेशं किं न मन्यते।**
**सर्वज्ञब्रह्मताल्पज्ञेष्वप्येवं हि कुवादिनाम् ॥ ६१० ॥**

गीतोक्ताया आसुर्या सपदो मायी प्रथम निदर्शनमित्याह **अल्प इति। वित्तेशं** 'आढ्योऽभिजनवानस्मि कोऽन्योस्ति सदृशो मये'त्युक्तप्रकारेणेति भाव ॥ **ब्रह्मतेति**। 'ईश्वरोऽह' इत्युक्तदिशेति भाव ॥ ६१० ॥

**अहंकारो हि लोकानां विकारो दुस्त्यजो महान्।**
**अधमादधमो जीवो ह्यधिकादधिकः किल ॥ ६११ ॥**

**अहङ्कार इति** 'अविद्यमानात्मगुणाभिमान मोहादहङ्कारमुशति सन्त' इत्युक्तलक्षण ॥ किलेत्यनेन मायावादिनैव जीवस्याधमादधमत्व ब्रह्मणश्चाधिकादधिकत्व कण्ठोक्त्यैव अङ्गीकारप्रसिद्धिं द्योतयति। तदुक्त मायिभाष्यकारेण 'कथमेकत्वमनयोर्घटते विपरीतयो' इति खद्योतभान्वोरिव राजभृत्ययो कूपाम्बुराश्यो परमाणुमेर्वोरि'ति च ॥ ६११ ॥

**सत्सु स्वदारेषु खलः परदारानपेक्षते।**
**लोकमातृपतित्वे किं नाशा तेषां तमोजुषाम्॥ ६१२ ॥**

तमोजुषामिति। तदुक्त भाग.ए.तात्पर्ये 'तत्पराणा पातकाना फलमन्धन्तम स्मृतम्। अधोऽधो दु खमतुल विष्णुदाराभिमर्शिनामि'ति ॥ ६१२ ॥

**देवे गुरौ च यस्याहंभावो देवद्विडेवसः ।**
**रमोमाकान्ततोत्कण्ठा दशकण्ठस्य केवलम् ॥ ६१३ ॥**

**देवद्विडेवसः** इति। जीवाभेदस्य नवद्वेषेषु परिगणितत्वादिति भाव। श्रीलक्ष्मीपतित्व विष्णो स्वरूपलक्षणम्। तस्य आत्मन्यनुसन्धान तदैक्य-चिन्तनमेव। एव उमाकान्तेत्यत्रापि ॥ ६१३ ॥

**अनित्यदेहगेहादौ नित्यताविभ्रमो नृणाम्।**
**दुःखिनः स्वस्य निर्दुःखब्रह्मभावभ्रमोपमः ॥ ६१४ ॥**

ननु देह अनित्य 'नाह निर्दु ख' इति विशेषदर्शनसद्भावेऽपि कथ भ्रमस्यानुवृत्तिरिति चेन्न। सोपाधिकोऽय भ्रम। उपाधिश्च ईश्वरस्य इच्छाविशेषाभाव। तदुक्त 'मामेव ये प्रपद्यन्ते मायामेता तरन्ति ते' इति। 'येषा स एव भगवान् दययेदनन्त सर्वात्मनाऽऽश्रितपदो यदि निर्व्यलीकम्। ते वै विदन्त्यतितरन्ति च देवमायामि'ति च। तदाह अनित्येति ॥ ६१४ ॥

**बिभेति कुमतिस्सद्यश्शास्तुर्न समयान्तरे।**
**राजाऽहमिति न ब्रूते ब्रूते देवोऽहमित्यहो ॥ ६१५ ॥**

राजेति। राजा हि सद्य शासक। तदुक्त भगवत्पादै 'घातयन्ति हि राजानो राजाऽहमिति ब्रुवन्तमि'ति। देवस्तु अनादियोग्यताकालकर्मादिकमखिलमपेक्ष्यैव तदुक्त 'फलप्रदो वासुदेवोऽखिलस्ये'ति ॥ ६१५ ॥

**दुष्टोऽहं कुरुते तुष्टः क्लिष्टः क्लेशहरं भजेत्।**
**शिवेहं भावधीर्भोगे रोगे मृत्युञ्जयार्चकः ॥ ६१६ ॥**

**शिव इति।** तथा हि मायिभाष्यकारोक्ति 'हरिरहमस्मि हरोऽह विधिरहमेवास्मि कारण तेषामि'ति। तस्यैव भगन्दररोगपीडितत्वदशाया मृत्युञ्जयार्चकत्व प्रसिद्धम् ॥ ६१६ ॥

**वाचान्यज्जल्पति स्वल्पः कर्मणान्यत्करोति च।**
**योऽच्युतोऽहमिति ब्रूते स्नातुं गङ्गां स गच्छति ॥ ६१७ ॥**

**अच्युतोऽहमिति।** भागत्यागलक्षणयेति भाव। विष्णु निरवयव पादरहित। उदकादिक विश्व मिथ्यैव इति साधयत पुनर्विष्णुपादोदके स्नान नाटयत कथ न वञ्चकाग्रणीत्वमिति भाव ॥ ६१७ ॥

**काणस्य चक्षुरेकत्र साम्येऽप्यन्यत्र नापतेत्।**
**यज्वप्रस्तरतोक्त्यध्वा दृष्टो नात्मैक्यवाक्यपथः ॥ ६१८ ॥**

**काणस्येति।** व्यतिरेकनिदर्शनमिदम्। काणस्य एकस्यापि वा चक्षुष साम्यमस्ति। मायिनस्तु एकस्मिन्नेव मीमासामार्गेऽपि दृष्टिवैषम्यमेवेत्याह **यजमानेति।** विरुद्धधर्माधिकरणत्वसाम्येऽपि एकत्र सादृश्यैक्य व्याचक्षाणोऽपरत्र तत्त्वमसीत्यादौ तदेवापलपति। अतस्तामसबुद्धिरयमिति हृदयम्। तदुक्त 'सर्वार्थान्विपरीताश्च बुद्धि· सा पार्थ तामसी' इति ॥ ६१८ ॥

**सतीरतिक्रम्य कामी पतिः स्यादसतीरतिः।**
**यथैक्यश्रुतिमादत्ते भेदाद्यर्थश्रुतीस्त्यजन् ॥ ६१९ ॥**

**सतीः** निरवकाशभेदश्रुती। **अतिक्रम्य** अतत्त्वावेदकत्वोक्त्या अपलप्य। **असतीः** आपातत ऐक्यपरतया प्रतीयमाना। **आदत्ते** स्वानुकूलबुद्ध्या स्वीकरोति। वस्तुतस्तु ता अपि भेदपरत्वेन तत्प्रतिकूला एव। कामीत्यनेनेद ध्वनयति। यथा भीम मुखत स्त्रीवेषदर्शनिन काममोहित विनिहत्य सत्या द्रौपद्या मानमरक्षत् तथा श्रीमदाचार्य जीवैक्यकामिनो मायिनो निराकृत्य सर्वासा श्रुतीना तत्त्वावेदकता समर्थ्य मानरक्षणमकरोदिति ॥ ६१९ ॥

**शब्दसाम्येऽपि नार्थैक्यं यत्र चित्रचरित्रता ।.**
**वृत्त्यंशवद्धि जीवोंशो मत्स्याद्यंशास्तु मूलवत् ॥ ६२० ॥**

अश इति शब्दव्यवहारसाम्येऽपि स्वभाववैचित्र्यानुसारेण क्वचिदशाना-मत्यन्ताभेद कुत्रचिद्भेदाभेदौ क्वचिच्च अत्यन्ताभेद इति प्रमेय समर्थयितु तदुपयुक्त सामान्यन्याय तावद्व्युत्पादयति **शब्देति** ॥ हरिशब्दसाम्येऽपि विष्णो भेकेन यथा न ऐक्य तथेति भाव । उक्तन्याय प्रकृतेऽतिदिशति **वृत्तीति** । अनेन जीव, ईशेन स्वरूपैक्यवान् तदश इति व्यवहारविषयत्वात् मत्स्यादिवत्' इति पराभिमतमनुमान दूषित भवति । अयमाशय । राज्ञो वृत्त्यशो भृत्येऽस्तीति व्यवहारस्तावदस्ति । न तावता राजभृत्ययोरैक्यप्रत्याशा । भृत्याशस्य राजाशभिन्नत्वतदधीनत्वमात्रेण अशव्यवहारोपपत्ते । तथा चानुमानस्य भृत्यवृत्त्यशे व्यभिचार इति ॥ तथा च हेतावशपदेन स्वरूपाशविवक्षायामसिद्धि । भिन्नाशविवक्षाया दृष्टान्तस्य साधनविकलता ॥ ६२० ॥

**स्वरूपांशोऽस्ति भिन्नांशोऽप्यस्ति शब्दविशेषणात् ।**
**एतेऽखिल स्वांशकला जीवाः सर्वे कलाः किल ॥ ६२१ ॥**

स्वरूपाशो भिन्नाश इति विभागे भागवत प्रमाणयति **एते इति** । तत्र 'सप्रजापतय' इति ब्रह्मादीना कलात्वरूपभिन्नाशत्वमभिधाय 'एते स्वाशकला पुस कृष्णस्तु भगवान्स्वयमि'ति मत्स्यादीनामेव कृष्णाख्यमूलरूपस्य स्वरूपाश-त्वोक्ते ॥ ६२१ ॥

**अल्पेऽपि महतस्स्वांशो नाल्पस्सर्वत्र सद्गुणैः ।**
**लेशोऽपि यद्धृषीकेशकेशो लोकेशशासनः ॥ ६२२ ॥**

ईशो रामानुजाद्यभिमत स्वगतभेद प्रत्याह **अल्प इति** । अवयवोऽपीत्यर्थ । **सर्वत्र** स्वगतावयवादिषु । नाल्प स्यात् न अपूर्ण स्यात् । 'पूर्णमद पूर्णमिद' 'नेह नानास्ति किंचन' इत्यादि श्रुते । **लेशोऽपि** अवयवोऽपि । **केशः** कृष्णकेशो

यादवकृष्ण । 'उद्धवर्हात्मन केशामि'त्याद्युक्ते । **लोकेशशासनः** मूलरूपवदेव पूर्णशक्ति ॥ ६२२ ॥

**भिन्नांशे तु तदीयत्वं भिन्नाभिन्नेऽर्धसाम्यता ।**
**अभिन्ने सर्वसाम्यं स्याद्यथा मत्स्यादिषु प्रभोः ॥ ६२३ ॥**

**जीवास्तु ब्रह्मभिन्नांशास्सार्वज्ञादेरभावतः ।**
**मत्स्यादयस्स्वरूपांशास्सार्वज्ञादेः प्रभावतः ॥ ६२४ ॥**

**तदीयत्वं** तदधीनत्वे सति तत्सदृशत्व सूर्यकादिवत् । तथा हि सूत्रे 'अत एव चोपमा सूर्यकादिवत्' इति । 'पादोऽस्य सर्वा भूतानि' इत्यत्रापि पादशब्दो भिन्नाशपर एव । परमात्मनि प्रपञ्चे च सुविरुद्धधर्माणा प्रमितत्वात् । तथोक्त श्रीभगवत्पादै भाग इत्येकदेशपरिमित चतुर्भागबल इतिवद् भिन्न चेति । अर्धसाम्यता अनुपद विव्रियते भिन्नाभिन्ना इत्यादिना । **सर्वसाम्य** सार्वज्ञादिगुणैर्निर्दोषत्वेन च । तदुक्त 'निर्दोष हि सम ब्रह्म' इति ॥ ६२३ ॥ ६२४ ॥

**भिन्नाऽभिन्नाः पटाद्यंशास्ते जडेष्वेव नाजडे ।**
**एकसत्त्वेऽन्यनाशस्य तद्धेतोस्सदसत्त्वतः ॥ ६२५ ॥**

**तन्तुः पटेनार्धसमो भेदाभेदस्ततस्तयोः ।**
**अतस्त्रैविध्यमंशेषु दुर्वारमिति मे मतिः ॥ ६२६ ॥**

व्यतिषङ्गविशेषविशिष्टाना तन्तूना पटस्य चाभेदस्तावत् प्रत्यक्षेणैव सिद्ध 'तन्तुभ्योऽन्य पट साक्षात् कस्य दृष्टिपथ गत' इत्युक्ते । भेदे हेतुमाह **एकसत्त्वेऽप्यनाशस्येति** । एकतन्तुनाशेऽपि पटस्याशिनोऽनाशात् । **सदसत्वतः** जडेषु सत्त्वात्, अजडे असत्त्वात् इति क्रमेण सबन्ध ॥ ६२५ ॥ ६२६ ॥

**न चेद्वैचित्र्यमेतेषु निर्निमित्तमिदं भवेत् ।**
**मत्तोऽप्यकारणं कार्यं न वदेत्किमु शास्त्रकृत् ॥ ६२७ ॥**

**न चेत्** भेद अभेद भेदाभेदौ एतत् त्रितय न चेत् । **इदं** तदीयत्व, सर्वसाम्य, अर्धसाम्यता च । **मत्तोऽपीति** तेनापि तृप्त्यर्थ भोजनस्य करणादिति भाव ॥ ॥६२७ ॥

**अदः पूर्णमिदं पूर्णं पूर्णात्पूर्णमुदच्यते ।**
**(विष्णू) इत्युद्रिक्तांशता रामस्योक्ता सा का विचार्यताम् ॥ ६२८ ॥**

**उद्रिक्तत्वं स्वरूपत्वमनुद्रेकस्ततोऽपरः ।**
**अतोंशयोर्द्वितैवोक्ता स्पष्टं नामसहस्रके ॥ ६२९ ॥**

विष्णो उद्रिक्ताशता अभिन्नाशता रामस्य वासुदेवनामसाहस्रके उक्ता । एव 'पूर्णमद पूर्णमिद' इति श्रुत्या च उक्ता ॥ ६२८ ॥ ६२९ ॥

**बलज्ञानसुखाद्यैश्च मत्स्याद्यंशा हरेस्समाः ।**
**जीवांशास्त्वतथाभूताः कथं नांशे द्विरूपता ॥ ६३० ॥**

**अतथाभूताः** तदुक्त तत्वोद्योते 'नित्याताादृशाचिच्चेत्ययन्ते'ति ॥ ६३० ॥ ॥६३१ ॥

**बलज्ञानसुखोद्रेकादुद्रिक्तांशास्तु ते हरेः ।**
**स्वल्पज्ञानबलो जीवस्त्वनुद्रिक्तांश उच्यते ॥ ६३१ ॥**

**अतोऽतिभिन्न एवायं जीवाख्यांशो भवेद्ध्रुवम् ।**
**विरुद्धधर्माक्रान्तत्वे भेदं को न वदेद्बुधः ॥ ६३२ ॥**

**अतिभिन्न एवेति** तदुक्त म भा.ता निर्णये 'अर्थाच्छ्रुतेश्च गुणतो निजरूपतश्च नित्यान्य एव कथमस्मि स इत्यपि स्यादि'ति ॥ ६३२ ॥

**ममांशस्यैव जीवस्येत्युक्त्वा भागवते हरिः ।**
**सखायौ सयुजौ चेति स्पष्टमाह पुनर्भिदाम् ।**
**तस्माद्भिन्नांशवादोऽयं कस्य मोदाय नेष्यते ॥ ६३३ ॥**

शुद्धिसौरभे सविस्तर व्याख्यात 'एकस्यैव ममाशस्य जीवस्यैव महामते । बन्धोऽस्या विद्ययाऽनादिर्विद्यया च तथेतर ' इति भागवतपद्य उक्तार्थे सवादयति **ममेति** ॥ ६३३ ॥

**न चेदंशं कथं नानाव्यपदेशात्स सूत्रकृत् ।**
**असूत्रयदिमं जीवं तत्संबन्धात्तदंशता ।**
**(सर्वस्य जीवजातस्य) सर्वेजीवा यतस्तस्य**
**यत्पुत्रोऽप्यंश उच्यते ॥ ६३४ ॥**

**मत्स्याद्यास्तु स्वरूपांशा बलज्ञानसुखादिभिः ।**
**यन्मूलरूपसदृशास्सर्वे सर्वत्र सर्वदा ॥ ६३५ ॥**

**यद्यन्येऽपि स्वरूपांशाः किं न स्युर्मत्स्यकूर्मवत् ।**
**बलज्ञानसुखाद्यैश्च सदा विष्णूपमास्तदा ॥ ६३६ ॥**

उक्तमर्थ विपक्षे सूत्रविरोधोक्त्या सस्थापयति **न चेदिति**। जीव अशः विभिन्नाश नानाव्यपदेशात् यथोक्त भाष्ये 'पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरि । बहुधा गीयते वेदैर्जीवोशस्तस्य' इति । स्वाशश्चाथो विभिन्नाश इति द्वेधाश इष्यते । अशिनो यत्तु सामर्थ्य य स्वरूप यथा स्थिति । तदेव नाणुमात्रोऽपि भेदः स्वाशाशिनो क्वचित् । विभिन्नाशोऽल्पशक्ति स्यात् किञ्चित्सादृश्यमात्रयुक् । इति च ॥ विभिन्नाशस्यापि यो यत्र क्वचिदभेदव्यपदेश स सूत्रकृतैव तद्गुणसारत्वादिति सादृश्याद्यभेदसश्रयादिति व्याख्यात ॥ ६३४ ॥ ६३५ ॥ ॥६३६ ॥

**निर्विशेषं हि ते ब्रह्म कुतोंशेषु विचित्रता ॥ ६३७ ॥**

स्वरूपाशाना मिथो वैचित्र्याङ्गीकारे परस्यापसिद्धान्तपराहतिश्चेत्याह **निर्विशेषेति** ॥ ६३७ ॥

**अंशवैचित्र्यतस्सिद्धा भिदैकत्रा भिदापरे ।**
**न हीन्द्रस्य स्वरूपांशा वालिपार्थादयो समाः ॥ ६३८ ॥**

**अतो विष्णुसमज्ञानबलादीनामभावतः ।**
**न जीवस्तत्स्वरूपांशो यथा जडमिदं जगत् ॥ ६३९ ॥**

जीवा न स्वरूपाशा बलादिना असमत्वादित्यत्र व्यतिरेकदृष्टान्तमाह **इन्द्रस्येति** ॥ ६३८ ॥ ६३९ ॥

**अत्यन्ताभेदवादाख्यः शास्त्रस्यांशो गतस्तव॥ ६४० ॥**

**शास्त्रस्य अंशः** जीवो ब्रह्मैव नापर इत्येवरूप । **गतः** दूषित ॥ ६४० ॥

**यदि मोक्षे भिदा नास्ति गता तेंऽशांशिता तयोः ।**
**यदि मोक्षे भिदाप्यस्ति भेदो भूत्परमार्थसन्॥ ६४१ ॥**

तदधीनत्वरूपाशत्वस्य जीवेषु मोक्षेऽप्यनुवर्तनात् भेदस्य पारमार्थिकत्वमपि सिद्धमित्याह **यदीति** । तदुक्तमनुव्याख्याने 'तदधीनत्त्वमेतेषा नैव हीयते । मुक्तावपि स एवैक स्वतन्त्र पूर्णसद्गुण ' इति ॥ ६४१ ॥

**भेदाभेदाविनाभूता सर्वत्रांशांशिता तव ।**
**निर्विशेषब्रह्मवादे यत्सा तत्सहचारिणी ॥ ६४२ ॥**

**वियुक्ततन्तुवद्देहैर्वियुक्तानां पुनर्भवे ।**
**अंशांशित्वे योग्यता ते तद्व्यक्तिस्त्वपुनर्भवे ॥ ६४३ ॥**

**अतस्त्वद्गेहकलहादभूदत्यन्तसङ्कटम् ।**
**जाया वा कुपिता गच्छेत्त्वं वा प्रव्रजितो भवेः ॥ ६४४ ॥**

तदेव जीवेश्वरयो स्वाभाविकाभेद औपाधिकभेदमङ्गीकुर्वाणस्य भास्करस्य अशाशिताऽभ्युपगमो व्याहत इत्याह **भेदाभेदेति।** औपाधिकभेदस्वाभाविकाभेदेत्यर्थ । तन्तूना प्राग्वियुक्ताना पटभावापत्तावपि नाशाशिता अपगच्छति किन्तु अभिव्यज्यत एव। एव उपाध्यपगमेऽपि मुक्तावनुवर्तमानाशाशिता भेदेन वा विशेषेण वा निर्वाह्या। निर्विशेषत्ववादिनो विशेषो नेष्ट। अत मुक्तौ अत्यन्ताभेदाभ्युपगमे तव जायेव दयिता अशाशिता व्याकुप्यति। ता चेत्सन्धित्ससि, त्व अत्यन्ताभेदाख्यात् त्वद्गृहायितसिद्धान्तात्प्रव्रजितो भवे । इत्येव उभयथाऽपि अत्यन्तसङ्कटमिति भाव ॥ ६४२ ॥ ६४३ ॥ ६४४ ॥

**तस्मादंशांशिभावेन जीवाभेदप्रसाधनम्।**
**अप्रसाधनमेवेत्थं कुर्याद्धेतुरयं मम ॥ ६४५ ॥**

जीवोऽभिन्न अशत्वादिति त्वदुक्त अनुमानम्। जीवो भिन्न तदधीनत्वरूपतदशत्वात् इति मदनुमान त्वदनुमानस्य विरोधव्युत्पादनेन **अप्रसाधनं कुर्यात्** अलकारविरुद्धदूषणग्रस्त बाधित कुर्यादित्यर्थ ॥ ६४५ ॥

**बहुजीवमते जीवा देहे देहे पृथक्पृथक्।**
**योनिभेदात्कर्मभेदाद्गतिभेदाच्च संसृतौ ॥ ६४६ ॥**

**आमोक्षं तद्विभागस्य न व्यत्यासोऽस्ति ते मते।**
**अतो मिथस्तदैक्यस्य नाधुनावसरस्तव ॥ ६४७ ॥**

बहुजीववादिन, 'विमतानि शरीराणि देवदत्तस्यैव भोगायतनानि शरीरत्वात् सप्रतिपन्नवत्' इति युक्तिमुपन्यस्य जीवाना परस्पर अभेद सिषाधयिषन्ति। न च तच्छक्यम्। तथा हि। ससारदशाया कि अभेद साध्यते उत मोक्षे। नाद्य इत्याह **देह इति।** तदुक्त वादावल्या 'प्रत्यक्षबाधित, परस्परसुखदु खाद्यनुसन्धानप्रसङ्गपराहत, विमतानि कलत्राणि देवदत्तस्यैव भोगायतनानि कलत्रत्वात् सप्रतिपन्नवत् इत्याभाससमानयोगक्षेमतयाऽपहास्य चे'ति ॥ ६४६ ॥ ६४७ ॥

**मुक्तौ तु ब्रह्मणैक्यं स्यान्मिथस्त्वैक्यं कदा वद ।**
**अंशेनैक्येऽपि तन्तूनामंशानामेकताऽस्ति किम् ॥ ६४८ ॥**

नापि मुक्तावित्याह **मुक्ताविति** । तत्रापि अनपगतजीवभावाना, तन्तूना पटेनेव, अंशिनैक्यमभिमत उत जीवभावापगमेन । नाद्य दृष्टान्ते तथाभावादर्शनादित्याह **तन्तूनामिति** ॥ ६४८ ॥

**ब्रह्मैक्ये जीवभावस्यैवाभावात्किं मिथोऽभिदा ॥ ६४९ ॥**

द्वितीये आह **जीवेति** ॥ ६४९ ॥

**तत्र तत्र हि ते तेंऽशास्वस्वाज्ञानक्षये सति ।**
**ब्रह्मत्वं यान्ति सर्वेऽपि न त्वंशान्तरभूमिषु ॥ ६५० ॥**

**अतोंऽशानां समस्तानां मिथस्त्वैक्यं कदा वद ।**
**विचार्यमाणे यन्नासीन्न भवे नापुनर्भवे ॥ ६५१ ॥**

ननु मिथो मुक्तौ जीवैक्य नाम व्यावहारिकस्य अज्ञानकार्यस्य जीवभावस्य निराकरणेन ब्रह्मत्वप्राप्तिरेवेति चेत् कोऽय जीवभावो यो मुक्तौ निराक्रियते । स किं प्रत्यक्षाद्याकलितोऽन्यो वा । आद्ये कथमङ्गीकृतस्य निराकरणम् । अन्यश्चेन्निषिध्यता न नो हानि । अस्तु वा कथचित्कतिपयजीवाना मुक्ताना त्वदुक्तरीत्या परस्परैक्यम् । तथाऽपि ससारिणा बहूना सर्वदा विद्यमानत्वेन न समस्ताना जीवाना त्वदभिमतपरस्परैक्यसिद्धिप्रत्याशेत्याह **समस्तानामिति** ॥ ६५० ॥ ६५१ ॥

**अन्योन्यं सुखदुःखादेर्भोक्तृत्वं योगिनोंशवत् ।**
**हस्तपादाद्यंशवच्च वाक्यं नोचेद्वृथैव तत् ॥ ६५२ ॥**

किं च स्वरूपैक्ये अन्योन्यसुखदु खाद्यनुसन्धानमवर्जनीयम् । उपाधिकृतभेदाभावस्याप्रयोजकत्वात् । योगिन अशेषु हस्तपादाद्यवच्छिन्नाशेषु च तथाभावदर्शनात् । न च अनुसन्धान जीवेष्वस्ति । तदाभावे च तव स्वरूपैक्यकथाप्रलापमात्रमित्याह **अन्योन्यमिति** ॥ ६५२ ॥

**यद्यन्योन्यमभिन्नांशौ जीवास्सर्वेऽपि सर्वदा।**
**तर्हि स्याज्जातिभेदस्यैवाभावात्सर्वसङ्करः ॥ ६५३ ॥**

सर्वसाङ्कर्यं चैव स्यादित्याह **यदीति** ॥ ६५३ ॥

**स्नुषा च भार्या भार्या च माता गौश्च शुनीबुधः।**
**मत्त एवेति तच्छास्त्रं स्यादुन्मत्तस्य जल्पितम्॥ ६५४ ॥**

उपपादयति त्रिभि **स्नुषेत्यादिना** ॥ ६५४ ॥ ६५५ ॥ ६५६ ॥

**गम्यागम्यविभागश्च स्वरूपैक्ये कथं वद ॥ ६५५ ॥**

**शास्याशास्यविभागश्च वध्यघातकता तथा।**
**स्पृश्यास्पृश्यविभागादिसर्वैक्येनैव शोभते ॥ ६५६ ॥**

**देहान्तःकरणादीनां भेदाभेदो यदीष्यते।**
**सुप्तौ सर्वलयात्तर्हि प्रबुद्धोऽन्यो भवेत्तव ॥ ६५७ ॥**

**अतः पूर्वानुसन्धानं तस्य न स्याद्धि किञ्चन।**
**स्याच्चेत्सर्वत्र सर्वस्याप्यनुसन्धानमापतेत् ॥ ६५८ ॥**

देहाद्युपाधिभेदाश्रयणेऽपि न साङ्कर्यनिस्तार । सुप्तौ तल्लयेन सुप्तोत्थिताना पूर्वतनभर्तृभार्याभावापगमात्। अविद्याया लयाभावेऽपि तस्या अनुसन्धानाप्रयोजकत्वेन प्रबुद्धाना पूर्वतनानुसन्धान दुर्घटमेव। अत अनुसन्धानघटनाय स्वरूपैक्यमेव तत्प्रयोजकमुररीकरणीयम्। एव च आगत स एव दुरात्मा सर्वसाङ्कर्यापत्तिदोष इत्याह **स्यादिति** ॥ ६५७ ॥ ६५८ ॥

**पूर्वजन्मनि चण्डालोऽप्यन्यस्मिन्विप्रतामियात्।**
**अतो जातिविभेदोऽपि स्वरूपैक्येन भेदकृत्॥ ६५९ ॥**

**देहमात्रविभेदोऽयमकिञ्चित्कर एव हि।**
**देहभेदस्य वैफल्ये कर्मभेदेन किं फलम्।**
**देहो हि कर्मणां मूलं छिन्नमूलतरुर्ह्ययम् ॥ ६६० ॥**

**देहेति**। हीत्यनेन सौभर्यादियोगिषु तथाभावस्य अनुभवसिद्धिमाह। **देहभेदस्य** = देहरूपोपाधिकृतजीवभेदस्य। **वैफल्ये** = अन्योन्यसुखाद्यनुसाङ्कर्यपरिहारासामर्थ्ये। उपाधेर्भेदकारकत्वस्यैवाभावेन औपाधिकभेदस्याप्रामाणिकत्वादेव सामर्थ्यविधुरत्वादेवेति भाव । छिन्नेत्यापातत अप्रामाणिकेत्यर्थ ॥ ६६० ॥

**शिष्यपापं गुरोश्च स्यात्तत्पुण्यं च गुरोर्भवेत्।**
**अपि संबन्धमात्रेण स्वरूपैक्ये कथं न तत् ॥ ६६१ ॥**

**शिष्येति** इद पुनरत्र वैषम्यम्। न शिष्यपुण्यपापे एव गुरो । किन्तु तद्भिन्ने एव यथाशास्त्रम्। तथा हि सूत्र ३ॐ स्वामिन फलश्रुतेरित्यात्रेय इति स्वरूपैक्ये तु ते एव इति ॥ ६६१ ॥

**स्वरूपैक्यं हि बलवद्बाह्यभेदो हि दुर्बलः।**
**ज्वलज्ज्वलनमध्यस्थतृणतूलविभेदवत् ॥ ६६२ ॥**

**दुर्बलः** मिथ्यात्वात् बलशून्य । विरोधे अकिञ्चित्करत्वमात्रे दृष्टान्त ॥ ॥६६२ ॥

**न चेदधिष्ठानदृशा जीवो ज्ञानी कथं वद ॥ ६६३ ॥**

वृत्तिप्रतिफलितज्ञातृचैतन्येन घटाधिष्ठानचैतन्यस्यैकीभावे हि ज्ञातो मया घट इति ज्ञातृचैतन्यस्यानुसन्धान भवति इति हि परप्रक्रिया। यथाऽऽह 'एकाऽप्यर्थमनोविशेषकवशाद्द्वैत प्रपन्नाहरत्यज्ञान प्रकटीकरोति विषयान् ज्ञात मयेद त्विति' इति। तेन ज्ञायते अनुसन्धाने ऐक्यमेव प्रयोजकमित्येषा व्यवस्था परप्रक्रिययैव सिद्धेत्याह **न चेदिति** ॥ ६६३ ॥

**तस्मात्पूर्वोक्तमार्गेण जीवचैतन्यमेव तत्।**
**भिन्नभिन्नमनन्तं च भोगभेदाय चेष्यते ॥ ६६४ ॥**

फलितमाह **तस्मादिति** ॥ ६६४ ॥

**भोक्तृजीवविभेदेन भोगभेदो न चान्यथा।**
**न चेद् ग्रहग्रस्तदेहभवो भोगः कथं द्वयोः ॥ ६६५ ॥**

**न चान्यथेति।** सश्लिष्टोपाधिमत्त्वमात्रेणापीति भाव । **कथमिति।** व्यवस्थयैवेति शेष । अनावेशदशाया देहाभिमानिन । आवेशे पिशाचस्यैव इत्येवमिति भाव ॥ यथोक्त वादावल्या 'किमुपाधि सश्लेषमात्र प्रयोजक उत स्वरूपैक्ये सति। नाद्य मातृसुखादेर्गर्भस्थेनानुसन्धानप्रसङ्गात् न द्वितीय । स्वरूपैक्यमात्रस्य प्रयोजकत्वे सभवति विशेषणप्रक्षेपे प्रमाणाभावादि'ति ॥ ॥६६५ ॥

**यद्यप्यस्ति पिशाचस्य देहोऽन्यस्स तु निष्फलः।**
**तस्मिन्देहे तदक्षेण तच्चित्ते न हि तत्सुखम् ॥ ६६६ ॥**

**अन्यदेहेऽन्यकरणैरन्यचित्तस्थितं सुखम्।**
**पिशाचो ह्यनुसन्धत्ते साक्षिणा स्वेन नापरः ॥ ६६७ ॥**

**पिशाचापगमे तज्जं सुखं जीवोत्ति नेतरः।**
**तद्रष्टृसाक्षिणोर्भेदात्सिद्धभोगविचित्रता ॥ ६६८ ॥**

**अतस्सर्वशरीरेषु भिद्यन्ते भोगसाक्षिणः।**
**साक्षी चैतन्यमेवेति जीवभेदस्तनौ तनौ ॥ ६६९ ॥**

स्वदेहेन भोगाक्षम पिशाच । अत अन्यदेहस्थचक्षुरादिभि अन्यमनसि जात सुख स्वीयतयाऽनुसन्धत्ते। अत· अनुसन्धानभावाभावयो साक्षिस्वरूपभेद एव

प्रयोजक न त्वेव देहान्तरकरणाद्युपाधिभेद इति निष्कर्ष इत्याह **यदीति** ॥ ६६६ ॥ ॥६६७ ॥ ६६८ ॥ ६६९ ॥

**भिन्नभिन्नस्वभावानां वाक्यमात्रेण नाभिदा ।**
**किं सिंहो देवदत्तः स्यादग्निर्माणवकोऽपि वा ॥ ६७० ॥**

**हन्त्येको हन्यते चान्यो हसत्येकः प्ररोदिति ।**
**दरिद्राति च निद्राति धनी जागर्ति चापरः ॥ ६७१ ॥**

'दृष्टस्य वस्तुनो बलवद्दृष्टि विना नान्यद्बाधक इति भगवत्पादोक्तिमनुरुध्याह **भिन्नेति** ॥ ६७० ॥ ६७१ ॥

**सर्वं ब्रह्मेति वाक्याद्धि किं स्याद्घटपटाभिदा ॥ ६७२ ॥**

प्रमाणविरोधे सति यथा तदानुगुण्य स्यात् तथा वाक्यमेव सावकाशयितव्यम् । अन्यथा वाक्यस्य योग्यताविरहात्तदप्रामाण्यमेव स्यादित्याह **सर्वमिति**। प्रत्यक्षसिद्धमर्थ श्रुतिरपि न बाधितुमलमित्याह **घटेति**। उक्त हि मायिनाऽपि गीताभाष्ये 'अग्निरनुष्ण अग्नि न प्रकाशते इति ब्रुवत् श्रुतिशतमपि प्रामाण्य न अश्नुते' इति ॥ ६७२ ॥

**गुरुरेव गुरुर्लोके शिष्यश्शिष्यस्स किं गुरुः ।**
**यदि तस्याऽपि गुरुता साऽपि शिष्यान्तरं प्रति ॥ ६७३ ॥**

शब्दैक्यमात्र न अर्थैक्य प्रयोजयतीत्याह **गुरुरिति** ॥ ६७३ ॥

**महिषी महिषी किं स्यादजः किं स्यात्सपद्मजः ।**
**बलिर्बलिद्विडिन्द्रः किं स्वर्गतो निर्गतोऽपि वा ॥ ६७४ ॥**

**महिषी** राज्ञी **महिषी** पशुविशेष । **स्वर्गतः** स्वर्गलोके विद्यमान । **निर्गतः** स्वर्गलोकाद् । कालभेदेन तथाभावेऽपि न बलीन्द्रयोरैक्य सबोभवीति ॥ ६७४ ॥

**अस्ति सर्वोऽपि संपत्तौ विपत्तौ तु न कश्चन।**
**अन्योन्यैक्यकथा सख्येः दुःख्यन्यो**
**न स्वयं किल ॥ ६७५ ॥**

'तन्मित्रमापदि सुखे च समक्रिय यत्' इति नीतिबाह्योऽयमैक्यवादीत्याह **अस्तीति**। सर्वेषामात्मना स्वरूपैक्य वाचा ब्रुवाण ब्रह्मण आनन्दरूपता आशास्ते दरिद्राणा दु खादिक तु स्वस्मिन् न अभ्युपगच्छति। अत वञ्चकस्य मैत्रीव वाङ्मनसविसवादशीलस्य मायावादिन ऐक्यवार्ता छद्ममात्रमिति भाव ॥ ६७५ ॥

शिरस्यर्धे जरेत्यद्धा परद धनकृद्वदेत्।
देही देहान्तरे नात्ति देहव्यूही किलात्ति तत् ॥ ६७६ ॥

उपाधिविश्लेष स्वरूपैक्य चेत्येतत् देहव्यूहवत सौभर्यादियोगिनः चैत्रमैत्रादीना च मायिमते समम्। अथापि योगिन अनेकदेहगतसुखाद्यनुसन्धान भवति न तु चैत्रमैत्रादीनामित्येषा मायि प्रक्रिया, 'अर्धे शिरसि जरा' इति परदधनवाक्यमनुकरोतीत्याह **शिरसीति** ॥ ६७६ ॥

**खल एव खलो लोके नासुरा वैरिवैरिणः।**
**एको जीवस्स निद्राति तस्य स्वप्नः किलाखिलम्**
**॥ ६७७ ॥**

एकजीववादमथ दुदूषयिषु प्रस्तापयति **खल एवेति**। एकजीववाद इत्थम्। यथोक्त तत्त्वनिर्णयटीकायाम्। एक एव ब्रह्मप्रतिबिम्बो जीवः। अन्ये जीवा जडवत् स्वरूपेणैव कल्पिता.। यथा स्वप्ने यथा वा चित्रभित्तौ। तत्र परमार्थतो यो जीव तस्य तत्त्वज्ञानोदये तत्कल्पितोऽय सर्वो ब्रह्माभ्यन्तररूप प्रपञ्चो निवर्तते। प्रतीतिमात्रशरीरत्वात्। अन्यस्य प्रत्येतुरभावात्। ईश्वरभेदस्यापि तेनैव कल्पितत्वात् इति। अस्य खलस्य एकजीवस्य सदृश अन्य खलो नास्तीत्याह **खल एवेति**। उपपादयति **असुराः इति**। वैरिणामेव वैरिण.॥ न तु निर्निमित्तम्। अय तु ततोऽपि खल इत्याह **एक इति**। निर्निमित्त सर्वेषा जीवानां स्वाज्ञानपरिकल्पितत्वेन मिथ्यात्वमापाद्य अशेषपुरुषार्थविघातक। तथा च 'तेऽमी

मानुषराक्षसा परहित स्वार्थाय निघ्नन्ति ये । ये तु घ्नन्ति निरर्थक परहित ते केन जानीमहे' इति दुर्नीतिविषय इति भाव । तदुक्त भगवत्पादै "ता आसुरा स्वय नष्टा जगत. क्षयकारिण " इति ॥ ६७७ ॥

**अहर्निशेति च प्रायो न विदुर्मोहिदेहिनः ।**
**कालः किलायं सर्वोऽपि स्वप्रस्सुप्तस्य**
**कस्यचित् ॥ ६७८ ॥**

**मोहिदेहिनः** कामलम्पटा । **प्रायो न विदुः** यदाकदाचित् तेऽपि विदु इति भाव । अय तु एकजीवो नित्यनिद्रितो अहर्निशेति विवेकभ्रष्ट अतिलम्पट ॥ ॥६७८ ॥

**करस्थदण्डपिण्डाभ्यां शवबुद्धिं जहौ शिवा ।**
**चरन्तस्संसरन्तश्च शवा जीवाः किलाखिलाः ॥ ६७९ ॥**

कश्चित्पुरुष शिवा प्रलोभयितु एकस्मिन् करे पिण्ड अपरस्मिन् समीपागता ताडयितु दण्ड च गृहीत्वा निश्चेष्ट शववत् पतित । शिवा तु त दृष्ट्वा दण्डपिण्डाभ्या तस्य सजीवत्वमनुमाय पलायामास । तस्या पशुतोऽपि निकृष्टोऽयमेकजीव । अनादितोऽपि सर्वेषा शरीराणा हिताहितप्राप्तिपरिहारानुकूला चेष्टा पश्यन्नपि तेषा निरात्मकत्व मन्यमानस्य अस्य पशुबुद्धिरपहसनीयेत्याह **किलेति** ॥ ६७९ ॥

**हसति स्वैरिणी स्वैरमपरां स्वैरिणीमहो ।**
**किं न निर्जीवदेहात्मवादी चार्वाकहासकृत् ॥ ६८० ॥**

प्रत्यक्षैकप्रमाणवादित्वात् चार्वाक. देहातिरिक्त जीव न मन्यते इति सह्यम् । युक्त्यागमाना प्रामाण्यमङ्गीकुर्वाणोऽपि मायावादी तत्सिद्ध सर्वशरीरस्थ जीवस्वरूपमपलपतीति ततोऽपि नास्तिक ॥ सत्यप्येव चार्वाकमतनिराकरण नाटयति । अहो स्वैरिणीवत् अस्य वञ्चकप्रवृत्तिरित्याह **हसतीति** ॥ ६८० ॥

**एकाशाखण्डने लोका दोषमाघोषयन्त्यहो ।**
**शुकाद्याः किल सर्वेऽपि न मोक्ष्यन्ते मुमुक्षवः ॥ ६८१ ॥**

सर्वेषा ज्ञानिना जीवभावापलापिन· तेषा मोक्षाशाच्छेदनमप्यस्य महादोष इत्याह **एकेति** ॥ ६८१ ॥

**यजनाध्ययनादीनि मननश्रवणानि च ।**
**दानस्नानादिकं सर्वं दशा स्वाप्री किलाफला ॥ ६८२ ॥**

एव सर्वै क्रियमाणसाधनाना निष्फलत्वकथनेन विधिनिषेध-शास्त्रापलापपापमप्यस्यापततीत्याह **यजनेति** ॥ ६८२ ॥

**ब्रह्मापि निर्ममे सम्यक्तपसोद्बुद्धशुद्धदृक् ।**
**अस्राक्षीन्निद्रितस्त्र्यक्षसहस्राक्षादिकान्किल ॥ ६८३ ॥**

**ब्रह्मापीति ।** यथोक्त भागवते 'एव पुरा धारणयाऽत्मयोनि नष्टा स्मृति प्रत्यवरुह्य तुष्यन् । तथा ससर्जेदममोघदृष्टिर्यथाऽप्ययात्प्राग्व्यवसायबुद्धिरि'ति ॥ ॥६८३ ॥

**अनदिकालतो यस्य निद्रा स किल कल्पकः ।**
**अनिद्रा वेदवेदान्तकर्तारः किल कल्पिताः ॥ ६८४ ॥**

अज्ञानी कल्पक ज्ञानिनस्तु कल्पिता इति च प्रक्रिया तिरस्क्रियामेवार्हतीत्याह **अनादीति** ॥ ६८४ ॥

**हता यैरार्यमर्यादा वृथा तेषां कथाऽपि नः ।**
**अचेतनो गुरुर्वक्ति निद्रितः शृणुते किल ॥ ६८५ ॥**

किं चायमेकजीवो न गुरु । उपदेश्याभावात् । न शिष्य उपदेशकाभावात् । गुरोरचेतनत्वेन उपदेशकत्वायोगात् । निद्रितस्य शिष्यस्य श्रवणायोगाच्च ॥ ॥६८५ ॥

**स्वशिष्याज्ञानजगुरोर्विद्याऽपि तदविद्यया ।**
**स भेदज्ञो यमैक्यज्ञोऽनंक्षत्येष स मोक्ष्यते ॥ ६८६ ॥**

अपि च गुरु तज्ज्ञान च शिष्याज्ञानकल्पितम् । न चैवविधेन उपदेश सभवति । कि च गुरु ऐक्यरूपतत्त्वज्ञानवानिति वाच्यम् । शिष्यश्च तदज्ञानवान् उपदेशात् प्राक् भेदज्ञानी इति च । यदा उपदेशेन यदैव शिष्य प्रबुध्यते तदा गुरो स्वरूपनाश प्राप्नोति । न हि कोऽपि स्वरूपस्यैव नाशहेतौ उपदेशे प्रवर्तते इत्याह **अभेदेति । अयं गुरुः । स** शिष्य । **एष** गुरु ॥ ६८६ ॥

**योचीक्लृपज्जगत्सर्वं शास्त्रस्तुतिसमन्वितम् ।**
**स जीवः किल शिष्योऽभूत्कल्प्यः**
**कोऽपि गुरुः किल ॥ ६८७ ॥**

स्वय शास्त्रादिकल्पकस्य शिष्यत्वमेव अः।भवीत्याह **य इति** ॥ ६८७ ॥

**यद्यैक्यमा प्रमा वक्तुस्तर्हि स्व ोऽपि न भ्रमः ।**
**गौरवादप्रसिद्ध्यादेर्न स्वप्नस्य द्वि रूपता ॥ ६८८ ॥**

**वक्तुः** कल्पितस्य गुरो **ऐक्यमा** ऐक्यज्ञानम् । भ्रम प्रमा वा । नाद्य भेदसिद्धे । द्वितीय आह **यदीति ।** स्वाप्नमपि तज्ज्ञान प्रमा चेत् स्वाप्नोऽर्थ सर्वोऽपि भ्रम इति पक्षो गत । अथैतन्मात्रस्य प्रमात्व तर्हि द्विरूपता । गौरव अप्रसिद्धि अपसिद्धान्तश्च । इद च परमत एव । स्वमते स्वाप्नस्यापि ज्ञानस्य प्रमात्वमेवेति ज्ञातव्यम् ॥ ६८८ ॥

**स्वप्नो न चेन्न जीवैक्यं तत्रैव द्रष्टुरेकता ॥ ६८९ ॥**

अथ एतज्ज्ञानस्य प्रमात्वरक्षणार्थं दशाया जाग्रत्त्वमङ्गीक्रियते तर्हि बहुजीववाद एवापन्न । कुत इति तत्राह **तत्रैवेति** ॥ ६८९ ॥

**जाग्रद्दशैव स्वप्नस्य साम्याद्यदि च तादृशी ।**
**सर्वसाम्ये स एव स्यात्किञ्चित्साम्येन किञ्चन ॥ ६९० ॥**

अथ जाग्रद्दशाद्रष्टुरेकत्ववती स्वप्नसाम्यात् स्वप्नवत् इति साध्यते इति चेत् कि हेतौ सर्वसाम्य वा किञ्चित्साम्य वा विवक्षितम् । आद्ये आह **सर्वेति । स एव** स्वप्न एव । द्वितीय आह **न किञ्चनेति ।** सिध्यतीति शेष । न हि स्त्रीत्वसाम्येन मातुर्वन्ध्यात्व साधनार्हमिति भाव ॥ ६९० ॥

**दशात्वसाम्ये तेनैव स्वप्नोऽप्येतादृशो भवेत् ।**
**साध्येन साम्यं नासिद्धेर्व्याप्येन समताऽपि न ॥ ६९१ ॥**

यदि दशात्व हेतु तर्हि तेनैव हेतुना स्वप्नस्य जाग्रद्दृष्टान्तेन अनेकद्रष्टृमत्त्वमपि सुसाधमित्याह **एतादृशीति ।** द्रष्टुरेकत्वेन तद्व्याप्यधर्मेण वा स्वप्नदशासाम्यस्य हेतुत्वे प्रतिवाद्यसिद्धि इत्याह **असिद्धेरिति** ॥ ६९१ ॥

**बाह्याक्षोपरमश्चात्र न चेत्किं नानुमीयते ।**
**जाग्रत्त्वात्स न चेदेकजीवताप्यत एव न ॥ ६९२ ॥**

**यदि सोऽपि तदा श्रोत्राभावान्न श्रोतृतास्य हि ।**
**श्रोता न चेन्न प्रबोद्धा ततश्शास्त्रमनर्थकम् ॥ ६९३ ॥**

'जाग्रदवस्थाबाह्याक्षोपरमवती स्वप्नसाम्यादि'ति आभाससमान-योगक्षेमश्चेत्याह **बाह्येति ।** न च साऽप्यङ्गीकाराधिकारिणी । तथा सति शिष्यस्यैकजीवस्य श्रोत्राभावापत्त्या श्रोतृताऽनुपपत्ते । ततश्च 'यदा जीव प्रबुध्यते' इति श्रुत्युक्तप्रबोधस्याभावेन शास्त्रमनर्थक स्यादित्याह **यदीति** ॥ ६९२ ॥ ६९३ ॥

**किं च स्वप्नस्य सर्वस्य न द्रष्टैको गृहे गृहे ।**
**तद्वत्तद्द्रष्टृबाहुल्यस्यैवाप्तेः क्व च ते मतम् ॥ ६९४ ॥**

आभासान्तरमाह **किं चेति**। विमत स्वप्न, द्रष्टृबाहुल्यवान् गृहे गृहे भिन्नभिन्नपुरुषद्रष्टृकस्वप्नवत् इति ॥ ६९४ ॥

**न सन्तीमे यदि स्वप्ना निदर्शनमदर्शनम्।**
**प्राप्नोति तेऽनुमानस्य नादृष्टो दृष्टखण्डने ॥ ६९५ ॥**

**यद्येतेषामपि द्रष्टा स एवेति मतं तव।**
**न तन्मम मतं तेन स्वदर्शननिदर्शनम् ॥ ६९६ ॥**

अथ मत गृहे गृहे दृश्यमाना स्वप्ना एकजीवस्वाप्नस्वप्ना एव उपचरिता एव अनुपचरितस्तु **एकजीवस्यैवैति**। तन्न। तथा सति वियताऽस्वप्न एकजीववान् स्वप्नत्वात् सप्रतिपन्नवत् इति त्वदनुमानस्य आभासत्वापत्ते। तथा हि किं उपचरितस्वप्नत्व हेतु उत अनुपचरितम्। नाद्य असिद्धे। न द्वितीय दृष्टान्तस्य साध्यवैकल्यापत्ते। न च सामान्य हेतु तदभावादेव। न हि जलनभोनलिनयो नलिनत्वसामान्यमस्ति। एव प्रबुद्धबहुपुरुषसमकालीन स्वप्नत्वात् इत्यप्याभाससाम्य द्रष्टव्यम् ॥ ६९६ ॥

**सन्ध्ये सृष्टिरिति प्रोक्तेस्स्वाप्नव्याघ्रगजादयः।**
**सर्वे सत्याश्चेतनाश्च तत्स्वप्नोऽनल्पजीववान् ॥ ६९७ ॥**

**अतस्तत्रैकजीवत्वं प्रतिवादी न मन्यते।**
**तत्सपक्षो विपक्षोऽस्य साधनं चाप्यसाधनम्॥ ६९८ ॥**

श्रुतिबाधित तवानुमानमित्याह **सन्ध्य इति**। ईश्वरकर्तृकसर्जनकर्मत्वोक्तेस्तेषा सत्यत्वमेव। उक्त च मायिभाष्यकृतैव गौडपादकारिकाया 'सत एव घटादेरुत्पत्तिर्विनाशो वा दृष्ट नासत शशविषाणादेरि'ति ॥ ६९७ ॥

तथा च दृष्टान्त साध्यविकल इत्याह **अत एवेति**। विरुद्धश्च हेतुरित्याह विपक्ष- इति। **असाधनं** विपक्षमात्रवृत्तीत्यर्थ ॥ ६९८ ॥

**तस्यैवायं यदि स्वप्नः कस्य जागरणं वद।**
**तच्च तस्यैव चेदेते विरुद्धे कथमेकदा ॥ ६९९ ॥**

**तस्यैव** एकजीवस्यैव। **अयं** गृहे गृहे अनुभूयमान। **जागरणं** गृहे एकस्य स्वप्नकाले पार्श्वस्थाना बहूना इति शेष। न च तदपि एकजीवस्यैव। युगपत् स्वाप्नस्वप्नस्य स्वाप्नजागरणस्य चानुपपत्तेरित्याह **विरुद्धे इति** ॥ ६९९ ॥

**स्वाप्नजागरितावस्था स्वाप्नस्वप्नविरोधिनी।**
**अस्वाप्नौ तौ च नैकत्रेत्यविवादं हि वादिनाम् ॥ ७०० ॥**

न च विरोधोऽसिद्ध इत्याह **अस्वाप्नाविति**। विमते स्वाप्नजागरणे युगपद्विरुद्धे स्वाप्नजागरणत्वात् अस्वाप्नस्वाप्नजागरणवत् इति प्रयोगोऽभिप्रेत ॥ ७०० ॥

**यदि जाग्रदवस्थादि तस्य नान्यस्य कस्यचित्।**
**स्वयमेव स्वोपदेष्टेत्यायादायासभूस्तव ॥ ७०१ ॥**

**तस्य** एकजीवस्य। **न अन्यस्य** गुर्वभिमतस्य। दूषयति **स्वयमेवेति**। **आयासभूः** आत्माश्रय ॥ ७०१ ॥

**अतस्स्वप्नेन चेज्जीवो नैकजीवमतं तव।**
**स्वप्नेषु सन्ति चेज्जीवा नैकजीवमतं तव ॥ ७०२ ॥**

**स्वप्ने** गृहे गृहे दृश्यमाने। **जीवः** द्रष्टा **न चेत्** त्वद्रीत्या तस्यापि निर्जीवत्वाभ्युपगमे। यद्वा स्वप्नोत्थितस्य स्वप्नावस्थापरामर्शवत प्रमितस्य स्वप्नद्रष्टुर्जीवस्यानभ्युपगमे। **तव** त्वदभिमतस्य स्वप्नद्रष्टुरेकजीवस्यापि समानयोगक्षेमतया निर्जीवत्वेनाभावापत्ते **तव** त्वदभिमत एकजीवमत **गत** स्वरीत्यैव अपास्तम् ॥ ७०२ ॥

**यदि देहेषु जीवाः स्युर्नैकजीवमतं तव।**
**यदि देहेषु ते न स्युर्नैकजीवमतं तव ॥ ७०३ ॥**

**ते** जीवा । **न स्युरिति**। एकजीवाभिमतदेह पक्षीकृत्य तदितरसर्वजीव-देहदृष्टान्तेन देहत्वहेतुना निर्जीवत्वसाधनसौलभ्यादिति भाव ॥ ७०३ ॥

**देहेषु घटवैशेष्ये नैकजीवमतं तव।**
**देहेषु तदवैशेष्ये किं नाहं कुरुते घटः ॥ ७०४ ॥**

**वैशेष्ये** जीवसाहित्यलक्षणे। चेष्टावत्त्वलिङ्गेन सिद्धे इत्यर्थ । न च अप्रयोजकता। घटस्याप्यन्यथा अह करोमि इति सङ्कल्प तत्पूर्वकचेष्टादिक च स्यादिति बाधकसद्भावात्। तदुक्तमनुव्याख्याने 'परस्य सत्यता जानन्नपि य स्वात्मतस्कर । परो नास्तीति वदति किमित्युन्मत्तवद्वदेत्॥ पराभावेऽपि वाग् व्यर्था यदि नैवोच्यते तदा। कशावेत्रादिक तस्य तस्करस्योत्तर वदेदि'ति ॥ ७०४ ॥

**देहेन सह सर्वेषु देहेष्वेको न गच्छति।**
**देहं विसृज्य गच्छेच्चेन्मृतस्य स्यात्पुनर्भवः ॥ ७०५ ॥**

कि च अनादिकालत सुप्तस्य अशनाद्यभावान्मुत्युरेव स्यात्। दूरे प्रबोध । यदि अन्यदेहान्प्रविश्य भोगान् भुक्ते अतो न मरण इति ब्रूया तत्र पृच्छाम ॥ स्वदेह विहाय अन्यदेहान् प्रविशति उताविहायेति। द्वितीयस्तु असभावित इत्याह **देहेन सहेति**। आद्ये आह **मृतस्येति**। पूर्वदेहपरित्यागेनेति भाव । **पुनर्भवः** देहान्तरप्रवेशात्॥ ७०५ ॥

**देहं प्रविश्य भोगश्चेत्प्रागुक्तं दूषणं स्मर।**
**अप्रविश्यैव भुंक्ते चेदेकदेहेऽप्यसौ कुतः ॥ ७०६ ॥**

अथ देह सर्वथाऽप्रविश्यैव भोग तर्हि भोगे देहस्य अकिञ्चित्करत्वापत्त्या सर्वथा देह एव तस्य माऽस्तु इत्याह **एकेति**॥ ७०६ ॥

**यद्येकस्याखिला भोगाः कलहः किं निबन्धनः।**
**यद्यनेकेऽपि भोक्तारः कलहः किं निबन्धनः॥ ७०७ ॥**

**कलहः इति**। एकमेवार्थं कामयमानेषु विरुद्धमतिषु अनेकेषु एकत्रसंस्थितेषु कलहं भवति। यथोक्तं भागवते 'वासो बहूनां कलहं' इति। एकस्यैव सद्भावे कुतो विरुद्धमतिः कुतस्तरां तन्निमित्तकः कलहः इति भावः। **कलह इति**। त्वयैव तत्त्ववादिना अस्माकं पक्षस्यैवाभ्युगतत्वादिति भावः ॥ ७०७ ॥

**यद्यशुद्धं च शुद्धं च भुंक्ते सर्वत्र सर्वदा।**
**प्रायश्चित्तविधिस्तस्य व्यर्थः कुञ्जरशौचवत् ॥ ७०८ ॥**

कुञ्जरोऽपि स्नानानन्तरं धूलीप्रक्षेपेण देहं मलिनयति। अयं तु एकेन देहेन प्रायश्चित्तचरणसमय एव अन्यैर्देहैरशुद्धं आचरतीति ततोऽप्ययमविवेकीति हृदयम् ॥ ७०८ ॥

**अतो नात्रानुमामानमक्षं रुक्षं दिधक्षति।**
**सुखदुःखादिकाध्यक्षान्बहून्साक्षाद्यदीक्षते ॥ ७०९ ॥**

'न चैकजीवाज्ञानपरिकल्पितं समस्तमि'त्यत्र किंचिन्मानमि'ति तत्त्वनिर्णयोक्तिमनुरुध्योपसहरति **अत इति**। **अक्षं** साक्षिप्रत्यक्षम्। **रुक्षं** निरवकाशम्। बहून् विभिन्नभोगानुसन्धानवतो जीवान्। ईक्षते स्वात्मानं अन्यगतानुसन्धानरहितं तद्भिन्नत्वे न प्रत्यक्षीकुरुते इति भावो बोध्यः। अन्यजीवेक्षणस्यायोगिसाक्षिष्वनुपपत्तेः ॥ ७०९ ॥

**यद्येकवचनान्तोक्त्या जीवैक्यं न स्याद्भवेत्तदा।**
**अनादिमायया सुप्त इत्युक्त्या सुप्त एव सः॥ ७१० ॥**

'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इति श्रुतिरस्तु प्रमाणं इति चेन्न। अत्र जीवानामेकत्वप्रतिपादकपदाभावात्। जीव इति चैकवचनं नीतिपरो राजा इत्यत्रैव समुदायैकत्वपरम्। एक एवेत्यवधारणाभावात्। अविद्यमानपदाध्याहारेऽतिप्रसङ्गमाह **सुप्त इति**। एवकारेण स्वप्रदर्शनं व्यावर्तयति ॥ ७१० ॥

**धर्मं चरेति वचनाद्धर्मैक्यं किं न वर्ण्यते ।**
**अजामजोश्नुतेऽजोन्यो जहातीति वचः स्मर ॥ ७११ ॥**

जात्यैकवचनश्रौतप्रयोग निदर्शयति **धर्ममिति।** बद्धजीवात् मुक्तजीवस्य अन्यत्वबोधकश्रुतिमाह **अजामिति।** अजो ह्येको जुषमाणाऽनुशेते। जहात्येना भुक्तयोगामजोऽन्य इति पूर्वार्धेन बद्धमुक्त्वा उत्तरार्धेन बन्धमनुभूय मुक्तजीव ससारिणोऽन्यत्वेन अन्य इत्यभ्यासेनात्र स्पष्टमुक्ते। जीवस्यैकमात्रत्वे नेय बद्धमुक्तव्यवस्था युज्यते इति भाव ॥ ७११ ॥

**अन्तर्बहिस्त्रिलोकीं यः पश्यत्सर्वत्र चक्षुषा ।**
**तं सर्वसाक्षिणं सुप्तं कथमाह श्रुतिर्बलात् ॥ ७१२ ॥**

कि चात्र सुप्त इत्यस्य आवृत इत्येवार्थ । ननु निद्रावश इति। मायाशब्दस्य 'महामायेद्यविद्येति नियतिर्मोहिनीति च। प्रकृतिर्वासनेत्येव तवेच्छाऽनन्त कथ्यते' इति प्रमाणाद्विष्णोरिच्छैवार्थ। तथा चानादित ईश्वरेच्छारूपावरणेन आवृत इत्येवार्थ। न तु निद्रावश इति अन्यथा तस्येन्द्रियोपरमेण त्रिलोकीदर्शनानुपपत्तेरित्याह **अन्तरिति** ॥ ७१२ ॥

**जीवैक्ये युगपद्भ्रान्तिप्रमिती कस्य का मृतिः ।**
**किं जन्मतस्य निद्रायां न स्याज्जगदिदं महत् ॥ ७१३ ॥**

ननु सुप्तशब्देनाज्ञानशबलजाग्रदवस्थैव लक्ष्यते अतो नोक्तदोष इत्यत आह **जीवैक्य इति।** ससरद्भिर्जीवैरैक्ये इत्यर्थ। ससरन्त खलु केचिद्भ्रान्ता केचित्तदैव प्रमातारो दृष्टा। तदैक्येऽस्यैक जीवस्य युगपद्भ्रान्तिप्रमे प्रसज्येयातम्। युगपज्जन्ममरणानि चापद्येरन्। अनादित जागरितत्वासभव। ससारिणोऽवस्थात्रयस्य नियतत्वात्। यदा कदाचिन्निद्राङ्गीकारे जगद्विलयप्रसङ्ग इत्याह **निद्रायामिति** ॥ ७१३ ॥

**स्वप्ने कथञ्चिद्घटते तत्स्वप्नोऽयं भवद्ध्रुवम्,।**
**निद्रा च निद्रैवास्य स्यात्किं न स्याद्दूषणं तदा ॥ ७१४ ॥**

**स्वप्ने इति** स्वाप्नाना, युगपद् भ्रान्तिप्रमाश्रयणाना जन्ममरणवता बहूना जीवाना दृश्यमानाना विद्यमानत्वेनेत्युपस्कर्तव्यम्। **घटते** पूर्वोक्तम्। **निद्रा** श्रुत्युक्तसुप्तपदाभिहिता। **निद्रैव** न तु त्वद्विवक्षितजागरितावस्था। तथा च प्रागुक्तदोषापरिहार इत्याह **किमिति** ॥ ७१४ ॥

**जगद्भङ्गभिया निद्रां सुभद्रां कुर्वतस्सदा।**
**स्वप्नो जगच्चेत्कस्य स्यान्निषेधविधिशासनम्॥ ७१५ ॥**

भियेत्यपहास । **सुभद्रां** अनादित विच्छेदहीनाम्। कस्येत्याक्षेप निद्रितस्य त्वदप्रसक्ते ॥ ७१५ ॥

**यदा नो परमश्चक्षुरादेर्न स्वप्नवज्जगत्।**
**यदा चोपरमः कस्य करणं कारणं वद ॥ ७१६ ॥**

बाह्येन्द्रियोपरमाभावे स्वप्नस्य तदानीतनजगतश्चानुपपत्ति स्मारयति **यदेति**। अनादित इन्द्रियाणामुपरमे तेषा कारणत्वाभावेन वैफल्यमेवेत्याह **कस्येति**॥ ॥७१६ ॥

**किं चैकजीवस्वप्नोऽयं साक्षात्स्वप्नो भवेद्यदि।**
**स्वाप्नवैकुण्ठयात्रा च स्याद्धि स्वप्नेन किं भवेत्॥ ७१७ ॥**

**प्रबोधे गुरुशास्त्रादेर्निवृत्त्येतः फलान्तरम्।**
**कदापि न भवेत्तस्य भवस्तस्माद्ध्रुवो भवेत्॥ ७१८ ॥**

सुप्तस्य कल्पकस्य जीवस्य गुरो स्वकल्पितत्व जानत तत्सकाशाच्छ्रवण एव स्वकल्पित शिष्य प्रति व्याख्यान वा न सभवतीत्युक्तम्। अभ्युपेत्याह **तदेति**। स्वाप्नसाधनेन स्वाप्नमेव फल न तु वास्तवमिति भाव । प्रबोधानन्तर तु न गुरु न

शिष्य· न वा शास्त्र इति वास्तवसाधनानुपपत्तिरेव । तथा च तस्य न मुक्ते प्रत्याशेति सिध्यतीत्याह **भव इति । ध्रुवः** शाश्वत ॥ ७१७ ॥ ७१८ ॥

**जाग्रद्दशैव सा स्वप्नकथा यद्युपचारतः ।**
**देहे देहे तदा व्याप्तब्रह्मचैतन्यमस्ति ते ॥ ७१९ ॥**

**देहोपादानमज्ञानं चास्ति देह्युचितक्रियाः ।**
**सन्ति निर्जीवता तेषां देहानां केन हेतुना ॥ ७२० ॥**

किं च तिष्ठन्तु जीवान्तराणि। व्याप्तस्य ब्रह्मचैतन्यस्य देहे देहेऽनुप्रवेशस्तावदस्ति । तत एव देहान्तराणा सजीवत्वमेवास्तु तेनैव सन्तु च देह्युचितक्रिया । निर्जीवत्व कुत । अन्यथा स्वदेहस्यापि निर्जीवत्वापत्ति । तत्रापि ब्रह्मचैतन्यसन्निधानमेव स जीवत्वहेतु । तदतिरिक्तजीवाभावादित्याह **जाग्रदिति** ॥ ॥७१९ ॥ ७२० ॥

**यद्यस्य माया सृष्टिस्सा द्रष्टा को स्यास्तदा वद ।**
**स्वयं चेन्नास्य माया भून्नापरोस्त्येकजीविनः॥ ७२१ ॥**

एकजीववाद खलु विवरणकाराभिमत । यद्यपि स मायासृष्टिं नाभिप्रैति । तथाऽपि सभावितत्वाच्चर्चार्थ स्वयमाशङ्क्य निषेधति **यदीति ।** मायिकपदार्थाना द्रष्टा कि मायावी एकजीव उत तदपर । नाद्य इत्याह **स्वयमिति ।** 'न च माया विना माया दृश्यते' इति वचनात् । न द्वितीय इत्याह **नापर इति** ॥ ७२१ ॥

**रूपमात्रं तदापि स्यात्कथं शास्त्रनिरूपणम् ।**
**मायाकृत्रिमविप्रेषु वाग्वृत्तिर्न हि मायया ॥ ७२२ ॥**

सर्वथा शास्त्रश्रवणादिकमसभावितमेवेत्याह **रूपेति** ॥ ७२२ ॥

**अथ स्वयं ब्रह्मणोंऽशः स्वांशाः सर्वेऽन्यदेहिनः।**
**इति चेदेकजीवत्वं किं स योगप्रभाववान्।**
**परिच्छिन्नैकदेहस्थः कथं देहान्तरं विशेत् ॥ ७२३ ॥**

देहान्तरेषु स्वाशा सन्ति तेषु प्रविश्य स्वय भुक्ते इति पक्षान्तरमुत्थाप्य दूषयति **अथेति**। देहव्यूहनिर्माणे सौभर्यादिवन्नास्य योगप्रभावोऽस्तीत्याह **किमिति**। अज्ञाननिद्रितस्य अस्य अपरोक्षज्ञानस्य तत्कार्यस्य योगप्रभावादिकस्य चासभवादेवेति भाव ॥ ७२३ ॥

**देहे देहे पृथग्भोगान्भुञ्जन्तो नादितो यदि।**
**सन्त्यनन्ताश्चेतनांशा बहुजीवत्वमेव तत् ॥ ७२४ ॥**

**जीवाद्वा ब्रह्मणो वास्तु(नुम्न)लुम्लिटोः**
**किं विशेषणम् ॥ ७२५ ॥**

एते जीवा एकजीवस्याशा सन्तु ब्रह्मणो वा। सर्वथा बहुजीवभाव एव पर्यवसित इत्याह **देहे इति** ॥ ७२४ ॥ ७२५ ॥ ७२६ ॥

**गेहे गेहे स्थिता दीपा दीपान्मूलाग्नितोऽपि वा।**
**भवन्तु बहुदीपत्वे न विशेषोऽस्ति कश्चन ॥ ७२६ ॥**

**निर्जीवदेहसञ्चारे स्वदेहोऽप्यस्तु तादृशः।**
**सर्वभ्रान्तिर्ब्रह्मणोऽस्तु संसरेन्मुच्यतां च तत् ७२७ ॥**

ब्रह्मणोऽस्त्विति। न चेष्टापत्ति 'विद्यामयो य स तु नित्यमुक्त' इति भागवतविरोधात् ॥ ७२७ ॥

**अज्ञानकार्यब्रह्मेशसर्वकर्तृत्वहन्तृते।**
**युक्ते नेति तयोः कार्यत्वेनेत्यादावुदीरितम् ॥ ७२८ ॥**

**पुनरज्ञानकार्यस्य जीवस्यास्य निगद्यते ।**
**सर्वस्य कर्तृता तेन जीवो जागर्ति चेत्तव ॥ ७२९ ॥**

**निद्रातिहृद्रुजा शास्त्रं मिथो यद्धि व्यरुध्यत ।**
**जीवेऽतिव्यापकं चेदं कथं स्याद्ब्रह्मलक्षणम् ॥ ७३० ॥**

कि च तत्त्वप्रदीपनाख्ये मायिग्रन्थे, ब्रह्मण रुद्रस्य चाज्ञानकार्यत्वेन तयो कर्तृत्व सहर्तृत्व च नोपपद्येते इति व्याख्यातम् । इदानी अज्ञानकार्यस्य एकजीवस्य तदुभयाङ्गीकारे पूर्वोत्तरविरोध तत एव दोषेण शास्त्रस्यैव निद्रासदृश अप्रामाण्य ब्रह्मणो जगज्जन्मादिकारणत्वलक्षणस्य एकजीवेऽतिव्याप्तिश्चेत्याह त्रिभि **अज्ञानेत्यादिना** ॥ ७२८ ॥ ७२९ ॥ ७३० ॥

**किञ्चासौ चक्षुराद्यक्षैः कल्पयेन्न तु साक्षिणा ।**
**अन्तरेव स्वतन्त्रेण सन्निकृष्टानि तानि च ॥ ७३१ ॥**

**ज्ञापकानि ततो भ्रान्तेः पुरा सर्वमभूज्जगत् ।**
**अण्डस्यान्तर्बहिस्सर्वजीवोऽणुः कल्पयेत्कथम् ॥ ७३२ ॥**

**अक्षैः** बाह्येन्द्रियै । अन्तरेव स्वतन्त्रेणेति हेतुगर्भ विशेषणम् । **तानि** बाह्येन्द्रियाणि । ज्ञापकानि इत्यनेनान्वय । **ततः** सन्निकर्षस्य पूर्व जगतो विद्यमानत्व एवोपपत्ते ॥ तथा च भ्रान्ते पूर्वमेव विद्यमानस्य न तत्कल्पितत्वमिति भाव । दोषान्तर चाह **अण्डस्येति**। **सर्वं** पुरुषसूक्तोक्तपादचतुष्टयात्मकम् ॥ ७३१ ॥ ॥७३२ ॥

**बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।**
**नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥ ७३३ ॥**

**इति भारतकर्तैव यज्जीवबहुतैकते ।**
**प्राक्प्रस्ताव्योत्तरार्धेन नेच्छन्तीत्येकजीवताम् ।**
**प्रत्यक्षिपत्ततोऽप्येष पक्षो न स हि सूत्रकृत् ॥ ७३४ ॥**

'को ह्यत्र पुरुषश्रेष्ठ त भवान् वक्तुमर्हति' इति पूर्वार्धशेष जनमेजयस्य एकजीववादानुवादेन पूर्वपक्ष । 'बहूना पुरुषाणा च यथैका योनिरुच्यते । तथा त पुरुष श्रेष्ठ आख्यास्यामि गुणाधिकम्' इति उत्तरार्धशेष वैशापायनेन बहुजीववादसमर्थनेन परिहार । **न पक्षः** सूत्रकृत्समत इति शेष । **सः** भारतकृत् ॥ ॥७३३ ॥ ७३४ ॥

**निर्जीवसेनासंहारमुज्जिहासुः किलार्जुनः ।**
**अक्षोहिणीनां तद्युद्धं मृतानां मरणं किल ।**
**एकजीवकथा तस्माद्वृथैवेति मतिर्मम ॥ ७३५ ॥**

गीताविरुद्धश्चाय दुर्वाद इत्यपहसति **निर्जीवेति**। उज्जिहासु परित्यक्तुमिच्छु । **मृतानामिति** एकजीवस्य निद्रितस्य सेनाप्रविष्टत्वाभावादिति भाव ॥ ७३५ ॥

**बहुजीवत्वपक्षेऽपि निर्मूला तेष्वभिन्नता ॥ ७३६ ॥**

उक्त विरोध बहुजीवपक्षेऽप्यतिदिशति **बह्विति**। **तेषु** स्वपरसैन्यगतभटेषु तदुपलक्षितसर्वजीवेषु च। **निर्मूलेति**। विरुद्धा एव खलु युध्यन्ते। विरोधश्च भेदनियत । न हि स्वय स्वेनैव विरुध्यते युध्यते वेति भाव ॥ ७३६ ॥

**भेदत्वाद्यदि भेदस्य मिथ्यात्वं चन्द्रभेदवत् ।**
**तर्हि भेदो न मिथ्येति भेदत्वेनैव हेतुना ।**
**ब्रह्ममोक्षविभेदाख्यदृष्टान्तेनैव साध्यते ॥ ७३७ ॥**

भेदो मिथ्या भेदत्वात् चन्द्रभेदवदिति परानुमान दूषयति **भेदेति**। किञ्च भेदत्वहेतोरविद्यानिवृत्तिरूपमोक्षात्मभेदे व्यभिचारश्च इति वादावल्या सूचिता

प्रकरणसमतामाह **ब्रह्मेति**। एतेन 'भेद सत्य ब्रह्ममोक्षविभेदवदि'ति प्रयोगोऽभिप्रेत ॥ ७३७ ॥

**अविद्याया निवृत्तौ हि प्रकारः पञ्चमस्तव।**
**अतोऽर्वागेव मिथ्यात्वं तस्मिन्यक्षे बलिः पृथक् ॥ ७३८ ॥**

न च दृष्टान्त साध्यविकल। अविद्यानिवृत्त्युत्तरकालीनस्य भेदस्य अविद्याकार्यत्वरूपमिथ्यात्वासभवात्। अत एव 'न सन्नासन्न सदसन्नानिर्वाच्यश्च तत्क्षय' इति वाक्य व्याचक्षाणेन परेण 'यक्षानुरूपो बलिरित्याचार्या प्रत्यपीपदन्नि'ति मोक्षस्य पञ्चमप्रकारतोररीकृता इत्याह **अविद्येति** ॥ ७३८ ॥

**अतोऽविवादो दृष्टान्तो मिथ्यात्वाभावसाधने।**
**श्रुतिस्सत्यं भिदेत्याद्या कुर्वती शपथं हि नः ॥ ७३९ ॥**

सत्य भिदेत्यभ्यासेन सतात्पर्य भेदप्रतिपादकश्रुतिबाध परानुमानस्येत्याह **श्रुतिरिति** ॥ ७३९ ॥

**शून्यब्रह्मविभेदो वा दृष्टान्तस्तत्र कथ्यते।**
**तद्भेदस्यापि मिथ्यात्वे ब्रह्मशून्यं भवेत्तव ॥ ७४० ॥**

विप्रतिपत्तिशङ्काऽनर्ह दृष्टान्तान्तर सत्यत्वसाधकानुमानस्याह **शून्येति** ॥ ॥७४० ॥

**सत्यो भेदस्साध्यवान्न मिथ्या चेद्धेतुमान्नमे।**
**रज्जुसर्पोनयत्सर्पस्तद्भेदं भीषयेद्धि कः ॥ ७४१ ॥**

किञ्च परानुमाने दृष्टान्तीकृतश्चन्द्रभेद सत्यो मिथ्या वा। नाद्य साध्यविकलत्वात्। न द्वितीय । साधनविकलत्वात्। अवधूयैव सत्यत्वादिविशेष भेदत्वसामान्यमेव हेतु अतो न कोऽपि दोष इति चेन्न। रज्जुसर्पयो सर्पत्वमिव तत्सामान्यस्यैवाभावादित्याह **रज्ज्वति** ॥ ७४१ ॥

**यतस्सपक्षपक्षी ते भेदमिथ्यात्वसाधने ।**
**छिन्नपक्षद्वयोऽप्यासीत्तत्सर्पेत्स कुत्रचित् ॥ ७४२ ॥**

साहित्यमुद्रयाऽनुमानस्याभासतामाह **छिन्नेति** । विकल्पितपक्षद्वयासहिष्णु । **सपक्षः** दृष्टान्त । **न उत्सर्पेत्** व्याप्तिग्रहनिरूपको न स्यात् ॥ ७४२ ॥

**चन्द्रभेदोऽपि को वाऽसौ यो दृष्टान्तस्त्वयेरितः ।**
**आरोपितानारोपितयोर्भेदश्चेत्स हि मन्मते ।**
**सत्य एवेति साध्यस्य वैकल्यं स्यान्निदर्शने ॥ ७४३ ॥**

विशिष्य दृष्टान्त पूर्वोक्तेनैव वर्त्मना दूषयति **चन्द्रेति** । **सः** अनारोपितधर्मिक आरोपितप्रतियोगिको भेद ॥ ७४३ ॥

**नायमारोपितश्चन्द्र इति सच्चन्द्रधर्मिकः ।**
**आरोपितात्तु यो भेदस्स सत्यस्सर्ववादिनाम् ॥ ७४४ ॥**

भेदस्यैतस्य सत्यत्व अबाधितप्रतीत्या अभिनीय दर्शयति **नेति** ॥ ७४४ ॥

**सतस्तादात्म्ययोग्यत्वाद्भ्रान्ताद्भ्रान्तैक्यशङ्कया ।**
**तन्निषेधस्य चौचित्याद्भेदधीस्सा ह्यबाधिता ॥ ७४५ ॥**

भेदनिषेधप्रतीतेरबाधितत्व सद्धर्मिकभेदस्थले भेदप्रसक्तिसमर्थनेन समर्थयति **सत इति** ॥ ७४५ ॥ ७४६ ॥

**स च स्वरूपतोऽस्त्येव परं नास्तीतरात्मना ।**
**अतस्तत्र सदाऽन्यस्माद्भेदावसर एव हि ॥ ७४६ ॥**

**यद्यारोपितचन्द्राणामेव भेदः परस्परम् ।**
**तदा साधनवैकल्यं दृष्टान्ते प्रतिवादिनः ॥ ७४७ ॥**

आरोपितचन्द्रस्य आरोपितचन्द्रान्तराद्भेदनिषेधस्तु निःस्वरूपस्य तस्य तादात्म्यप्रसक्तेरेवाभावेन अनवसरपराहत इत्याह **यदीति** ॥ ७४७ ॥

अन्योन्याभावभेदोऽय न ह्यसत्येषु मन्मते ॥ ७४८ ॥

**यदा धर्म्येव नैवास्ति तदा तस्यैव नास्तिता ।**
**तत्राऽन्योन्यात्मताऽभावो ह्यप्रसक्तनिषेधनम्॥ ७४९ ॥**

अन्योन्याभावरूपभेद इति निर्देश वक्ष्यमाणदूषणस्य स्फुटीकरणार्थम् । पृथक्त्व अन्योन्याभाव स्वरूप इत्येषामैक्यस्य अत्तृत्वनये अनुव्याख्याने व्युत्पादितत्वात् ॥ ७४८ ॥ ७४९ ॥

**तदेव नास्ति चेत्कस्य तादात्म्यं तत्र शङ्क्यते ।**
**शशशृङ्गं स्वतो नास्ति न तु नास्तीतरात्मना ॥ ७५० ॥**

धर्मिण एव असत्त्वे तस्यान्यात्मताया अप्रसक्तेस्तन्निषेधो नेत्येतदभिनीय दर्शयति **शशश्रृङ्गमिति** ॥ ७५० ॥

**अतस्तत्रान्यवस्तुभ्यो भेदावसर एव न ।**
**यतो धर्मिस्वरूपोऽयमन्योन्याभाव ईर्यते ॥ ७५१ ॥**

अन्योन्याभाव स्वरूपभेद इत्यनर्थान्तरमित्याह **यत इति** ॥ ७५१ ॥

**घटोयमेव न पटः पटोऽसौ न घटस्त्विति ।**
**सामानाधिकरण्यस्य वस्त्वैक्ये ह्यनुशासनात् ॥ ७५२ ॥**

**अतो नासति सोऽभावो भावाभावबहिष्कृतः ॥ ७५३ ॥**

**अभावेषु हि सर्वेषु यो धर्मी विद्यमानता ।**
**तस्य सर्वस्य नियता नाभावोऽसति धर्मिणि ॥ ७५४ ॥**

नाभूदत्र घटो नष्टो घटो नायं घटः पटः ।
शशशृङ्गं सर्वदेशकालेनेति हि धीर्नृणाम् ॥ ७५५ ॥

पश्चात्सत्त्वं प्रागभावे नियतं प्रतियोगिनः ।
अतोऽसौ प्रागभावोऽभूत्प्रध्वंसप्रतियोगिनः ।
पूर्वसत्यं च नियतमुत्तराभावताऽस्य तत् ॥ ७५६ ॥

सद्ध्यामभाव इति हि ततः प्राहुर्विपश्चितः ।
नाशेन जन्मना तस्माज्जगत्सत्यत्वमुच्यते ॥ ७५७ ॥

सतस्सदन्तराद्भेदे प्रतियोगिनि सत्यता ।
अविद्यमानाद्भेदे तु प्रतियोगी परं न सन् ॥ ७५८ ॥

नायमारोपितश्चन्द्रो नेदं रजतमित्यपि ।
यतः प्रतीतिर्लोकानां धर्मी तत्रापि सन्भवेत् ॥ ७५९ ॥

भेदस्य धर्मिसत्त्व नियतम् । प्रतियोगी तु क्वचिदसन्नपि । तत्र दृष्टान्तावाह **नायमिति** ॥ ७५८ ॥ ७५९ ॥

त्रिकालनास्तिता धर्मिकालत्रितयमेव हि ॥ ७६० ॥

धर्मिण सत्त्व सर्वाभावसाधारणम् । अत्यन्ताभावेऽपि त्रिकालसर्वदेशावेव धर्मिणौ । तौ च सन्ताविवेत्याह **त्रिकालेति** उपलक्षण सर्वदेशेत्यपि ग्राह्यम् ॥ ॥७६० ॥

शशशृङ्गस्य नास्तित्वं तद्गरूपादिनास्तिता ।
त्रिकालनास्तितैवेति धर्मी कालोऽखिलस्य सन् ॥ ७६१ ॥

**अखिलस्य** असद्धर्मिकाभावमात्रस्य ॥ ७६१ ॥

असतः शशशृङ्गादेर्धर्मित्वं तूपचारतः ॥ ७६२ ॥

शशशृङ्गे रूप नास्तीति ,प्रयोगस्तु उपचरित । तत्रापि सर्वदेशेषु कालेषु नास्तीत्येवाशय इत्याह **असत इति** ॥ ७६२ ॥

**प्रतियोगित्वपूर्वास्तु धर्मिसत्तानपेक्षिणः ।**
**भावधर्मास्सन्ति तत्रात्यभावस्य गतिस्त्वियम् ॥ ७६३ ॥**

**निषेधप्रतियोगित्वमात्रं सर्वस्य चासतः ।**
**देशः कालश्चाखिलोऽपि धर्मी तस्य निषेधने ॥ ७६४ ॥**

**शशशृङ्गं न कुत्रापि न कदापीति हि प्रमा ।**
**तद्दैर्घ्यं च न कुत्रापि न कदापीति हि प्रमा ॥ ७६५ ॥**

अत्र धर्मित्व सत्त्वरूपत्वमेवाभिप्रेतम् । अत्यन्ताभावप्रतियोगित्वादयस्तु न केवल धर्मिसत्तानिरपेक्षा । प्रत्युत तदसत्त्वमेवापेक्षन्ते । अत शशशृङ्गे रूप दैर्घ्य नास्तीत्यादिनिषेधे देशकालावेव धर्मिणौ इत्याह **निषेधेति** द्वाभ्याम् ॥ ७६३ ॥ ७६४ ॥ ७६५ ॥

**अत्यन्ताभावमात्रे तु प्रतियोगिन्यसत्यता ।**
**नियता कथमत्यन्ताभावस्सोऽपि सतो यदि ।**
**कालत्रयेऽप्यभावं हि तच्छब्दार्थं विदुर्बुधाः ॥ ७६६ ॥**

मात्रशब्द कात्स्न्यार्थ । नियतेत्यनेन क्वचिदत्यन्ताभाव प्रामाणिकप्रतियोगिकोऽपि भवतीति स्वयूथ्याना केषाञ्चिद्वाद प्रौढिवाद एवेत्यभिप्रैति । हीत्यनेन 'प्राक् प्रध्वससदात्वेन त्रिविधोऽभाव इष्यते' इति तत्त्वसङ्ख्यान प्रमाणयति ॥ ७६६ ॥

**योऽत्यन्ताभावमेवाह घटस्य स हि सर्वदा ।**
**जलाहरणयोग्यस्याभावाच्छुष्यद्गलो भवेत् ।**
**न चेदत्यन्तशब्दोऽयं शोषयेद्बहुजल्पतः ॥ ७६७ ॥**

अत्यन्तशब्द एवाभावस्योक्तरूपत्व निर्धारयतीति साहित्यमुद्रयाऽऽह **य इति**। अन्यथा निरर्थक अत्यन्तेत्युच्चारण कण्ठशोषमात्रायेत्याह **जल्पतः इति** ॥ ॥७६७ ॥

**प्रागभावादयोऽप्यत्यन्ताभावाः स्युर्न चेत्तव।**
**धर्मी तस्याप्युक्तरीत्या सन्नेवेति विनिश्चितः ॥ ७६८ ॥**

अन्यथा अभावस्य त्रैविध्येनोक्तो विभागोऽनुपपन्न स्यादित्याह **प्राणभावेति** प्राक्कालावच्छिन्न उत्तरकालावच्छिन्न अत्यन्ताभाव इति प्राक्प्रध्वसाभावयोरपि सदाऽभाव एवान्तर्भावसभवादिति भाव। न च धर्मिण सत्त्वासत्त्वाभ्या तयोरत्यन्ताभावात्पार्थक्यम्। अत्यन्ताभावेऽपि धर्मिण सत्त्वस्य विनिश्चितत्वादित्याह **धर्मीति** ॥ ७६८ ॥

**एवं च धर्मिणस्सत्त्वं सर्वाभावेषु यद्ध्रुवम्।**
**अन्योन्याभावरूपोऽयं भेदो नारोपितेषु तत्॥ ७६९ ॥**

प्रकृत यद् दृष्टान्तदूषण तदुपयोगोक्त्या निगमयति **एवमिति** ॥ ७६९ ॥

**वर्तमानः परं धर्मी भावोऽस्याभाव एव वा।**
**स च भावेषु भावात्मा ह्यभावेषु तदात्मकः ॥ ७७० ॥**

**वर्तमानः** सन्। पर केवलम्। न तु भाव एवेति अभाव एवेति वा नियम्यते। भावा 'भावस्वरूपत्वादि'ति तत्वसङ्ख्यानोक्तेरित्याह **स इति** ॥ ७७० ॥

**पट एव घटो नेति समानाधिकृतत्वतः।**
**यतः प्रतीयते सर्वैस्ततो धर्मिण्यभिन्नता ॥ ७७१ ॥**

भेदस्य धर्मिस्वरूपत्व सामानाधिकरण्यप्रयोगबलेन सिद्धमित्याह **पट इति**। एव 'घटाभावो घटो न' इत्यपि अन्योन्याभावस्य अभावस्वरूपत्वे उदाहर्तव्यम् ॥ ॥७७१ ॥

**भावाभावविरोधश्च प्रतियोग्यनुयोगिनोः।**
**घटाभावः पटवति घटवत्येव न ह्यसौ ॥ ७७२ ॥**

'भावाभावविरोधोऽपि न तु सर्वत्र विद्यते। तदभावो हि तद्भावविरोधी न ततोऽपर' इति अदृश्यत्वादिनयेऽनुव्याख्यानोक्तमनुरुध्याह **भावेति।** चशब्द एवार्थ प्रतियोग्यनुयोगिनोरित्यनेन सबध्यते। न तदन्यत्र। ससर्गाभावे तन्नियम दर्शयति **घटाभाव इति।** अन्योन्याभावेऽपि त दर्शयति **एवमिति॥** ७७२ ॥ ॥७७३ ॥

**एवं घटस्य भेदोऽयं पटेऽस्ति न घटे परम्।**
**अतस्सिद्धो विरोधोऽस्मिन्प्रतियोग्यनुयोगिनोः॥ ७७३ ॥**

**उक्तप्रत्यक्षबलतस्सोऽभिन्नस्स्वस्वधर्मिणा।**
**अनवस्थाभियान्ते च धर्म्यैक्यं वाच्यमस्य हि॥ ७७४ ॥**

'तत्तद्भेदस्य भेदान्तरभेदेऽनवस्थान' इति वादावल्युक्तदिशाऽऽह **अनवस्थेति॥** ७७४ ॥

**उक्तप्रत्यक्षानुसारात्प्रागेव स निगद्यताम्।**
**धर्मित्वादीशक्लृप्तत्वात्तत्तच्छक्तिविशेषतः ॥ ७७५ ॥**

धर्मधर्मिभावादिभेदव्यवहार विशेषबलादित्याह तत्तच्छक्तिविशेषत इति। समर्थितश्चाय विशेषो गुणसौरभे॥ ७७५ ॥

**इह नेति प्रतीतस्तु भिन्नोऽभावस्त्रिरूपवान्।**
**आधाराधेयभावो हि तेषां धर्मिषु दृश्यते।**
**धर्म्यभेदे तु मानं न तद्भिन्नाः स्वस्वधर्मिभिः॥ ७७६ ॥**

'यत्तदद्रेश्यमगोत्र' इति श्रुतौ अद्रेश्यमित्यनेन दृश्यप्रतियोगिकान्योन्याभाव, अगोत्रमित्यनेन तु बहुव्रीहिसमाश्रयणे न गोत्रससर्गाभाव प्रतीयते। तत्र

अन्योन्याभाव धर्मिस्वरूपमित्युक्तम्। ब्रह्म न दृश्य इति अन्योन्याभावस्य ब्रह्मसामानाधिकरण्येनैव प्रतीत । अतो युज्यते समन्वेतव्यस्य दृश्यभेदस्य स्वरूपलक्षणत्वम्। गोत्रभेदस्तु नैतद्वाक्यबोध्य । तस्य घटादिसाधारण्येन सरूपलक्षणत्वासभवात्। गोत्रससर्गाभावस्य तु 'ब्रह्मणि गोत्र नास्ति' इति आधाराधेयभावेनैव प्रतीयमानत्वेन न स धर्मिस्वरूपम्। भूतले घटो न इति प्रतीयमानभाववदित्याह **इहेति**॥ इयास्तु विशेष । ब्रह्मणि गोत्र न इत्यत्र अत्यन्ताभाव एव । भूतले घटो न इत्यत्र यथातथ त्रिविधोऽपि ससर्गाभाव । स च त्रिविधोऽपि उक्तहेतो धर्मिभिन्न एवेत्याह **तदिति** यथोक्त सुधाया 'भिन्न एव धर्मिण प्रागभावादि । धर्मिनाशोऽप्यविनाशादि'त्यादि ॥ ७७६ ॥

**एकाभावे त्वभावोऽन्यो मृतमारणमेव हि ॥ ७७७ ॥**

**अन्योन्याभाव एवैको वर्तमानेषु वस्तुषु ।**
**न प्रध्वंसः प्रागभावो नात्यन्ताभाव एव वा ॥ ७७८ ॥**

तादात्म्यप्रसक्तेरेवाभावेन तन्निषेधात्मा अन्योन्याभाव न शशविषाण-धर्मिक । तस्य अत्यन्ताभावप्रतियोगित्वादित्युक्तम्। सामान्यत अभावस्य अभावान्तरासहिष्णुस्वभावत्वादप्येवमित्याह **एकेति** ॥ ७७८ ॥

**इह भूमौ घटो नेति यो निषेधः प्रतीयते ।**
**स तत्संसर्गनाशो वा तस्य प्राङ्नास्तितैव वा ॥ ७७९ ॥**

स्वसत्तादशाया प्रतियोगिसत्तासहिष्णुत्वस्वभावत्व अन्योन्याभावस्यैकस्यैव नेतरेषा त्रयाणामित्याह **अन्योन्याभाव इति** ॥ ७७९ ॥

**संसर्गो यत्र नैव स्यात्तत्र त्वत्यन्तनास्तिता ।**
**यो घटोऽस्ति कथं नास्ति स एव**
**व्याहतं (हि) च तत् ॥ ७८० ॥**

**इहेति** अधिकरणनिर्देशपूर्वक यत्राभाव प्रतीयते तत्र सर्वत्रापीत्यर्थ । ससर्गस्य भूतत्वे नाश भावित्वे प्रागभाव इति विवेचनीयम् ॥ ७८० ॥

यत्र एतद्घटभूतलससर्ग कदाऽपि नास्ति तत्र ससर्गस्यैव अत्यन्ताभाव न तु घटस्येत्याह **ससर्ग इति।** अन्यथा व्याघातादित्याह **य इति।** स एव कथ नास्तीत्यन्वय । प्रामाणिकस्यात्यन्ताभावासभवादेवेति भाव । अत्र विस्तर न्यायामृते अनिर्वाच्यत्वसाधकनिषेधप्रतियोगित्वान्यथाऽनुपपत्तिभङ्गे द्रष्टव्य । अप्रामाणिकस्यैव अत्यन्ताभावप्रतियोगिकत्व इत्यत्र तत्र तत्र आकरग्रन्थोक्तानि निरवकाशप्रमाणानि अस्माभि कृते भगवतो निर्दोषत्वलक्षण इति ग्रन्थे उदाहृतानि अत्र सुधीभिरनुसन्धेयानि ॥ ७८० ॥

**संसर्गो नेत्यभावस्तु तत्संबन्धस्य नास्तिता ।**
**काश्यामयं च संसर्गो नेति चास्य निषेधनम् ॥ ७८१ ॥**

घटे पटतादात्म्य नेति अधिकरणनिर्देशेन तादात्म्यनिषेधस्तत्रापि तादात्म्यससर्गस्यैव निषेध न तु पटतादात्म्यस्य। तस्य पटे विद्यमानस्य प्रामाणिकस्य निषेधासभवात्। काश्या एतद्भूतलघटससर्गो नास्ति इत्यत्रापि ससर्गससर्ग एव निषेध्य इत्याह **ससर्ग इति। अस्य** ससर्गससर्गस्य ॥ ७८१ ॥

**घटससर्गवत्संसर्गस्य संसर्गनास्तिता ।**
**स चाप्रामाणिकस्तस्य ह्यत्यन्ताभाव एव सः ॥ ७८२ ॥**

तस्य अप्रामाणिकत्वेन युज्यते तस्यात्यन्ताभाव इत्याह **घटेति। एवेति** काश्या एतद्भूतलघटससर्गससर्गस्य कदाप्यभावादिति भाव ॥ ७८२ ॥

**प्रामाणिकस्य प्रागूर्ध्वं प्रागभावविनाशने ।**
**वर्तमानत्वसमये त्वन्योन्याभाव एव हि ॥ ७८३ ॥**

**प्रामाणिकस्य** घटस्य। **प्राक्** उत्पत्ते पूर्वम्। **ऊर्ध्व नाशानन्तरम्। प्रागभावविनाशने** प्रागभाव ध्वसश्च। यथाक्रम अन्वय। **एवेति** प्रतियोगिसत्ताया अन्योन्याभावातिरिक्ताभावान्तरस्यासहिष्णुस्वभावत्वादिति भाव ॥ ७८३ ॥

**अभूते प्रागभावोऽस्ति तादात्म्यस्याप्यसौ तदा।**
**अतस्तदात्मतान्यस्मिन्न भूते नैव शक्यते ॥ ७८४ ॥**

घटप्रागभावदशाया तत्तादात्म्यस्यापि प्रागभाव इत्याह **अभूते इति।** अनुत्पन्ने इत्यर्थ। तस्मिन् अभूते इति पदच्छेद। एकस्य अनुत्पन्नस्य अन्येव अनुत्पन्नेन तादात्म्य नैव शाक्यते। उभयोरपि तादात्म्यप्रागभावस्यैव सत्त्वादित्यर्थ ॥ ७८४ ॥

**ध्वस्ते तु ध्वंस एवास्ति नान्योऽभावस्तु कश्चन।**
**तादात्म्यस्यापि नाशेन लीनान्यैक्यं च तस्य न॥ ७८५ ॥**

उक्त प्रकार ध्वस्तयोरप्यतिदिशति **ध्वस्ते इति।** एवकारेण व्यवच्छेद्यमाह **नेति। कश्चन अभावः** प्रागभाव अत्यन्ताभाव अन्योन्याभाव। **लीनान्यैक्यं** ध्वस्तस्य अन्येन ध्वस्तेनैक्यम् ॥ ७८५ ॥

**वर्तमाने तु भेदोऽस्ति तेनान्योन्यमनेकता।**
**अत्यन्ताभाव एवास्ति तथात्यन्तासतोऽपि हि॥ ७८६ ॥**

**तत्तादात्म्यं हि तन्मात्रं तस्याप्यत्यन्तनास्तिता।**
**तेष्वन्योन्यं भेदकथा तादात्म्यस्याप्यसत्त्वतः॥ ७८७ ॥**

**भेदः** तादात्म्यविरोधी। **ततो** विरोधिभेदसद्भावात्। अवर्तमानयो अतीतानागतयोस्तु, तादात्म्यविरोधिनो तादात्म्यध्वसतादात्म्यप्रागभावयो सत्त्वेन न अतीतस्य अतीतेन तादात्म्यव्यवहार इति विवेक। शशविषाणनरविषाणयोरिव तत्तादात्म्ययोरत्यन्तासत्त्वेन न तयोस्तादात्म्यव्यवहार इत्याह **अत्यन्ताभाव इति।** हिर्हेतौ। **तस्यापि** तत्तादात्म्यस्यापि। शशविषाण नरविषाण नेति भेदव्यवहारस्तु

उपचरित एवेत्याह **कथेति**। वार्तामात्र ननु भेदस्य सद्भावात्। भेदस्य धर्मिस्वरूपत्वनियमात्। तयोश्च निस्स्वरूपत्वात्॥ ७८६ ॥ ७८७ ॥

**तादात्म्याभावधीस्तस्य ह्यत्यन्ताभावतस्तदा।**
**अतो भेदव्यवहृतिस्तत्र तत्र तथा तथा।**
**सति तद्भेदसद्भावात्तेषु तद्भिन्नतावचः ॥ ७८८ ॥**

तत्र तत्र तथातथा। नि स्वरूपे उपचरित । सस्वरूपे नि स्वरूपात्तु वास्तव । **तेषु** सत्सु। **तद्भिन्नता** असद्भिन्नता ॥ ७८८ ॥

**यथा कथञ्चिद्वैसादृश्याद्वातेष्वपि भेदवाक्।**
**धर्म्यभावेन तेष्वन्योऽन्याभावस्यात्यसंभवात्॥ ७८९ ॥**

वैसादृष्यात् भिन्नपदैर्व्यवह्रियमाणत्वात्॥ ७८९ ॥

**तादात्म्यस्थप्रागभावो नाशोऽत्यन्तनिषेधनम्।**
**ऐक्यस्य प्रागभावादिर्न भेदस्त्रितयं च तत् ॥ ७९० ॥**

अनुत्पन्ने घटे घटतादात्म्यप्रागभाव प्रतीयते। एव अतीते घटे घटतादात्म्यध्वस अत्यन्तासति च तादात्म्यात्यन्ताभाव। **तत् त्रितय** एतदभावत्रितयम्॥ ७९० ॥

**घटे सति पटादीनां तादात्म्यं यन्निषिध्यते।**
**घटः पटो न भवति पटो न घट इत्यपि।**
**स एव भेदनामा यमन्योन्याभाव इष्यते ॥ ७९१ ॥**

कस्तर्हि अन्योन्याभावाख्यभेदे साक्षिभूत प्रत्यय इत्यत आह **घट पटो** नेत्यादिना॥ ७९१ ॥

**नास्ति तादात्म्यमिति तु प्रागभावादिरीर्यते।**
**अन्योन्याभावभेदस्तद्वर्तमानेषु केवलम् ॥ ७९२ ॥**

निगमयति **नेति** ॥ ७९२ ॥

**अतोऽभावोतिदुष्टोयं स्वगोत्रकलहप्रियः ।**
**धर्मिण्येकस्सदैकाकी प्रतियोगि(नि)षु ते त्रयः ॥ ७९३ ॥**

अतिदुष्टत्वमेवोपपादयति **स्वगोत्रेति**। अभावत्वेन स्वसदृशेत्यर्थ । अभावस्य स्वधर्मिणि अभावान्तरासहिष्णुस्वभावत्वादिति भाव । **एकः** अन्योन्याभाव, **धर्मिणि एकाकी** स्वसत्तादशाया अभावान्तर असहमान । **ते त्रयः** ससर्गाभावा **प्रतियोगिनि** एकाकिन इति विभक्तिविपरिणामेन अनुषङ्ग । प्रागभाव स्वप्रतियोगिनि ध्वसप्रतियोगित्व अत्यन्ताभावप्रतियोगित्व वा न सहते। एव इतरत्रापि ॥ ७९३ ॥

**भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक् ।**
**इति तत्त्वविवेकं तत्कुर्वन्गुर्वग्रणीर्मम ॥ ७९४ ॥**

अन्योन्य न भवत इत्यन्योन्याभावौ घटपटौ । तयोर्भाव अन्योन्याभावता, भेद इति भाव । **न पृथक्** भावे विद्यमानो भावस्वरूप । अभावे च अभावस्वरूप । अत तत्त्वविभागावसरे न पृथग्गणनीय । असति तु नास्त्येव येन पृथग्गणना स्यादिति भाव ॥ ७९४ ॥

**अन्योन्याभावाभिधानं तत्त्वं न पृथगुक्तवान् ।**
**भावाभावेषु ताद्रूप्याद्भेदस्यासत्यवर्तनात् ॥ ७९५ ॥**

**तस्मात्साधनवैकल्यमस्मिन्पक्षे दृढं विदाम् ॥ ७९६ ॥**

**तस्मात्** भेदस्य धर्मिस्वरूपत्वात् । आरोपितचन्द्रस्य च नि स्वरूपत्वेन तत्र धर्मिस्वरूपसापेक्षभेदस्यैवासत्त्वेन तत एव तत्र भेदत्वहेतोरभावेन प्रागुक्त साधनवैकल्य दुष्परिहरमिति भाव ॥ ७९६ ॥

**किं चारोपितरूप्येषु रूप्यत्वं कस्य संमतम्।**
**अत आरोपितो भेदो न भेदस्सर्ववादिनाम् ॥ ७९७ ॥**

प्रागुक्त भेदे विकल्पदूषण स्मारयति **किं चेति**। आरोपितानारोपितरूप्ययो रूप्यत्वसामान्यमिव आरोपितानारोपितभेदयोर्भेदत्वसामान्यमप्रामाणिकमेव। तदुक्त वादावल्या 'न हि जलनभोनलिनयोर्नलिनत्वसामान्यमस्ती'ति ॥ ७९७ ॥

**अनारोपितभेदस्तु सत्य एवाखिलस्ततः।**
**साध्यसाधनवैकल्यशल्यमुद्ध्रियते कथम् ॥ ७९८ ॥**

अनारोपितचन्द्रधर्मिको भेदो हेतूक्रियते स च सत्य इति न साधनवैकल्यमिति चेत् एव तर्हि तत्र मिथ्यात्व नास्तीति साध्यवैकल्यम्। तथा चैक सन्धित्सत अपर च्यवते इति न्याय इत्याह **साध्येति** ॥ ७९८ ॥

**अतस्तवैष दृष्टान्तो नाम्ना दृष्टान्त एव हि।**
**यतो द्वेधाऽपि दृष्टोऽन्तस्सर्वैरस्य मनीषिभिः॥ ७९९ ॥**

मिथ्याभेदपक्षीकारे प्रतिवादिन आश्रयासिद्धि। सत्यस्य पक्षत्वे बाध। मिथ्याभूतस्य हेतो असिद्धि। सत्यस्य विरुद्धता। मुक्तामुक्तयोर्भेदेऽनैकान्त्यम्। अप्रमाणगम्यत्वमुपाधि। अभेदो मिथ्या अभेदत्वात् देहात्माभेदवत् इत्याभाससाम्य इत्यादि सकलसाधनदोषाणा सद्भावादिति भाव। **अतः** मिथ्यात्वानुमानस्य दुष्टत्वात्। 'न वय अभेद साधयाम। कि तु भेद व्यासेधाम इति त्वदुपक्रमो दुराशामात्रम्॥ **नाम्ना** अन्तशब्दस्य त्वदभिलषितार्थनाश इत्यर्थमाश्रित्य ॥ ७९९ ॥

**आत्मत्वात्परमात्मेव यद्यात्मा यं मते तव।**
**नारीत्वात्तर्हि भार्यैव ते माता स्यात्तथैव हि।**
**अतस्त्वं मातृगमनीत्युपेक्ष्यः प्रतिवादिनाम् ॥ ८०० ॥**

**पशुत्वाद्गौश्शुनीते स्याद्वस्तुत्वादन्नमेव हि ।**
**अशुद्धं स्याद्घटोऽपि स्यात्पटो द्रव्यत्वतस्तव ॥ ८०१ ॥**

विमत आत्मान· परमात्मन परमार्थतो न भिद्यन्ते आत्मत्वात् परमात्मवदित्यनुमान अनेकाभाससाम्योक्त्याऽपहसति **नारीत्वादित्यादिना** ॥ ॥८०० ॥ ८०१ ॥

**आभासोपमहेतूनां तन्मुख्येयमुदाहृतिः ।**
**अतोनुमानतोऽप्यैक्यं न सिद्ध्येत्प्रतिवादिनाम् ॥ ८०२ ॥**

**मुख्येति ।** व्यवहारतोऽपि न भिद्यन्ते इत्यपि सुसाधत्वात् ॥ ८०२ ॥

**यतोऽनुमानतोऽप्यक्षागमान्वेव सा भवेत् ॥ ८०३ ॥**

सकलप्रमाणविरुद्धार्थे प्रवर्तमानाना त्वदनुमानमिति तच्छब्दवाच्यत्वमेव दुर्घटमित्याह **यत इति** ॥ ८०३ ॥

**मानानामेव मिथ्यात्वादैक्ये मानं न ते मते ।**
**ममत्वैदंपर्यमात्रे मिथ्यात्वात्तानि तत्र न ॥ ८०४ ॥**

मानानामेवेति 'नेह नानास्ति किचन' इति प्रपञ्चान्तर्गतमानाना 'न वेदा न वर्णाश्रमाचारधर्मा' इति मिथ्यात्वोपगमात् । न हि वन्ध्यासुतवचसा किमपि सिध्यमिति भाव । मया त्वभेदवाक्याना सत्यत्व प्रामाण्य चाङ्गीकृत्य स्वरूपैक्ये तात्पर्यमात्र निषिध्यते अविरुद्धार्थान्तरे तात्पर्य व्यवस्थाप्यते इति न कोऽपि दोष इत्याह **ममेति । तत्र न** स्वरूपैक्ये न प्रमाणानि । सादृश्याद्यैक्ये तु प्रमाणान्येव ॥ ॥८०४ ॥

**विमतौ जीवपरमौ विरुद्धगुणवत्त्वतः ।**
**अभिन्नौ नैव तु हि न दहनाविव सर्वदा ।**
**सर्वानुभवसिद्धे यमनुमा भेदसाधिका ॥ ८०५ ॥**

अत्यन्तभेदलाभाय नञ्द्वयम्। भेदस्य पारमार्थिकत्वसिद्धये **सर्वदेति।** अनुभवसिद्धेति अनुकूलतर्कसूचनम् ॥ ८०५ ॥

**नाहं सर्वज्ञ इत्यादि साक्षिप्रत्यक्षमस्ति हि।**
**जीवेशभेदसर्वेषां वेदस्तूक्तः पदे पदे ॥ ८०६ ॥**

भेदप्रत्यक्षताप्रयोजकस्य धर्मिभूताहपदार्थप्रत्यक्षस्य साक्षिणा, प्रतियोगिभूतसर्वज्ञप्रतीतेश्चागमेन सिद्धत्वादिति भाव । **पदे पदे** 'सन्ति च भेदे सर्वागमा' इति भगवत्पादै समर्थनादित्याशय ॥ ८०६ ॥

**अतस्त्रिमार्गगामित्वाद्भेदो गङ्गेव सेश्वरैः।**
**धार्येयं शिरसा सर्वैः पुनाति च जगत्त्रयम् ॥ ८०७ ॥**

**अतः** प्रमाणत्रयसिद्धत्वात्। **गङ्गेव** त्रिपथगेव। **धार्या** मुमुक्षुभि स्वीकार्या। अनन्यप्रोक्ते गतिरत्र नास्ति, प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ' इति श्रुते । **पुनाति चेति।** ब्रह्मधर्मिकभेदस्य तत्स्वरूपत्वात्। यथोक्त 'स च भेदो धर्मिण स्वरूपमेव' इति वादावल्याम्। भेददृष्टेश्च तत्पूजारूपत्वात्। तथा हि भगवते ऋषभवाक्य 'विविक्तदृष्टिस्तदुतार्हण मे' इति ॥ ८०७ ॥

**देवानां किल मानुष्यं नाज्ञानेनैव केवलम्।**
**किन्तु शापेन तन्मूलपापाद्यैर्वा भवेद्भुवि ॥ ८०८ ॥**

**विप्राणामन्त्यजत्वं च महापापफलं किल।**
**अन्त्यजानां च विष्ठायां क्रिमितापापतः किल ॥ ८०९ ॥**

ब्रह्मैव अज्ञानसबन्धाद्धीनयोनी प्राप्य ससरतीति परप्रक्रिया दूषयितु सामान्यत उच्चस्य सतो नीचत्वप्राप्तौ कारण शापो वा पाप वेति दृष्टान्तैर्निर्धारयति **देवानामिति।** माडव्यशापाद्यमस्येव। एवकारव्यवच्छेद्यमाह **किं त्विति** ॥ ८०८ ॥ ॥८०९ ॥

**तस्मादुच्चस्य नीचत्वप्राप्तिः पापेन केवलम् ।**
**अज्ञानमात्रतस्सा चेत्स्मृत्यादीनामपार्थता ॥ ८१० ॥**

**अज्ञानमात्रतः** न तु पापादिना। **स्मृत्यादीना** 'चण्डाला कोटिजन्मसु' इत्यादीनाम् । **अपार्थता** विपरीतबोधकत्वम् ॥ ८१० ॥

**एवं सति श्वचण्डालपशुपक्ष्यादियोनिषु ।**
**अनादिकालतो भूत्वा सदा सर्वत्र संसरेत् ॥ ८११ ॥**

**ते ब्रह्म बहुदुष्कर्मविण्मयार्णवमज्जितम् ।**
**परब्रह्म तवैव स्यात्तदेवत्वं न संशयः ॥ ८१२ ॥**

ब्रह्म तु सर्वोच्च, चण्डालादियोनयश्चातिनीचा । अत त्वदभिमतब्रह्मणो बहुदुष्कर्मलेप प्राप्त । एवरूपेण ब्रह्मणा मायिन ऐक्यमनुमन्यामहे इत्याह **तवैव स्यादिति।** यथोक्त सुधाया जन्माधिकरणे 'तर्हि गुणशब्दोदित-सकलशुभराहित्यलक्षणमसुरत्वमेव स्यात् । । तेनैक्य च मायावादिनामनुमन्यामहे' इति ॥ ८१२ ॥

**अस्मद्ब्रह्म हयग्रीवमत्स्यकूर्मादिविग्रहे ।**
**अपि चित्सुखसंपूर्णं सहस्रार्कसमप्रभम् ॥ ८१३ ॥**

**अनन्तवेदवेदाङ्गपुराणस्मृतिपारगम् ।**
**चतुर्मुखाद्यैराराध्यं तेषां विद्योपदेष्टृ च ॥ ८१४ ॥**

**विग्रहेऽपि ।** मत्स्याद्यवताररूपेष्वपि । **संपूर्णं** 'पूर्णमद पूर्णमिद' इति श्रुते । तमिममखिलहेतु जिह्ममीन नतोस्मि इति स्मृतेश्च। **अनन्तेति** 'अकथयच्च ब्रह्मसत्यव्रताय' इति स्मृते । **चतुर्मुखेति** 'अजेशसुरादिभिर्विमृग्यात्' जिन जित तेऽखिलयज्ञभावन' इति वराहस्तुत्युक्ते- ॥ **'विद्योपदेष्टृ चेति'** 'वाचो बभूवुरुशती श्वसतोऽस्य नस्त' ब्रह्मरुद्रादिदेवेषु मनुष्यपशुपक्षिषु। ज्ञान सस्थाप्य' इत्यादिवचनात् ॥ ८१४ ॥

**यन्मन्त्रोऽपि च मर्त्यानां विद्यासिद्ध्यै नियुज्यते ।**
**यद्भक्त्या मुच्यते जन्तुर्यस्य मातापिता न च।। ८१५ ।।**

**यन्मन्त्रः** हयग्रीवादि ॥ ८१५ ॥

**यत्कृपावीक्षणात्सद्यो मुक्तो निष्पापतामियात् ।**
**अवद्यगन्धविधुरं परक्लेशविमोचनम् ।। ८१६ ।।**

**वीक्षणात्** परमप्रसादात् । **अवद्येति** 'निरनिष्टे निरवद्य' इति श्रुते । 'न मा कर्माणि लिम्पन्ति' इति स्मृते ॥ ८१६ ॥

**अनन्तरूपेष्वप्येवं यस्य शक्तिरनन्तधा ।**
**ततोऽधिकं परं ब्रह्म किं स्याद्वद विवेकिनाम् ।। ८१७ ।।**

**शक्तिरिति** 'परेति या प्राहुरजस्रशक्तिरि'त्युक्ते । **परं ब्रह्मेति** 'परब्रह्म परधाम पवित्र परम भवान्' 'न त्वत्समोऽस्त्यभ्यधिक कुतोऽन्य' इति गीतोक्ते ॥ ८१७ ॥

**ब्रह्मादयोऽपि यद्दासा यद्दास्यं च तपःफलम् ।**
**तद्भक्तिरूपभावस्स्यात्तद्भावस्तु न कस्यचित् ।। ८१८ ।।**

'ब्रह्मभावाय कल्पते' पूता मद्भावमागता इत्यादेर्गतिमाह **मद्भक्तिरूपेति** । 'भावो भक्तिरि'त्यभिधानात् । यद्वा मयि भाव इत्येवार्थ । तस्मिन् प्रविश्य, तत्समीपे वा स्थिति । 'ततो मा तत्त्वतो ज्ञात्वा विशते तदनन्तर' इत्युक्ते । 'पर ज्योतिरुपसपद्य' इति च ॥ ८१८ ॥

**न यत्र मायेति गिरा मायाया भगवत्पदे ।**
**सामान्यतो निषेधेन मायालेशोऽपि नेष्यते ।। ८१९ ।।**

**माया** 'मायामेता तरन्ति ते' इत्युक्ता जडप्रकृत्यात्मिका । यत्रेत्यस्यार्थ **भगवत्पदे इति । सामान्यतः** निरुपपदेन । **अपरे** प्रकृतिजन्मा सत्त्वादय । 'न वर्तते यत्र रजस्तमस्तयो सत्त्व च मिश्र न च कालविक्रम ' इति विवरणात् । 'श्यामावदाता

शातपत्रलोचना' इत्युत्तरत्रोक्तो भेद अविद्यानिवृत्त्युत्तरकालीनत्वात्पारमार्थिक एव सिद्ध ॥ ८२० ॥

**सत्येकस्मिन्नपि घटे घटो नास्तीति धीर्न हि ।**
**अतस्सामान्यतोऽभावे प्रतियोगी न शेषभाक् ॥ ८२० ॥**

**माया नेति निषेधोऽयं सामान्याभाव एव हि ।**
**मुख्यस्य बाधने हि स्यादमुख्योऽर्थो न चान्यथा ।**
**निर्माय भगवल्लोके मुख्या निर्मायतोचिता॥ ८२१ ॥**

सामान्यतो मुख्यमायानिषेधोऽय यत्किञ्चित्प्रतियोगिलेशमपि विरुणद्धीत्याह **मायेति**। मुख्यस्य प्रकृतिबन्धस्य। तस्यैव प्रकृतत्वात्। न तु भगवदिच्छात्मकस्य। तस्य सत्त्वादिगुणोपादानताऽभावात्। **निर्माय भगवदिति**। 'माया व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि' तस्य नित्यनिर्मायतोक्ते ॥ ॥८२१ ॥

**न यत्र सत्त्वमित्यादिनोक्तमायाफलात्यये ।**
**कैमुत्यायोदितो मायाभावोऽयं मुख्य एव हि ॥ ८२२ ॥**

उत्तरत्र प्रकृतिकार्यगुणानामभावस्य कैमुत्येन 'किमुतापरे' इत्युक्ते पूर्वत्रोक्तमाया तत्कारणजडप्रकृतिरेवेत्याह **नेति**। **मायाफलात्यये** प्रकृतिजन्य-गुणाभावे ॥ ८२२ ॥

**न चेत्तत्कार्यकामादीन्कैमुत्येन कथं क्षिपेत् ।**
**किमुतापर इत्यत्र यतो हेतोरसिद्धता ॥ ८२३ ॥**

भगवल्लोक प्रकृतिकार्यबन्धादिदोषरहित तत्कारणप्रकृत्यभावादिति हेतो प्रकृतिलेशावशेषोक्तौ असिद्धि स्यादित्याह **यत इति** ॥ ८२३ ॥

**हरेरनुव्रता एव तत्रापि किल चेतनाः ।**
**सर्वे चतुर्भुजाभिन्ना हरिणा च परस्परम् ॥ ८२४ ॥**

**अतो भगवतो लोके भेदाकारादिसंपदि ।**
**जीवानां च मिथो भेदे जीवबाहुल्य एव च ।**
**सिद्धं मायातिदूरत्वं सत्त्वं च परमार्थतः ॥ ८२५ ॥**

हरेरनुव्रता इति जीवपरस्याभेद, अणुव्रता सर्वे इति बहुवचनेव सर्वपदेन च जीवाना परस्पर भेद, विमानावलिभिरित्यनेन जडाना अन्योन्य जीवैस्तदधिष्ठातृभिश्च भेद वैकुण्ठस्य भगवतो निर्मायत्वोक्त्या जडेशभेद इत्येव पञ्चभेदसिद्धिरवगन्तव्या । **परमार्थत इति**। अविद्यानिवृत्त्युत्तरकालीनत्वात् ॥ ॥८२५ ॥

**तस्मात्परममोक्षत्वं वैकुण्ठादिपुरत्रये ।**
**अव्यावहारिकं भेदं प्राह भागवते शुकः ॥ ८२६ ॥**

**परममोक्षत्वमिति**। अङ्गीकृतश्च परममोक्षेऽपि सुखादिभोग तन्निमित्तभेदश्च अद्वैतिभि । 'सर्वान् कामान् समश्नुते' इत्यादिश्रुतिभ्यो मोक्षे सुख सवेद्यमिति (बृ शा भा ३९ । २८) । अत्र विस्तर 'भेदपराण्येव खलु ब्रह्मसूत्राणि' (प १७९) इत्यत्र अवगन्तव्य ॥ ८२६ ॥

**अतो जीवेशभेदाद्यमभेद्यं सर्ववादिनाम् ।**
**माया यं नास्पृशत्तं तु कोऽन्यो मायावशस्स्पृशेत् ॥ ८२७ ॥**

नास्पृशात् । अमायिकलोकेऽपि सत्त्वात् । **अन्यः** मायावादी । **मायावशाः** 'माययाऽपहृतज्ञाना आसुर भावमाश्रिता·' इति गीतोक्ते । अत्र वैकुण्ठलोके प्रकृतेरभावोक्ति बन्धकत्वेनैव न तु स्वरूपेणेति सर्वत्र विशेषोऽनुसन्धेय· । एतच्छ्लोक(भाग)व्याख्यानावसरे न्यायसुधाया तथैव व्याख्यानात्(अ ४-२-१) ॥ ॥८२७ ॥

**विमतो जीवपरयोर्भेदोऽयं परमार्थसन्।**
**अविद्यास्तमये सत्त्वाद्यथात्मेत्यनुमानतः।**
**सत्यभेदोऽपि संसिद्ध्येद्धेतोरागमिकत्वतः ॥ ८२८ ॥**

भेदस्य पारमार्थिकत्वेऽप्यनुमानमाह **विमत इति**। असिद्धि निराह **आगमिकत्वत इति** ॥ ८२८ ॥

**न वै स आत्मात्मवतामिति वाक्यमनुस्मर।**
**यो दुःखं नैव भुंक्तेऽसौ दुःखी जीवः**
**कथं भवेत् ॥ ८२९ ॥**

**ब्रह्म चिज्जीवचिन्नैव दुःखाभोक्तृत्वतस्सदा।**
**घटवत्पटवद्वेति स्मृतिमूलानुमा भवेत् ॥ ८३० ॥**

**न वा इति** भुक्ते हि दु ख भगवान् वासुदेव इति वाक्यशेष । भुक्ते इति क्रियासातत्ये लट् । तेन निर्दु खत्व भगवत स्वरूपलक्षणमुक्त भवति । दु खित्व जीवस्य लक्षण 'स जीव इति कीर्तित । स दु खी' इति श्रुते । एव विरुद्धधर्माधिकरणत्वे सिद्धे, अनुमानप्रयोगमाह **ब्रह्मेति**। सदा इति दु खस्पृष्टेभ्यो मुक्तेभ्योऽपि भेदसिद्धि । अङ्गीकृत च विरुद्धधर्माधिकरणत्वहेतोर्भेदसाधकत्व परेणापि । 'कथमेकत्वमनयोर्घटते विपरीतयोरि'ति तदुक्ते ॥ ८२९ ॥ ८३० ॥

**विमतो नादिजीवेशभेदादिः परमार्थसत्।**
**अनादित्वाद्यथा ब्रह्मेत्यस्ति शास्त्रानुमा मम ॥ ८३१ ॥**

जीवेशभेदादि पक्ष । अनादित्वविशेषणं तत्र हेतोः परेणापि स्वीकारस्फोरणार्थं आदिपदेन अविद्याचितोर्योगादिक ग्राह्यम् । यद्यपि 'जीव ईशो विशुद्धा चिद् भेदस्तस्यास्तयोर्द्वयो । अविद्यातच्चितोर्योग षडस्माकमनादय ' इति कारिकाया परेण भेदस्तस्यास्तयोर्द्वयोरिति शुद्धचिज्जीवभेदस्य शुद्धचिदीश्वर-

भेदस्य अनादित्वाभ्युपगम ज्ञायते, तथाऽपि 'तयोर्द्वयोरि'ति भेदेन निर्देशेन जीवेशभेदस्यापि अनादित्वमभ्युपगतप्रायमेवेति ज्ञेयम् ॥ ८३१ ॥

**भेदादिषट्कानादित्वं षडस्माकमनादयः ।**
**इति सञ्जल्पतैवोक्तं त्वयातो न कुतोऽपि भीः ॥ ८३२ ॥**

सञ्जल्पतेति वदता पराभिमताविद्यादिरप्रामाणिकत्व ध्वनयति ॥ ८३२ ॥

**पूर्वं पूर्वं विद्यमाने यत्रेदं पूर्वता तु न ।**
**षोढानादिं विभजतामनादिरयमेव हि ॥ ८३३ ॥**

**अयमेव** परमार्थसत्त्वाविनाभूतमेव । नतु पुन शशविषाणादिवदादि-वर्जितत्वमात्रम् । अन्यथा सहपठिताया विशुद्धचितोऽपि अनादित्वस्य तथाविधत्वप्राप्ते ॥ तदिदमुक्त **विद्यमान इति**। तथा च विद्यमानत्वे सति प्रागभावाप्रतियोगित्व अनादित्व हेतुरिति फलितम् ॥ ८३३ ॥

**सपक्षपक्षगो हेतुर्यतोऽयं न विपक्षगः ।**
**षण्णामक्षुण्णतद्भावादन्यानादेश्च निन्हुतेः ॥ ८३४ ॥**

**न विपक्षगः इति**। शशविषाणे विपक्षे विद्यमानत्वविशेषणस्याभावात् । **षण्णां** पक्षसपक्षाणाम् । अन्यानादे अविद्यमानशशविषाणस्य । **निह्नुतेः**। परेणैव उक्तरीत्या हेतुसत्त्वनिराकरणात् ॥ ८३४ ॥

**अनादिः कल्पितश्चेति व्याहतेः प्रथमं गृहम् ।**
**अतः कर्कशतर्कोऽपि धिक्करोति मतं तव ।**
**तस्मादुक्तं समस्तं च निरवद्यमिति स्थितम् ॥ ८३५ ॥**

**व्याहतेरिति**। कल्पित इत्युक्त्या दोषजन्म सादिरिति सिध्यति । पुनरनादिरित्युक्तौ कथ न व्याहतिरिति भाव । **उक्तसमस्तं** भेदपञ्चक तस्य पारमार्थिकत्व च ॥ ८३५ ॥

अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्रमद्वैतं बुध्यते तदा ॥ ८३६ ॥

अनादितोऽपि सुप्तोऽज्ञो जीवो मायावशोऽवशः ।
अप्रबुद्धश्च पूर्वार्धे सुप्रसिद्धोऽभिधीयते ।
उत्तरार्धे त्वजोऽनिद्रस्स्वप्रशून्यश्च कश्चन ॥ ८३७ ॥

स च जन्मादिदूरत्वात्सदा निद्रोज्झितत्वतः ।
अस्वप्नत्वादमायत्वाद्देवो नारायणो भवेत् ॥ ८३८ ॥

अनादितोऽपि बद्धस्य सदा बन्धोज्झितस्य च ।
भवेद्भेदो यतस्तस्मात्सोऽद्वैतो द्वन्द्ववर्जनात् ॥ ८३९ ॥

'अनादिमायया सुप्तो यदा जीव प्रबुध्यते । अजमनिद्रमस्वप्रमद्वैत बुध्यते तदा' इति श्रुत्या भेद साधयति **अनादितोऽपीति । मायया सुप्तः** प्रकृतिबद्ध । यदा प्रबुध्यते इति बन्धध्वसस्य कादाचित्कत्वोक्ति । अज अनिद्रमस्वप्रमित्यनेन भगवतो नित्यमुक्तत्व **तस्मात्** विरुद्धधर्माधिकरणत्वेन भेदस्य सिद्धत्वेन तन्निषेधस्य व्याहतत्वात् द्वैतशब्दस्य द्वैतशब्दोदितद्वन्द्ववर्जित इत्येवार्थ । तथा च श्रुति· 'अशनायापिपासे शोकमोहौ जरा मृत्युमत्येति' इति ॥ ८३६ ॥ ८३७ ॥ ८३८ ॥ ॥८३९ ॥

यो बोद्धा न स बोध्यो हि कर्तृकर्मविरोधतः ।
अतः पूर्वार्धमध्यस्थो नोत्तरार्धगतोऽपि ते ।
कर्तृकर्मविरोधाख्यसर्पस्ते ह्यप्रतिक्रियः ॥ ८४० ॥

बोध्यब्रह्मैक्यवादास्ते बोद्धृत्वं त्याजयन्ति हि ।
अतो द्वैतपदं चैतन्न जीवैक्यपरं तव ॥ ८४१ ॥

अद्वैतमित्यस्य भेदरहितमित्यर्थस्तु पररीत्यैवानुपपन्न । बुध्यते इति बोधनक्रियाया जीवस्य कर्तृत्वेन 'अज' इति ब्रह्मणश्च कर्मत्वेनोक्तत्वेन कर्तृकर्मभावस्य तन्मते भेदनियतत्वात्। न हि स्वनखाग्रेण स्वनखाग्रमेव छेद्यमुपलब्धमिति सदृष्टान्त कर्तृकर्मणोरैक्यस्य परेण खण्डनात् ॥ ८४१ ॥

**सदा निद्रा स्वप्रजन्म शून्यास्तत्पदवाच्यताम्।**
**अर्हन्त्यस्वप्रनाम्नोक्तः किं सुप्तेरुत्थितः पशुः ॥ ८४२ ॥**

अविद्ययान्धो जीव पूर्वार्धोक्त इत्यविवादम्। तत्प्रतियोगितया अनिद्रपदेनोक्तो विद्यामयोऽस्वप्नो नारायण नित्यमुक्त एव न तु सुप्तोत्थित इत्याह **सदेति** ॥ तथा हि भागवत 'योऽविद्ययान्ध स तु नित्यबद्ध विद्यामयो य स तु नित्यमुक्त इति ॥ ८४२ ॥

**बोध्यं वस्तुप्रशंसंती श्रुतिरेतत्परैव सा।**
**नामुख्यार्थे बलान्नेया मुख्यार्थं कः परित्यजेत् ॥ ८४३ ॥**

उत्तरार्ध खलु बोध्यस्य ब्रह्मण प्रशासापरम् । अज अनिद्र इति विशेषणाभ्या तथाऽवगमात्। अतोऽस्वप्रपदेनापि प्रशासात्मक एवार्थो बोधनीय । सदा स्वप्नोपलक्षितससृतिदूरत्वमेव तथाभूतम् । न तु स्वप्नोत्थितत्व पशुसाधारण्यादिति उक्तत्वादित्याह **बोध्यमिति** । असति मुख्यार्थग्रहणे बाधके, प्रत्युत तत्परित्यागे एव बाधके च सति मुख्यार्थपरित्यागो दुराग्रहादेवेत्याह **बलादिति** ॥ ८४३ ॥

**भेदाभावात्स्वरूपेषु सदृशाभावतोऽपि वा।**
**द्वन्द्वाभावाच्च सोऽद्वैतो बोद्धदैतस्य साधनात् ॥ ८४४ ॥**

**भेदाभावादिति** । न विद्यते द्वैत भेद यस्मिन्निति व्युत्पत्त्या 'नेह नानाऽस्ति किञ्चन' इति श्रुत्युक्तरीत्या स्वगतगुणरूपक्रियाऽवयवादिप्रतियोगिकभेदराहित्य अर्थ । **सदृशाभावत इति**। न विद्यते द्वैत सदृश यस्येति व्युत्पत्त्या 'न त्वत्समोऽस्त्यभ्यधिक कुतोऽन्य' इति स्मृत्युक्त सर्वोत्तमत्व अर्थ । यद्वा द्वन्द्वशब्दस्य 'निर्द्वन्द्वो नित्यसत्त्वस्थ' इति गीतोक्त शीतोष्णादिपरत्वे 'असङ्गो ह्यय

पुरुष ' इति श्रुत्युक्तो लेपाभाव अर्थ इत्येव प्रमाणानुगुण यथायथ अर्थ स्वीकार्य । सर्वथा भिन्नद्वितीयवस्तुरहित इत्यर्थस्तु नाङ्गीकारार्ह । पूर्वार्धे एव बोद्धुरत एव भिन्नस्य द्वितीयस्य उक्तेरित्याह **बोद्धृति** ॥ ८४४ ॥

**यथाऽधनोयमित्युक्तिस्स्वधनं प्रतिषेधति ।**
**न याचितधनं स्वस्मिन्गेहे गेहे धनानि वा ॥ ८४५ ॥**

**तथा द्वैतपदं विष्णौ स्वद्वैतं प्रतिषेधति ।**
**न त्वन्यतो हरेर्द्वैतं नाप्यन्यत्र स्थितं च तत् ॥ ८४६ ॥**

स्वगतभेदराहित्यमर्थ निदर्शनेन द्रढयति **यथेति।** न विद्यते धन यस्मिन्नित्यनेन अन्यानधीनतया स्ववृत्तिधनमेव निषिध्यते । याचित परगेहे विद्यमान वा न तथाभूतम् । एव अत्रापीति भाव ॥ ८४५ ॥ ८४६ ॥

**केवलो निर्गुणस्सोऽयं देवः प्रोक्तो वचोऽन्तरे ।**
**नित्यमुक्तोऽमृतस्यैष सेतुश्चोक्तस्स्थलेस्थले ॥ ८४७ ॥**

समाख्याबलाच्च अजादिशब्दाना उक्त एवार्थ इति समाख्योक्तीर्दर्शयति **केवल इति** प्राकृतदेहरहित इति **अजत्वम्।** 'एको देव' इति स्वप्नार्थकदिवुधातोर्निष्पन्न देवशब्द स्वप्रकर्तार आह 'स्वप्नेन शारीरमभिप्रहत्या सुप्त सुप्तानभिचाकशीति' इति श्रुते । तेन अस्वप्न इत्युक्त अस्वप्नत्वम् । साक्षीति सर्वज्ञत्वोक्त्या अज्ञानराहित्यलक्षणमनिद्रत्व इति समाख्यात्व बोध्यम् ॥ ८४७ ॥

**जीवस्तु बद्धो दुःखी च जन्ममृत्युजरावशः ।**
**पातकी नारकी चैव श्रुत्यैवोक्तः स्थलेस्थले॥ ८४८ ॥**

**श्रुत्या** 'अहमित्येव यो वेद्य स जीव इति कीर्तित । स दु खी स सुखी चैव स पात्र बन्धमोक्षयो'रित्यादिकया । उपलक्षण साक्षिप्रत्यक्षेणापीति ज्ञेयम् ॥ ॥८४८ ॥

**एवं विरुद्धचैतन्यद्वयं भिन्नं ह्यनादितः ।**
**तयोर्नैक्यं कदापि स्यान्मुक्तः सारूप्यमेत्यसौ ॥ ८४९ ॥**

**कदाऽपि** मुक्तावपि । **सारूप्यं** 'यथोदक शुद्धे शुद्धमासिक्त **तादृगेव** भवति एव मुनेर्विजानत आत्मा भवति गौतम' इति श्रुतौ तादृगेव न तु तदेव भवतीति निरूपणात् ॥ ८४९ ॥

**पुनर्जन्म स्वप्रबन्धदुःखाद्यप्रियवर्जनात् ।**
**नित्यमुक्तोऽनित्यमुक्त इति तत्रापि चान्तरम् ॥ ८५० ॥**

सादृश्य चैतावदेव न तु अत्यन्तमित्याह **पुनर्जन्मेति** । 'सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' इति स्मृते । बन्धात्यन्ताभाववान् बन्धध्वसान् इति भेदस्य तत्रापि अनुवृत्ते । इदमुपलक्षण अधीनत्वरूपबन्धस्यापि सद्भावादेवेत्यपि ध्येयम् । तदुक्त 'योऽविद्ययान्ध स तु नित्यबद्ध' इति ॥ ८५० ॥

**बन्धान्मुक्तस्ततो जीवो नित्यमुक्तः कथं ह्यसौ ।**
**अतो बोद्धृत्वशून्यैव बोध्यब्रह्मैक्यवाक्तव ॥ ८५१ ॥**

वाक् सर्वा परबोधनार्था । बोद्धुरेव निषेधे वाचो नैरर्थक्यमेवेत्याह **अत इति** ॥ ८५१ ॥

**यदि ब्रह्मैक्यबोद्धा त्वं कथमैक्यं भवेत्तव ।**
**यदि ब्रह्मैक्यबोद्धा न कथमैक्यकथा तव ॥ ८५२ ॥**

किञ्च त्व ब्रह्म जानासि न वा । आद्ये कर्तृकर्मभावेन भेदस्यैव सिद्धि । द्वितीये कथारूपव्यवहारकारणस्य व्यवहर्तव्यज्ञानस्याभावेन कथाया एवानिष्पत्तिरित्याह **यदि चेति** ॥ ८५२ ॥

**किं चैक्यं यदि मिथ्या स्यात्तर्हि भेदश्रुतिस्सती ।**
**विरुद्धश्रुतिदौर्बल्यात्स्वबोध्यं बोधयेद्बलात् ॥ ८५३ ॥**

**दौर्बल्यात्** अप्रामाण्यात् ॥ **बलात्** व्याप्तिबलात् तदुक्तमनुव्याख्याने (४—१—४) 'एकस्यासत्यताया हि द्वयोरेव विरुद्धयो । अन्यस्य सत्यतैव स्यादिति केन निवार्यते' इति ॥ ८५३ ॥

**सत्यं चेद्ब्रह्मणो भिन्नमभिन्नं वा निगद्यताम् ।**
**भेदे तेनैव तेऽद्वैतश्रुतेस्स्याद्व्याहतिस्स्फुटा ॥ ८५४ ॥**

ऐक्यमित्यनुवर्तते । सत्य इति पक्षे **विकल्पयति भेदे इति । तेनैव** ऐक्येनैव । अद्वैतश्रुति किमपि ब्रह्मणो भिन्न न इति प्रतिपादयति । पुन तस्माद्भिन्न ऐक्य अस्तीति प्रतिपादने व्याहति स्फुटा ॥ ८५४ ॥

**प्रतीयोग्यनुयोगिभ्यां निरूप्यस्यानिरूप्यतः ।**
**अमतस्य मताच्छास्त्रबोध्यस्य तदबोध्यतः ॥ ८५५ ॥**

अथैतद्दोषपरिहाराय ऐक्य ब्रह्मस्वरूपमित्युपेयते इति चेद्विरुद्धधर्माधिकरणत्वात्तदपि न घटते इत्याह **प्रतियोगीति ।** ऐक्य ब्रह्मणा अभिन्न इत्यत्र ऐक्य अनुयोगि ब्रह्मप्रतियोगि इत्येवम् । ऐक्य धर्मिप्रतियोगिनिरूप्यम् । ब्रह्म तु अनिरूप्यम् । ऐक्य वेदान्तज्ञानात्प्राणमते । ब्रह्म तु स्वप्रकाशतया मतम् । **तदबोध्यतः** अज्ञेयत्वोपगमात् । इदमुपलक्षणम् । अपर्यायशब्दवाच्यत्व ह्यन्यतरापरिशेष इत्यादिक ग्राह्यम् ॥ ८५५ ॥

**ऐक्यमैक्यस्य घटते कथं युक्तिविदां मते ।**
**तवापि न विरुद्धैक्यं लक्षणापेक्षिणः क्वचित् ॥ ८५६ ॥**

'ऐक्य तयोर्लक्षितयोर्न वाच्ययोर्निगद्यतेऽन्योन्यविरुद्धधर्मिणो' इति तदुक्ते ॥ ८५६ ॥

**विरुद्धांशपरित्यागे न सा जीवेश्वरैकता ।**
**रुणद्धि शैवश्रुत्युक्ता जीवेश्वरभिदा श्रुतिम् ।**
**सा चेन्नास्ति तदाभेदश्रुतेः किं प्रतिबन्धकम् ॥ ८५७ ॥**

परित्यागे नेति पदच्छेद । **सा** चिच्चितोरेकता। **सैव** जीवेश्वरैकतैव। किमित्याक्षेपे। यत्प्रतिबन्धक जीवेश्वरैक्य न स श्रुत्यर्थ । श्रुत्युक्त चिदैक्या न तत्प्रतिबन्धक भिन्नविषयकत्वादिति भाव ॥ ८५७ ॥

**अतो जीवेश्वराभेदो ह्यात्मभिन्नो मृषैव ते।**
**यत्किञ्चिदैक्यस्यैक्ये वा सत्त्वे वा न परस्य भीः ॥ ८५८ ॥**

अत उक्तभेदकार्याणा निर्विशेषब्रह्मवादिना त्वया निर्वाहयितुमशक्यत्वात् ऐक्यस्य ब्रह्मस्वरूपत्वायोगात् ॥ ८५८ ॥

**स्वरूपैक्ये सति घटे पटादिभ्यो न किं भिदा।**
**स्वरूपैक्ये सति परस्वरूपाद्भिन्नतापि न ॥ ८५९ ॥**

स्वस्य स्वस्वरूपेणैक्य नान्यप्रतियोगिक भेद विरुणद्धीत्येतन्निदर्शनेन अन्वयव्यतिरेकाभ्या द्रढयति **स्वरूपेति** ॥ ८५९ ॥

**ताभ्यां व्यावर्तितैक्यस्याप्यैक्यपक्षो न शोभते।**
**तदेव ह्युपलक्ष्यत्वं न चेच्छुष्कैक्यमापतेत् ॥ ८६० ॥**

**ताभ्या** जीवेश्वराभ्या **व्यावर्तितं** उपलक्षित यद् ऐक्य तस्य ब्रह्मणैक्यपक्षोऽपि। **न शोभते** पूर्व दूषितपक्षानतिरेकात् इत्याह **न देवेति** धर्मिप्रतियोगिभावेन व्यावर्त्यत्वमेव। **न चेत्** चिन्मात्रैक्य चेत्। **शुष्कैक्यं** सर्वाङ्गीकृत चिच्चितोरैक्यम्। तच्चाविरुद्धमित्युक्तम्। तदुक्त अनुव्याख्याने 'न व्यावृत्त्या प्रयोजनम्। व्यावृत्तस्याविशेषत्वे' इति ॥ ८६० ॥

**एवं च कथमैक्यं स्यादव्यावृत्ते परात्मनि।**
**व्यावर्त्याव्यावर्त्यताभ्यामेव यत्तौ विरोधिनौ॥ ८६१ ॥**

**ऐक्यं** ऐक्यब्रह्मणो ऐक्यम्। धर्मिप्रतियोगिसापेक्षत्वनिरपेक्षत्वाभ्यामेव तौ ऐक्येश्वरौ विरुद्धधर्माधिकरणौ ॥ ८६१ ॥

**किं चैकं ब्रह्म तद्भावो ह्यैक्यं शब्दविदां मते ।**
**तयोश्च धर्मधर्मित्वात्कथमैक्यं विरुद्धयोः ॥ ८६२ ॥**

**तद्भावः** एकस्य भाव । भावार्थप्रत्ययो हि धर्मधर्मिभाव आह । स च निर्विशेषैक्यवादे दुर्घट इति भावः ॥ ८६२ ॥

**एवं च नैक्यमैक्यस्य तदभावेन तत्त्वता ।**
**अतत्त्वावेदकं शास्त्रममानं तज्जितं परैः ॥ ८६३ ॥**

**तदभावे** ब्रह्मणैक्याभावे तद्भिन्नत्वे इति यावत् । **तत्** ऐक्यबोधकाभिमतशास्त्रस्यामानत्वात् ॥ ८६३ ॥

**विरुद्धैक्ये तु सार्वज्ञपूर्वधर्मा जिजृंभिरे ।**
**निर्गुणोक्तेस्तदेकत्वगुणे नाताडयन्मुखम् ।**
**स्वाभेदसंभवाद्भिन्नगुणाभावार्थतां ददुः ॥ ८६४ ॥**

**जिजृम्भिरे** त्वयैव तदनिराकरणात् । निर्गुण एक चेति व्याहतम् । एकत्वगुणेनैव गुणवत्त्वात् । तद्वदेव सार्वज्ञादिगुणवत्त्वस्याप्युपपत्ते तथा च 'एव धर्मान्पृथक् पश्यस्तानेवानुविधावती'ति श्रुत्युक्तदिशा धर्माणा सत्त्व पृथक्त्वाभाव विशेषबलेन धर्मधर्मिभावादिव्यवहार इत्येव युक्ततममित्याह **स्वाभेदेति** ॥ ॥८६४ ॥

**जडं जगच्च सत्यं स्यात्तदैक्यं चैकतैक्यवत् ।**
**मिथ्याश्रुतेस्तु भेदेनासत्त्वमर्थोस्त्वभेदिषु ।**
**तदभावे तु नैक्यस्याप्यैक्यमित्यतिसङ्कटम् ॥ ८६५ ॥**

**तदैक्यं च** सत्य स्यादित्यनुवर्तते । अय भाव । ऐक्य तावद्विरुद्धधर्माधिकरण जड च । तादृशस्यापि सत्यत्व ब्रह्मणैक्य चेदुपेयते तर्हि जगतोऽप्यविशेषाश्रयाभावोऽभ्युपगम्यतामिति । एव च सर्व खल्विद ब्रह्मेति श्रुति सर्वशब्दस्यासङ्कुचितार्थकत्वेनानुकूलिता स्यात् । 'नेह नानास्ति इति श्रुतिस्तु

भिन्नत्वेनासत्त्व बोधयतु। न चेदैक्यस्य सत्यत्व ब्रह्मणैक्य च न स्यादित्युभयथाऽप्यतिसङ्कटमिति ॥ ८६५ ॥

**यदि चेतनसंबन्धाच्चितोरैक्यं च चिद्भवेत्।**
**तदा जडं जगच्चित्स्यान्न्यायसाम्यान्न चेन्न च ॥ ८६६ ॥**

नैष दोष । ऐक्यस्य चित्सबन्धित्वेन चित्त्वमेव। अत तस्य सत्यत्व ब्रह्मणैक्य चाविरुद्धमिति चेद्धन्त तर्हि न्यायसाम्याज्जगतोऽपि तथाभावाभ्युपगम आपद्यते इत्याह **यदीति** ॥ ८६६ ॥

**विरुद्धैक्यं चान्ततस्तत्स्थानैक्ये पर्यवस्यति।**
**सविशेषब्रह्मवादे नायं दोषो भविष्यति ॥ ८६७ ॥**

स्वमते तत्त्वमस्यादिवाक्यस्य गतिमाह **विरुद्धेति। अन्ततः** मुख्यार्थासभवे अमुख्यवृत्त्या। 'आनन्द ब्रह्मण' इत्यादिकस्यापि गतिमाह **सविशेषेति** ॥ ८६७ ॥

**भेदहीनेऽपि भेदस्य कार्यं स कुरुते यतः।**
**सतस्सापेक्षभेदस्याप्यभेदो भेदिता च नः ॥ ८६८ ॥**

**भेदिता** धर्मधर्मिभावेन भेदव्यवहार ॥ ८६८ ॥

**भेदस्य भिन्नतावादी तत्सत्यत्वं वदेद्यदा।**
**तदा किं दूषणं तस्य सदद्वैतं यतोऽस्य न ॥ ८६९ ॥**

**निर्विशेषब्रह्मवादे सापेक्षनिरपेक्षयोः।**
**जीवैक्यब्रह्मणोरैक्ये दोषस्यास्यास्ति नौषधम् ॥ ८७० ॥**

**भिन्नतावादी** भेदिनोर्भिन्नतावादी तार्किक । **किमिति** अपसिद्धान्ताभावेऽपि अनवस्थादोष वज्रलेप इति भाव ॥ ८६९ ॥ ८७० ॥

**तस्माद्भेदश्रुतेरग्रे नैक्यश्रुतिशतस्य ते ।**
**स्वार्थस्य साधने शक्तिः किमुतान्यस्य बाधने ॥ ८७१ ॥**

**ते श्रुतिशतस्य** तव मते मिथ्याभूतस्य श्रुतिशतस्य वन्ध्यासुतवचस इव साधकबाधकत्वायोगात् ॥ ८७१ ॥

**किं चैकमेवाद्वितीयं नेहनानेति च श्रुतिः ।**
**सर्वं ब्रह्मेति वा क्व स्याद्यतिविश्वस्य बाधिका ॥ ८७२ ॥**

**बाधिका** मिथ्यात्वप्रतिपादनपरा ॥ ८७२ ॥

**तदाभेदपरैवाभून्नाभेदपरता श्रुतेः ।**
**अबाध्यबाध्ययोर्भेदो यतोऽवश्यमपेक्षितः ॥ ८७३ ॥**

**अबाध्यबाध्ययोः** ब्रह्मविश्वयो । एव अभेदप्रतिपादनेऽपि भेदोऽवर्णनीय । तदुक्त वादावल्याम् । 'तद्विरुद्ध तद्भिन्न तदभावो वा नञर्थो वाच्य । पक्षत्रयेऽपि दुष्परिहरो भेद । भेदाभावग्राहिणाऽपि प्रतियोगिविलक्षणतया स्वविषयो व्यवस्थाप्य ' इति ॥ ८७३ ॥

**जीवभेदे त्वभेदाप्त्या बाध्यत्वाशास्तु वा तव ।**
**अभेदो यस्य नैव स्यात्तद्भेदः केन बाध्यते ॥ ८७४ ॥**

कि च तिष्ठतु जीवब्रह्मभेद । जडभेदबाधनस्य तु काऽपि श्रुतिरीष्टे । त्वया जडब्रह्माभेदबोधकत्वस्य कुत्रापि श्रुतावनङ्गीकारात् इत्याह **जीवेति** ॥ ८७४ ॥

**विश्वबाधेऽपि विश्वस्माद्यो भेदो ब्रह्मणि स्थितः ।**
**धर्म्यभिन्नस्य तस्यालं कथं बाधायते श्रुतिः ॥ ८७५ ॥**

किञ्च भेदमात्रबाधन नाद्वैतश्रुते· सभवति ब्रह्मधर्मिकविश्वप्रतियोगिभेदस्य बाधासभवादित्याह **विश्वेति** । तत्र हेतुमाह **धर्मिति** ॥ ८७५ ॥

**धर्मिनाशेऽपि भेदोऽयमविनाशी मते तव।**
**तद्बाध्यजगतो भेदोऽप्यबाध्यस्स्यात्सुखेन ते ॥ ८७६ ॥**

अन्योऽन्याभावस्य त्वया नित्यत्वाङ्गीकाराच्चैव इत्याह । **तवेति** ॥ ८७६ ॥

**अभावद्वैतवादे तेनान्योन्याभावबाधिका।**
**श्रुतिरेषा युक्तबाधो युक्तो नायुक्तबाधनम् ॥ ८७७ ॥**

अभावधर्मा नाद्वैत घ्नन्ति इति मण्डनमिश्रमतमनुरुध्याह **ते इति।** तादात्म्याभावस्यैव भेदत्वादिति भाव । किञ्च बाध्यत्वाबाध्यत्वरूपविरुद्धधर्माधिकरणत्वेन उपपत्तिसिद्ध बाध्याबाध्ययोर्भेदो न बाधार्ह इत्याह **नेति।** अयुक्त उपपत्तिविरुद्ध च तद्बाधन चेति विग्रह ॥ ८७७ ॥

**न चेज्जीवोऽपि बाध्यस्स्यादतो भेदो न चाल्यते।**
**भेदमिथ्यात्वानुमाने ततोऽत्र व्यभिचारिणि ॥ ८७८ ॥**

**न चेत्** उपपत्तिविरुद्धमपि बाधनमङ्गीक्रियते चेत् । जडवज्जीवस्याप्यसत्त्वे मोक्षाभाव स्यादिति खलूपपत्तिविरोधस्तथा सति वाच्य । स च त्वयैवाकिञ्चित्कर कृत इति भाव ॥ ८७८ ॥

**यद्यभेदपरैवेयं श्रुतिस्सर्वा मते तव।**
**तदा जगदबाध्यं स्यान्मिथ्यात्वाशा गता तव।**
**अबाध्या भेदमापन्नः कथं बाध्यो भविष्यति॥ ८७९ ॥**

**यदीति।** उक्त च परेण 'सत्त्वाच्चावरणस्ये'ति सूत्रभाष्ये 'अनन्यदेवकारणात् कार्यमि'त्यवगम्यते । यथा च कारण ब्रह्म त्रिषु कालेषु सत्त्व व्यभिचरति एव कार्यमपि जगत् त्रिषु कालेषु सत्त्व न व्यभिचरतीति । (भे प ब्र. सू पु. २१८) ॥ ॥८७९ ॥

**व्यतिरेकेण चासत्त्वमसत्त्वं चेत्स्मरोदितम्।**
**सत्त्वमव्यतिरेकेण यदि तर्हि न बाध्यता ॥ ८८० ॥**

**व्यतिरेकेणेति।** केनापिरूपेण कालत्रयेऽप्यसत जगतो ब्रह्मव्यतिरेकेणाभाव इति विशेषरूपेण निषेधायोगात्। (भे प २१९) यथाकथञ्चिज्जगतो बाधेऽपि तत्प्रतियोगिकस्य ब्रह्मधर्मिकस्य भेदस्य धर्मिस्वरूपस्य बाधासभवादिति दूषण स्मारयति **स्मरेति** ॥ ८८० ॥

**सर्वैक्यं सर्वबाधं वा सेयं श्रौतपदावली।**
**वदेज्जीवैकता वार्ता नैषु वाक्येषु शोभते ॥ ८८१ ॥**

**श्रौतपदावली।** सामानाधिकरण्येन असङ्कुचितजीवजडात्मकस्य सर्वस्य ब्रह्मैक्यबोधिनी। यद्वा तद्व्यतिरेकेणासत्त्वबोधतात्पर्यकत्वे सर्वस्य बाधबोधिनी। **जीवैकतेति** सर्वशब्दार्थ विभज्य जीवस्याभेद, जडस्य बाध्यत्व इति वार्ता। **न शोभते** सकृदुक्त शब्द सकृदेवार्थमवगमयतीति न्यायविरोधादिति भाव ॥ ॥८८१ ॥

**तत्त्वमस्यादिवाक्ये स्यात्कथा तस्याः कथञ्चन।**
**नञा छिन्नपदा सान्यैर्न त्वदर्थे पदं क्षिपेत् ॥ ८८२ ॥**

**कथा** वार्तामात्रम्। **कथञ्चन** श्वेतकेतुजीवमात्रैक्यबोधकत्वेन। 'अतत्त्वमसीति नवकृत्वोपदेश सदृष्टान्तक' इति तत्त्वनिर्णयोक्ति हृदि कृत्वाऽऽह **नञेति**। छिन्नपदापदच्छेदे कृते सति। अन्यत्र छिन्नपादेति ध्वनि ॥ ८८२ ॥

**तन्महावाक्यराशेस्ते मिथ्यात्वैक्यपरत्वयोः।**
**भेदस्य सत्यता विश्वसत्यता वा भवेद्ध्रुवम्॥ ८८३ ॥**

मिथ्यात्वपरत्वे मिथ्यासत्ययो भेदसत्यत्वम्। ऐक्यपरत्वे ब्रह्मवत्सत्यत्वं इति विवेक ॥ ८८३ ॥

**जीवैक्यमात्रवाक्प्रायः श्रुतौ न श्रूयते क्वचित्।**
**सर्वस्यैक्ये मृषात्वे वा नोक्तदोषद्वयौषधम् ॥ ८८४ ॥**

मात्रेति जडप्रपञ्चाज्जीवान् पृथक्कृत्य तन्मात्रेत्यर्थः ॥ ८८४ ॥

**क्वचिज्जीवैक्यवाक्तत्तद्धर्माणां सत्यतां दिशेत्।**
**विशिष्टैक्येन चेन्मिथ्याभूतधर्मभिदां दिशेत्॥ ८८५ ॥**

परेणानङ्गीकृतत्वेऽपि सभावितत्वेन विकल्प । **सत्यतां दिशेत्** 'निर्दोषश्रुतिसाक्षिभ्यां प्रमिते ब्रह्मजीवयो । सर्वशक्त्यल्पशक्तित्वे मिथ्येति च न युज्यते' इत्युक्तदिशेति भाव । न चैव विरुद्धधर्माधिकरणत्वयुक्तिविरोध । अभेदश्रुत्या युक्तेराभासीकरणात्। **न चेदिति**। धर्माणा मिथ्यात्वमुक्त्वा चिन्मात्रैक्यमुच्यते चेदित्यर्थ ॥ ८८५ ॥

**अद्वितीयमिति श्रुत्या द्वितीयाद्भिन्नतैव हि।**
**सिद्ध्येदनश्व इत्युक्त्या यथाश्वादन्यता गजे ॥ ८८६ ॥**

**अद्वितीयमिति**। तथा च ब्रह्म तृतीय प्रथम वा स्यात्। नञ पर्युशासार्थत्वाश्रयणात्। सुड नपुसकस्य इति सूत्रे 'नार्षेय वृणीते न होतार' इति च श्रुतौ तदर्थस्यैवाश्रयणात्। (न्या २६९) लोकेऽपि निदर्शनमाह **अनश्व इति**॥ ॥८८६ ॥

**अश्वो नेति ह्यनश्वोऽभूद्गजस्तत्पुरुषाज्ञया।**
**बहिरङ्गाद्बहुव्रीहेस्समासः प्रबलो ह्ययम् ॥ ८८७ ॥**

**बहिरङ्गादिति**। श्रौतनञ् द्वितीयपदार्थौ विहाय अन्यब्रह्मपदार्थकात् ॥ ॥८८७ ॥

**द्वितीयाद्भिन्नतैव स्याद्द्वितीयं नेति विग्रहे।**
**न घटोऽयमिति प्रोक्ते घटभेदो यथा पटे ॥ ८८८ ॥**

भिन्नतैव तृतीयत्वादि तथा चैकवाक्यता। प्रसज्यप्रतिषेधार्थकत्वे तु वाक्यभेदापत्ति ॥ ८८८ ॥

**किञ्चाद्वितीयशब्दोऽयं लयस्थब्रह्मगोचरः।**
**अतो जगत्प्रागभावध्वंसो नञ्वक्ति नापरम् ॥ ८८९ ॥**

**द्वितीयध्वंसवद्वा तत्प्रागभाववदेव वा।**
**ब्रह्म स्यान्नहि मिथ्यात्वलब्धिरे तावता तव ॥ ८९० ॥**

**नञो दुराग्रहो नास्ति विरुद्धस्यैव बोधने ॥ ८९१ ॥**

अस्तु बहुव्रीहि। तथाऽपि न मिथ्यात्वसिद्धि। न पूर्वजगद्ध्वस उत्तरजगत्प्रागभाव इत्यर्थकत्वस्यैव ग्राह्यत्वात्। अत्यन्ताभावार्थकत्व तु नैव सभवति। प्रलयेऽपि कालप्रकृत्यादीना सद्भावेन तन्निषेधायोगात् इत्याह **अत इति** ॥ ८८९ ॥ ८९० ॥ ८९१ ॥

**त्रिकालासत्त्वरूपं ते मिथ्यात्वं हि सतः पुरा।**
**लये लीनस्य नैवाभून्नापि पश्चाद् भविष्यतः ॥ ८९२ ॥**

उत्पत्तिविरोधवतो जडतोऽसत्त्व विरुद्धमित्याह **त्रिकालेति**। उक्त हि 'न निरोधो न चोत्पत्तिरि'ति गौडपादकारिकाव्याख्याने परेणैव। सतो घटादे हि उत्पत्तिर्विनाशो वा दृष्ट। नासत शशविषाणादेरिति ॥ ८९२ ॥

**जगच्च सर्वमेतादृगनीदृक्च्छृङ्गमस्ति ते ॥ ८९३ ॥**

**एतादृक्** प्रागभावप्रध्वसयो· प्रतियोगि। **अनीदृक्** अत्यन्ताभावप्रतियोगि। अपहसति **ते इति** ॥ ८९३ ॥

**यदि तस्यैव मिथ्यात्वमाशास्से पशुता तदा।**
**त्वत्तो गतेति जीवैक्यवादो भग्नस्तवैव हि ॥ ८९४ ॥**

अद्वितीयपदस्य ममशृङ्गत्यन्ताभाव एवार्थोऽस्त्वित्यत आह **यदीति।** शृङ्गवत पशो शृङ्गरहितेन त्वया विरुद्धधर्माधिकरणत्वेन भेदप्राप्त्या पशुजीवस्य त्वयैक्यासिद्धि । सा च तव जीवैक्यवादिन सिद्धान्त इत्याह **भग्न इति** ॥ ८९४ ॥

**अग्रशब्दोक्तकालस्य सत्त्वात्तत्समयेऽपि च।**
**द्वितीयशून्यं तद्ब्रह्म न तदा नान्यदाऽप्यभूत्॥ ८९५ ॥**

कालस्येत्युपलक्षणम् । 'सलिल एको द्रष्टा' इति सलिलस्य 'तदैक्षत नामरूपे व्याकरोदि'ति ईक्षणनामरूपात्मकप्रपञ्चस्य तत्रैव पूर्वोत्तरवाक्यै सत्त्वावगमादित्यपि द्रष्टव्यम् (न्या २६६) ॥ ८९५ ॥

**स्वासिनैव स्वयं छिन्नः कालस्य कुटिला गतिः।**
**यत्स्वाभिमतवाक्येन स्वस्यैवाभूत्पराभवः ॥ ८९६ ॥**

**स्वासिना** स्वपक्षसाधकतयोदाहृतवाक्यगतेन अग्रे इति पदेन प्रतिपाद्यकालाख्यद्वितीयवस्तुना । अहो बत अनर्थकरोऽय कालो मायिन इत्याह **कालस्येति** ॥ ८९६ ॥

**नष्टिर्महदवज्ञायामर्थस्य स्यात्पदे पदे।**
**यदच्युतस्य नीचैक्यवादैः कुप्येत्पदावली ॥ ८९७ ॥**

**महदवज्ञायां** ब्रह्मणो नीचजीवैक्यबोधनेन निन्दायाम्। **पदे पदे** अग्रसलिलाद्वितीयादिपदबोधितस्य **अर्थस्य** कालादिकस्य **नष्टिः** अपलाप । अन्यत्र प्रतिपद वित्तनाश ॥ ८९७ ॥

**नेह नानेति वाक्यं च नानाभूतं न किञ्चन।**
**ब्रह्मणीत्याह तेनैक्यं सर्वस्य जगतो भवेत् ॥ ८९८ ॥**

**अनृतस्य जडस्यास्य सर्वस्यैक्यं तवापि न।**
**किञ्चनेति पदस्यार्थश्चिन्मात्रं न कथञ्चन ॥ ८९९ ॥**

नेहनानेति वाक्यस्य सिद्धान्तार्थ प्रतिपिपादयिषु तत्परिशुद्धये पराभिमत अनूद्य दूषयति **नेहेति**। किञ्चनशब्दस्य जगदित्यर्थ पराभिप्रेत । तत्र नाना नास्तीति ब्रह्मणा जगत ऐक्यमुच्यते उत नास्तीति स्वरूपतो मिथ्यात्वम्। **नाद्यः** तथा सति **सर्वस्य** चेतनाचेतनस्य ऐक्य बोधित भवेत् तच्च चिन्मात्रैक्यवादिनस्तवापि नेत्याह **अनृतेति** असङ्कुचितस्य किञ्चनेति पदस्य चिन्मात्रमर्थो नैवेत्याह **कथञ्चनेति**॥ ॥८९८ ॥ ८९९ ॥

**अतो नैक्यश्रुतिरियं नापि मिथ्यात्ववादिनी।**
**नानापदेन चेहेति पदेन च विरोधतः ॥ ९०० ॥**

मिथ्यात्वमपि नैतच्छ्रुत्यर्थ सभवतीत्याह **नापीति**। तथात्वे किञ्चन नास्तीत्येतावता पूर्तेऽर्नानापदस्य इहपदस्य च वैयर्थ्यापातादित्याह **नानेति**॥ ॥९०० ॥

**अभिन्नसत्त्वमन्यत्र सत्त्वं वा यत्तयोर्मतम्।**
**अतस्स्वगतधर्मेषु स्वावतारेषु किञ्चन।**
**नानाभूतं नेति हरेस्तैरैक्यं वक्ति वागियम् ॥ ९०१ ॥**

न केवल वैयर्थ्य विरोधश्चेत्याह **अभिन्नेति**। विशिष्टनिषेध सति विशेष्ये बाधे विशेषणमुपसक्रामतीति न्यायेन 'न जीर्णमलवद्रासा स्नातक स्यात्' इत्यत्रेव नाना नास्तीत्युक्ते अभिन्नसत्त्वस्य इह नास्तीत्युक्तेऽन्यत्र सत्त्वस्य च प्राप्तेरित्याह **मतमिति**। अत किञ्चनशब्द॰ प्रकृतधर्मादिपर एव सर्वनामत्वात्। तदुक्त न्यायामृते वाक्यशेषस्थधर्माख्यविशेषे पर्यवस्यति। किञ्चनेति हि शब्दोऽयमक्ताशब्दो घृते यथेति। **तैरैक्यं** = धर्मैरवतारान्तर्याम्यादिरूपैरैक्यम्॥ ९०१ ॥

**घटेन जलमित्युक्तिर्यथा तद्गं जलं क्षिपेत्।**
**नेहनानेति वाक्तद्वत्स्वगतं भेदमाक्षिपेत् ॥ ९०२ ॥**

यद्वाऽत्र नानाशब्दो हि नानात्वार्थ । भावप्रधानत्वात् । 'लोके च नानाशब्दस्य पृथग्भाववाचित्वादिति कैयटोक्तेश्च । तथा चेहपदसमभिव्याहारेण घटेन जलमित्यत्रेव स्वगतभेद एव निषिध्यत इत्याह **घट इति** ॥ १०२ ॥

**अतः काचन नानेह नेत्यर्थो वा भवेच्छ्रुतेः ॥ १०३ ॥**

नाना भिदा । काचनशब्दस्तु गुणगुण्यवयवावयव्यादिप्रयुक्तानेक-नानात्वाभिप्राया ॥ १०३ ॥

**अथवा नेहनानेति प्रतिषिध्य भिदां हरौ ।**
**भेदव्यवहृतेरस्ति किञ्चनालंबनं त्विति ।**
**श्रुतिर्विशेषमाचष्ट पदस्वारस्यसंपदा ॥ १०४ ॥**

अत्र वाक्यद्वयम् । 'नेहनाना' इति भाग स्वगतभेद निषेधति । 'किञ्चन अस्ति' इति च भेदव्यवहारनिर्वाहक विशेषाख्य पदार्थसामर्थ्यमस्तीति विधत्ते इत्याह **श्रुतिरिति** ॥ १०४ ॥

**नेहनानेतिवाक्याच्च यदि नास्त्येव ते जगत् ।**
**असत्यात्पारमार्थ्येन नास्तीति तु पदान्तरम् ॥ १०५ ॥**

**कुतोऽध्याह्रियते तर्हि भ्रान्त्येति पदमाहर ।**
**एवं सर्वस्य जगतोरक्षयाभैक्षवान्भव ॥ १०६ ॥**

किञ्चानेन वाक्येन किं जगत स्वरूपेण निषेध । उत पारमार्थिकत्वाकारेण । नाद्य अपसिद्धान्तादित्याह **असदिति** । न द्वितीय । अध्याहारदोषात् इत्याह **कुत इति** । उक्त हि परेणैव 'न हि अक्षरबाह्यो वाक्यार्थ' इति । अध्याहारोऽपि पूर्वोत्तरानुगुण्येनैव भवेत् । तथा च 'भ्रान्त्या' इति पदाध्याहार एव युक्त इत्याह **तर्हीति** । एव अन्नादे सत्त्वेन कपटभिक्षोस्तव भिक्षाऽपि वा लभ्येतेत्याह **एवमिति** वस्तुतस्तु पारमार्थिक नास्तीत्युक्तौ व्यावहारिकमस्तीति लभ्यते । तच्च व्याहतम् । व्यावहारिकत्व नाम कालत्रयेऽप्यसत्त्वरूपबाध्यत्वमेवेति त्वयोररीकारेण पुन

अस्तीत्युक्तौ भिक्षोस्तव कापट्यमाविष्कृत भवेत्। तेन च शिक्षार्हत्वमेव नत्वेव भिक्षाऽर्हत्वमिति ध्येयम् ॥ १०५ ॥ १०६ ॥

**यदेवेह तदेवामुत्रेत्याद्यं वाक्यमीशितुः।**
**अवतीर्णस्य वैकुण्ठवासिनश्चाभिदां जगौ ॥ १०७ ॥**

**तद्भेददर्शनस्यानर्थोक्त्या सैव न्यवारयत्।**
**भेदाभेदनिवृत्त्यर्थं भिदां तस्य परात्मनः ॥ १०८ ॥**

स्वमते उपक्रमानुगुण्य त्रिभिराह **यदेवेति** अत्र पूर्ववाक्ये इहेति भूलोकस्य अमुत्रेति परलोकस्य च सत्त्वमुक्त्वा तद्गतरूपयोरेव भेदनिषेध। लोकयोरेव निषेधाभिप्राये इद च अदश्चन इति वाक्यविन्यास स्यात्। **सैव वाक्** 'मृत्यो स मृत्युमाप्नोति' इति वाक्यशेष। भिदा न्यवारयत् इत्यन्वय ॥ १०८ ॥

**तत्रापि कारणं वक्तुं नेहनानेति वाक्पुनः।**
**तद्भेदमाक्षिपच्चेति युक्तं प्रक्रमविक्रमात् ॥ १०९ ॥**

कुतो 'भेददर्शनमनर्थकरमित्यत भेदस्यासत्त्वादेवेति कारणोक्तिपर नेहनानेति वाक्य इति सङ्गतिं विशदयति **तत्रापीति** ॥ १०९ ॥

**अतो भेदस्य मिथ्यात्वादेव धर्मेषु भेददृक्।**
**विनिन्दिता यतो नास्तीत्यादौ सैव तमच्छिनत्॥ ११० ॥**

अतो भेदस्यासत्त्वेन तद्दर्शनस्य मिथ्याज्ञानत्वादेव अनर्थकरत्वम्। न तु पुन यथा 'न नग्ना स्त्रियमीक्षेत' इत्यत्र दर्शनमात्रस्य अनर्थकरत्व न तु स्त्रिय स्वरूपेण निषेध; न तथात्र किन्तु स्वगतभेदस्यैव स्वरूपेण निषेध इत्याह **सेति** नेहनानेति श्रुतिरेव **तं** भेदम्। एवमेव 'एव धर्मान् पृथक्पश्यन् तानेवानुविधावती'त्यपि धर्मभेदस्यैव स्वरूपेण निषेधो न तु दर्शनमात्रस्य निन्देति अवतारभेदमिव धर्मभेदमपि निषेधता नेहनानेति श्रुत्यैव ज्ञायते ॥ ११० ॥

**ईशानो भूतभव्यस्येत्युपसंहार वा क्व ते ।**
**अनीशजगदद्वैतं भिनत्तीति मतिर्मम ।**
**तत्रैव तादृगेवेति यत्फलोक्तिश्च भेदवाक् ॥ १११ ॥**

**अनीशेति** विरुद्धधर्मस्फोरणाय । **भिनत्ति** बाधते । **तादृगेव** तत्सदृशमेव । सादृश्य च भेदव्याप्तमिति मोक्षेऽपि भेद तत्पारमार्थिकत्व च सिध्यति । तथा च न क्वापि श्रुतेरभेदोऽर्थ ॥ १११ ॥

**किं च नास्तीत्यभावस्य वर्तमानत्वमात्रता ।**
**कीर्त्यतेऽतस्त्रिकालस्थाभाववार्तापि नात्र ते॥ ११२ ॥**

**मिथ्यात्र परता तस्मादस्मिन्वाक्ये न शोभते॥ ११३ ॥**

**वार्तेति** कालत्रयवृत्त्यभावबोधकपदाभावादेवेति भाव ॥ ११२ ॥ ११३ ॥

**यदस्ति तत्कथं नास्ति ततो ब्रह्मणि यच्छ्रुतम् ।**
**जडं जगदभेदानर्हं च गर्ह्यात्र तत्कथा ॥ ११४ ॥**

'यस्मिन्निद स च विचैधि सर्व' इति सर्वस्य जगतो ब्रह्मणि अस्तित्व श्रूयते । एव 'यस्मिन्देवा अधिविश्वे निषेदुरि'ति देवाना ब्रह्मण्याश्रितत्व च । अतो नेहनानेति श्रुति॰ तद्विरोधेन ब्रह्मणि जगतो नास्तित्व कथ ब्रूयात् । अत्र उच्यमानाभावप्रतियोगी स्वगतभेद न तु जगत् तद्भेदो वा इत्याह **जडमिति** ॥ ११४ ॥

**अस्तित्वस्यानृतत्वेन नास्तित्वघटना यदि ।**
**तर्ह्यन्योन्याश्रयो दोषो हन्यादन्यायवादिनम् ॥ ११५ ॥**

**अस्तित्वस्यानृतत्वे स्यान्नास्तित्वघटना तव ।**
**नास्तित्वघटनायां स्यादस्तित्वस्यानृतात्मता ॥ ११६ ॥**

ननु पूर्वोत्तरवाक्योक्त अस्तित्व अनृत अतो न तावद्विरोधो नास्तित्वबोधकस्येति चेदन्योन्याश्रय स्यादित्याह **तर्हीति** । **अन्यायवादिनं** मायिन

तदुदित मिथ्यात्वबोधकशब्द वा । **हन्यात्** दूषयेत् अन्यार्थतया व्यवस्थापयेद्वा । अन्योन्याश्रयमुपपादयति **अस्तित्वस्येति**। न चैव वैपरीत्य शङ्क्यम् । पूर्वोत्तरवाक्याना सुबहुत्वेन निरवकाशत्वेन प्रमाणान्तरसवादित्वेन च प्रबलत्वात् । न हि पञ्चानन शशशावकाभावमपेक्ष्य वनमवगाहत इति भाव ॥ ९१६ ॥

**अतस्सारूपभेदस्य धर्मभेदस्य वा हरौ ।**
**निषेधाय प्रवृत्तेति प्राञ्चोर्थं चोदयन्ति नः ॥ ९१७ ॥**

**हेत्येतत्पदं नोचेन्नेह स्यादिति मे मतिः ।**
**नानापदं चान्यथा स्यान्नानानर्थप्रदं तव ॥ ९१८ ॥**

**रूपभेदस्य** अवतारादिरूपभेदस्य ॥ ९१७ ॥ ९१८ ॥

**अथाऽपि जगदर्थत्वे यदि तेऽस्ति महान्भरः ।**
**तर्हि किञ्चन नेहास्ति किन्तु सर्वं च नः प्रभौ ।**
**सर्वाधारे हरावस्तीत्यर्थोस्त्वतिमनोहरः ॥ ९१९ ॥**

**जगदर्थत्वे** किञ्चनशब्दस्येति उपस्कर्तव्यम् । **इह** पृथिव्यादौ । **सर्वाधारे** 'पृथ्वी त्वया धृता लोका देवि त्व विष्णुना धृता । इमा प्रजा सदायतना सत्प्रतिष्ठा ' इत्यादिवचनात् मूलत आधारे । विशिष्य निषेध शेषविध्यनुज्ञापक इति न्यायादेवेति भाव ॥ ९१९ ॥

**ब्रह्माहमस्मीति वाक्ये कथमैक्यभ्रमस्तव ।**
**सुपांसु(रि)लुगितिसूत्रेण प्रथमा सप्तमी यतः ॥ ९२० ॥**

**ऐक्यभ्रमः** सर्वेषा पदाना लक्षणया चिन्मात्रपरत्वाश्रयणेन । मुख्यवृत्त्यैव सकलप्रमाणानुगुणार्थसभवादित्याह **सुपां सुलुगिति** ॥ ९२० ॥

**अतो ब्रह्मणि वर्तेऽहमित्यर्थे शास्त्रसंमते ।**
**सति सर्वविरुद्धैक्ये न क्वचिद्विभ्रमं करु ॥ ९२१ ॥**

**ब्रह्मणि** इति यथा मनो ब्रह्मेत्यभेदोक्ति मन प्रतीकत्वेन ब्रह्मोपासनाविधायिका न तु मनसो ब्रह्मतादात्म्यबोधिका तथाऽत्रापीति (भेप १४) ॥ ९२१ ॥

**किञ्च चिन्मात्रयोरैक्ये कार्यं द्विपदशिक्षणम् ।**
**खञ्जवद्वा चरेत्स्वार्थे वाक्यं तत्रैकरक्षणे ॥ ९२२ ॥**

यद्वा केवल सामानाधिकरण्य 'तत्त्वमसी' इत्यत्रेव सादृश्यैक्यपरमस्तु । सिहस्याध्ययन इत्यत्रेव सिहसदृशस्येति प्रातिपदिकस्यैव गौणार्थताऽऽश्रयणेऽपि, तवेव पदद्वयस्य चिन्मात्रे गौण्यपेक्षया जघन्यालक्षणावृत्तिर्मास्तु । लोकन्यायोऽप्येव रक्षित स्यादित्याह **खञ्जवदिति** ॥ ९२२ ॥

**अतो ब्रह्माभिसंबन्धाद्ब्रह्मशब्दोऽस्तु जीवगः ।**
**अहं ब्रह्मनियम्योऽस्मीत्यर्थश्च त्वखिलप्रियः ॥ ९२३ ॥**

**अङ्गीकृत्येदमुदितं वस्तुतस्त्वनुशासने ।**
**अनुशिष्टार्थकथनात्स्वार्थत्यागो न मे क्वचित् ॥ ९२४ ॥**

यद्वा सामानाधिकरण्य स्वातन्त्र्यैक्यपरमस्तु । लक्षणया ब्रह्मनियम्य इत्यर्थो वाऽस्तु । **अनुशिष्टेति** 'सप्तसु प्रथमा', 'सुपा सुलुगि'त्यादिना इति भाव । यद्वा 'ब्रह्मणि जीवा सर्वेऽपि परब्रह्मणि मुक्तिगाः । प्रकृति परम ब्रह्म परम महदच्युत ' इति श्रुत्या तथा बृह जाति जीवकमलासनशब्दराशिषु इत्यभिधानाच्च ब्रह्मशब्दोऽत्र जीवपरोऽस्तु । ईश्वरस्तु परम महद् ब्रह्म भवतु । 'परम ब्रह्म वेद ब्रह्मैव भवति' इत्यादौ तथैव तत्त्वनिर्णयादौ व्याख्यानादित्यपि ध्येयम् ॥ ९२४ ॥

**हिरण्यशृङ्गं वरुणं प्रपद्ये स पुनातु माम् ।**
**इत्यर्थनं च तत्रोक्तं गच्छेद् ब्रह्म स लोकताम् ।**
**इत्युक्तब्रह्मसालोक्यं मुख्यैक्ये न हि शोभते ॥ ९२५ ॥**

अत्राघमर्षणमन्त्रे ब्रह्मशब्दस्य जीवपरत्व परीक्षयाऽवधारयति **हिरण्येत्यादिना**। तथा हि उपक्रमे प्रपद्ये इति शरणागति, पुनात्विति शुद्धिप्रार्थनम्। सालोक्यरूप फल इत्येतत् **मुख्यैक्ये** परब्रह्मणा स्वरूपैक्ये **न हि शोभते**। अत तत्रस्थस्य 'ब्रह्माहमस्मी' इति वाक्यस्य स्वरूपैक्य अर्थो नैव सभवति ॥ ९२५ ॥

**अहमेवाहमित्यन्यात्मतामन्ते प्रतिक्षिपन्।**
**जीवो ज्योतिः पुरार्द्रोहमित्येवोक्त्वा स मज्जति।**
**यद्वर्हि जाति जीवादावनुशास्ति स पाणिनिः॥ ९२६ ॥**

अहमेवाह मा जुहोमि स्वाहा इत्युपसहारवाक् जीवान्यब्रह्मणि 'अहमित्येव यो वेद्य स जीव इति कीर्तित । स दु खी स सुखी चैव स पात्र बन्धमोक्षयो ' इत्यत्र निरुक्ताहपदवाच्यत्व व्यवच्छिनति। पार्थ एव धनुर्धर इत्यत्रेव विशेष्यसङ्गतत्वात् एवकारस्य। स्वरूपैक्ये मज्जनक्रियाया जुहोमि इति पापक्षालकहवनस्यानुपपत्ते । तदेतदाह **अन्त इति**। 'आर्द्र ज्वलति ज्योतिरहमस्मि' इति **पुरा** पूर्ववाक्ये ॥ ९२६ ॥

**आर्द्रं तीर्थांबुनि स्नातं रूपं मेऽघविवर्जितम्।**
**ज्वलत्यनलवत्तेन ज्योतिरस्मीति चाब्रवीत् ॥ ९२७ ॥**

तद्व्याख्याति **आर्द्रमिति** ॥ ९२७ ॥

**परंब्रह्म परंज्योतिः परार्द्रो यः कृपार्णवे।**
**नासावहमिति प्राह योऽसौ स्वस्याघमर्षणः ॥ ९२८ ॥**

'परब्रह्म परधाम', परज्योतिरुपसपद्य, इत्यत्रोक्त, **कृपाऽर्णवे** अपरिमितकारुण्यगुणे **आर्द्रः** नित्यसबद्ध तत्स्वरूप इति यावत्। **असौ** नारायण **न अहं** ब्रह्माहमस्मीत्यत्र अहपदतात्पर्यविषयो नैव। तत्र हेतु **स्वस्येति**। न जातु पापिना तत्परिहारकस्यैक्य सङ्घाघटीतीति भाव ॥ ९२८ ॥

**किञ्चाहमर्थो नात्मा ते ब्रह्माहमिति वाक्ततः।**
**जडाहंकृत्यैक्यमाह न जीवैक्यं भवन्मते ॥ ९२९ ॥**

**अनात्मा** चिदचित्सवलनात्मकोऽहङ्कार न जीव । यथाऽऽह 'अथात अहङ्कारादेश अथात आत्माऽऽदेश' इति श्रुतौ पृथगुपदेशात्' इत्यादि । (न्या १७०) ॥ १२९ ॥

**मानसाहंकृतेरारोपाधिष्ठानचितैव हि ।**
**सिद्ध्येल्लक्षणयाऽप्यैक्यं न तु जीवचिता सह ॥ १३० ॥**

ननु सवलनात्मकवाचकस्य एकदेशचिति लक्षणाऽऽश्रीयते इति चेत् एवमपि चितैव ब्रह्मैक्य सिध्येत् न तु जीवेनेत्याह **मानसेति** ॥ १३० ॥

**मणिं सूत्रनिरूढं च त्यक्त्वा कः काचमाश्रयेत् ।**
**कथं शक्रस्य पदवीं भिक्षुको रोढुमिच्छति ॥ १३१ ॥**

**सूत्रनिरूढं** पाणिन्यादिसूत्रससिद्धम् । **मणिं** ब्रह्माधीनोऽह इत्येवरूप निर्दोषमर्थम् । **कः** कुत्सित एव आश्रयेत् न तु प्रेक्षावान् । **यद्वा सूत्रनिरूढं** सूत्रतात्पर्यविषय **मणिं** प्रधानम् । 'मणिर्मुख प्रधान' चेत्यभिधानात् । विष्णोर्गुणोत्कर्ष परमपुमर्थप्रदम् । **काचं** अधम अधमगतिहेतु 'ईश्वरोऽहिं' इत्यर्थम् । 'ततो यान्त्यधमा गतिम्' इति स्मृते- । अत्र अर्थान्तर न्यस्यति **कथमिति** इच्छन्वा अध पततीति भाव । 'अयोग्यमिच्छन् पुरुष पतत्येव' इति स्मृते ॥ १३१ ॥

**यतस्तदात्मानमेवावेदित्यवदधारवाक् ।**
**अहंब्रह्मास्मीतिवाक्यं ब्रह्मवाक्यतया स्फुटम् ॥ १३२ ॥**

**अतस्सा केवलं तस्यै कस्यैव ब्रह्मता वदेत् ।**
**अन्ययोगव्यवच्छेत्त्री हन्यादवधृतिर्न चेत् ॥ १३३ ॥**

**तत्** ब्रह्म, **आत्मानं एव** न त्वन्य जाव, **अवत्** अजानात् ज्ञानप्रकारमाह **अहमिति** । **अवधृतिः** आत्मानमेव इति विशेष्यसङ्गत एवकारः ॥ १३३ ॥

**विशेष्यसङ्गतस्यैवकारस्य बुधमण्डली ।**
**अन्ययोगव्यवच्छेदमर्थं यत्प्रत्यपद्यत ॥ १३४ ॥**

**विशेष्येति** विशेष्यताऽवच्छेदकानवच्छिन्ने विशेषणसबन्धव्युदासार्थत्वस्य पार्थ एव धनुर्धर इत्यादौ दर्शनात् ॥ १३४ ॥

**अतो जीवब्रह्मतायां न तां युञ्जीत बुद्धिमान् ।**
**यत्तेष्वब्रह्मताप्यर्थात्प्राप्ता तद्भेदवागियम् ॥ १३५ ॥**

**अर्थात्** जीवस्य ब्रह्मत्व विद्यते चेत् सर्वज्ञ ब्रह्म तज्जानीयात् । न तथा ज्ञातवत् । अतस्तत्रास्त्येव । पश्यन् वै तत्र पश्यति । न तु 'तदस्ती'ति श्रुते । इति उपपत्तिबलात् ॥ १३५ ॥

**ऋषयोनुवदन्त्येतां प्रभोर्वाक्यत्वतः क्वचित् ।**
**मत्तः परतरं नास्तीत्यादिवाक्यानुवक्तृवत् ॥ १३६ ॥**

**ब्रह्मवाक्यत्वतः** ल्यब्लोपनिमिता पञ्चमी । ब्रह्मवाक्यत्व अनुसन्धाय । न चानुवादो निष्फल भेदबुद्धिदार्ढ्यार्थत्वात् । तत्र दृष्टान्त **मत्त इत्यादि** ॥ १३६ ॥

**सोऽहमित्यादिवाक्यस्याप्येवमेव गतिर्भवेत् ।**
**यो वेत्ति वेदमर्यादां तद्धीत्यै नेदृशं वचः ॥ १३७ ॥**

**मर्यादा** 'पूर्वोत्तराविरुद्धो मानान्तराविरुद्धश्च शास्त्रार्थ' इत्येवरूपाम् । जहदजहल्लक्षणा अप्रामाणिकी निर्मूला चेति च ॥ १३७ ॥

**सर्वं ब्रह्मेति वाक्याच्च किं जडब्रह्मताऽपि ते ।**
**बाधात्ततस्तु सङ्कोचे जीवादप्यस्तु बाधितात् ॥ १३८ ॥**

**बाधितात्** ब्रह्मैक्यादिति शेष । नाह निर्दुःख इत्यत्रापि साक्षिप्रत्यक्षादिसकलप्रमाणबाधितात् ॥ १३८ ॥

**इदं पदार्थो हि जडमनिदं ब्रह्म ते मते ।**
**अतो जडपरित्यागे पदं तद्धि प्रकुप्यति ॥ १३९ ॥**

**इदं पदार्थ इति** अन्तवन्त इमे देहा इतिवन्निर्देष्टुमर्ह पराक् पदार्थ । **अनिदं** प्रत्यग्भूतम् । तथा च सर्व खल्विद ब्रह्मेति वाक्ये इद च पररीत्यैव परस्य दूषणम् । वस्तुत सर्वनामशब्दस्य बुद्धिसन्निहितपरामर्शकत्वमेव ॥ १३९ ॥

**जडस्य चैक्यं मुख्यं न ततोऽन्यार्थस्तवापि हि ॥ १४० ॥**

**मुख्यं न** । किन्तु आरोपितत्वरूप अप्रामाणिकम् ॥ १४० ॥

**यतस्सर्वं समाप्नोषि तत्सर्वोऽसीति भारते ।**
**गीतोक्तिस्तद्बलात्सर्वव्यापिदैवार्थ ईर्यताम् ॥ १४१ ॥**

तथा च गुणसौरभोक्तरीत्या व्याप्त्यैक्यमेवात्रार्थ उचित इत्याह **सर्वेति** ॥ ॥१४१ ॥

**ऐन्द्रं व्याकरणं यस्य मूलरूपं न्यरूरुपत् ।**
**स पार्थश्शब्दशक्तिज्ञश्शक्तिज्ञो(तः)श्च परात्मनः ॥ १४२ ॥**

इन्द्रावतारस्य व्याकरणप्रणेतु पदपदार्थरूपसबन्धिद्वयस्वरूपपरिज्ञानवत शक्तिरूपसबन्धोपदेश शिरसा मान्य इत्याह **ऐन्द्रमिति** ॥ १४२ ॥

**तज्जलानिति शान्तस्सन्नुपासीतेति पूर्ववाक् ।**
**उपास्योपासकत्वं हि प्राह तच्च कथं तव ॥ १४३ ॥**

**जीवहत्येव लक्ष्यत्वे पदयोस्सुविरुद्धता ।**
**चिन्मात्रस्य तु लक्ष्यत्वे व्यर्थं सर्वपदं तव ॥ १४४ ॥**

तस्माज्जायते, तस्मिंल्लीयते तेनानिति इति सृष्टिस्थित्यादिकारणत्वेन उपासनाविधायक तज्जलामिति उत्तरवाक्यम् । एव **पूर्ववाक्** तदेतद्दृष्ट च श्रुत

चेत्युपासीत इति उपासनाविधायिका। तन्मध्यपतित सर्व खल्विति वाक्य कथ अभेद बोधयेदिति भाव। तस्माद् द्वैतवाक्यमध्यस्थमद्वैतवाक्यमुपाशु-याजवाक्यमध्यस्थविष्णवादिवाक्यवत् पूर्वोत्तरद्वैतवाक्यानुसारेण ज्ञेयम् (न्या २६७) ॥ १४४ ॥

**यदि सर्वभ्रमाधिष्ठानत्वं सर्वपदोदितम्।**
**तदा मुख्यार्थसन्त्यागस्सर्वाधिष्ठानतैव च ॥ १४५ ॥**

**अर्थोऽस्तु लाघवान्मध्ये भ्रमः कस्मान्निवेश्यते।**
**पूर्वश्रुतावुक्तसूत्ररीत्या वाऽर्थो भविष्यति ॥ १४६ ॥**

**मुख्यार्थेति** त्वदभिमतस्वरूपैक्यरूपेत्यर्थ। सर्वाधिष्ठानतैव अर्थोऽस्तु इति उत्तरश्लोकस्थेनान्वय। **लाघवादिति।** अन्यथालक्षणाया भ्रमस्य चेत्यनेकाप्रामाणिककल्पनाऽऽपत्त्या गौरव स्यादित्याशय। अस्मत्पक्षे तु पूर्वोक्तरीत्या सुपासु लुगित्यादिसूत्रानुसारेण मुख्य एवार्थ इति न किञ्चित्कल्प्यमिति भाव ॥ १४५ ॥ १४६ ॥

**सप्तसु प्रथमा यस्मात्क्लृप्ता वेदेषु वैदिकैः।**
**तस्मादद्वैतवाक्यानां लक्षादपि न भीर्मम ॥ १४७ ॥**

**अद्वैतवाक्यानां** सामानाधिकरण्यगर्भितानाम्। द्वैतवाक्याना तद्विरोधापत्ति-रूपा भी न। द्वैतवाक्याना निरवकाशत्वात्। अद्वैताभिमतवाक्याना अधिकरणार्थे सावकाशत्वाच्चेति भाव ॥ १४७ ॥

**यथाश्रुतपदस्यार्थस्यायोगे पूर्वयोगिभिः।**
**व्यत्यासशासनान्नातिप्रसङ्गो यत्र कुत्रचित् ॥ १४८ ॥**

वाक्यस्य याथार्थ्यरक्षणार्थ, 'व्यत्ययो बहुल छन्दसि' इति सूत्रोक्तविभक्त्यर्थादिव्यत्यय शास्त्रविहित इत्याह **यथाश्रुतेति।** एवरूपो व्यत्ययश्च प्रागुक्तस्थले क्वचिदेव न सर्वत्रेति नातिप्रसङ्ग इत्याह **नेति** ॥ १४८ ॥

**अतस्तवायुधं सर्वं बलान्नीतं परैर्युधि ॥ १४९ ॥**

सामानाधिकरण्य हि स्वरूपैक्यमभिलषतस्तवायुधम् । तच्च अनेकधा सावकाशितम् । भेदपरतयैव च समर्थितमिति अहो निरायुधस्य भटस्य दुर्दशेत्याह **अत इति** ॥ १४९ ॥

**यदेकज्ञानतस्सर्वविज्ञानं च श्रुतौ श्रुतम् ।**
**अतोऽपि न परात्मैक्यं सिद्ध्येदद्वैतवादिनाम् ॥ १५० ॥**

उद्दालकेन पुत्रमदापनिनीषया 'उत तमादेशमप्राक्ष येनाश्रुत श्रुत भवति इति त प्रति, चोदना कृता । अनेन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानेन सर्वस्य जगतो ब्रह्मणाऽभेद सिध्यतीति परप्रक्रिया । ता दूषयति **यदिति** ॥ १५० ॥

**यदि स्याद्ब्रह्मविज्ञाने ज्ञेयं जगदिदं च ते ।**
**तदा शङ्कावकाशः स्यान्नैवं किल भवन्मतम् ॥ १५१ ॥**

इद चानुपपत्त्या अभेदगमक इति परस्याशय । न च स युक्त । अस्या अर्थापत्ते सर्वाङ्गविकलत्वादाभासत्वमिति वक्तु आदौ तावदाक्षेपकस्य प्रमितत्वसिद्धिमाह **यदीति** ॥ १५१ ॥

**निष्प्रकारकचिन्मात्रनिर्विकल्पकदृक्तव ।**
**ब्रह्मदृग्जगतोऽज्ञानं तदा कस्यास्ति कथ्यताम् ॥ १५२ ॥**

एकब्रह्मविज्ञानेन सर्वविज्ञान आक्षेपक सर्वस्य ब्रह्मणैक्यमाक्षेप्यम् । तत्राक्षेपकस्य प्रमितत्व अन्यथाऽनुपपद्यमानत्व चेति अङ्गे । आक्षेप्यस्य प्रमाणाविरुद्धत्व तदुपादकत्व चेति । तत्र आक्षेपक पररीत्येनासिद्धम् । मुमुक्षु श्वेतकेतु प्रति मोक्षहेतुभूत ब्रह्मज्ञान खल्वत्रोपदिष्यते । तच्च वेदान्तजन्यचरमवृत्तिज्ञानमेव । यदाह 'श्रुतमयेन ज्ञानेन तत्त्वमभिधाय चिन्तामयीमवस्थामवलम्बमानस्यान्त करणपरिणामात्मक वृत्तिरूप ज्ञानमुपजायते तेन भवेदविद्यानिवृत्तिरिति । (वादा) तादृश च ज्ञान ब्रह्मप्रातिपदिकमात्रविषयक

निष्प्रकारकमेव परस्याखण्डार्थवादिनो मत इत्याह **तव ब्रह्मदृगिति** । जगत इति भिन्न पदम् । तस्मिन् ज्ञाने जगत प्रकारतया भानासमतेरेवेत्याह **तदेति** ॥ ९५२ ॥

**अपि चारोपितज्ञानं नाधिष्ठानस्य दर्शने ।**
**अतोऽपि न जगज्ज्ञानं ब्रह्मज्ञानं भवन्मते ॥ ९५३ ॥**

**चरमब्रह्मविज्ञानप्रशंसार्थं खलु श्रुतिः ।**
**अर्थवादमिमं वक्ति ततश्चरममेव तत् ।**
**वाच्यं त्वयैकविज्ञानं कथं तत्रान्यदर्शनम् ॥ ९५४ ॥**

**अपि चेति** भवन्मते ब्रह्माधिष्ठान जगच्च तस्मिन्नारोपितम् । न हि अधिष्ठानयाथात्म्यापरोक्षज्ञानवत तत्र आरोपितविषयक क्वापि दृष्टचरम् । अपरोक्षदृशो मिथ्यादर्शन न क्वचिद्भवेत्' इति । (तत्वो.) 'न हि शुक्तिज्ञो रजतज्ञ इत्युच्यते । विरोधात्तयोर्ज्ञानयो । नेद रजतमित्यरजतज्ञो हि शुक्तिज्ञो भवति' इति च भगवत्पादोक्ते (वि त नि ६३२) । अङ्गीकृत च परैरेवैष नियम "लोके शुक्त्यादितत्त्व विजानता यतोऽध्यस्तरूप्यादि अविज्ञात भवति, अजानतामेव तु अध्यस्त विज्ञात भवति इति प्रसिद्ध, तथा ब्रह्मणि ज्ञेयत्वस्याध्यस्तत्वादेव न तत्त्वविदो ज्ञात ब्रह्म पश्यन्तीत्यर्थ (आनन्दगिरि के शा भा ९-११-३१) । **चरममेव तत्** मुमुक्षु प्रत्युपदिष्टत्वात् ॥ ९५३ ॥ ९५४ ॥

**अतो भ्रान्तजगज्ज्ञानमधिष्ठानात्मदर्शने ।**
**जातमित्यपि नैकस्य ज्ञानात्सर्वस्य दृक्तव ॥ ९५५ ॥**

**तस्माद्भ्रमस्य द्वावंशौ स्त इत्यपि न ते गतिः ।**
**भ्रमानुकूलसामान्यधीर्विज्ञानं कथं वद ॥ ९५६ ॥**

यद्यपि भ्रमस्य द्वावशौ अधिष्ठानसामान्यविषयक आरोपितविषयक चेति । तत्र अधिष्ठानसाधारणधर्मज्ञान आरोप प्रति च हेतु । तथाऽपि न तदत्र श्रुत्या

विवक्षितम्। तस्य मोक्षाहेतुत्वेन विज्ञानपदेनोक्त्यसभवादित्याह **विज्ञानमिति**॥ ॥९५५॥ ९५६॥

**एवमप्यखिलभ्रान्तजगदैक्यं भवेत्परम्।**
**अप्रशंस्य प्रशंसा स्यात्प्रक्रमस्याप्यतिक्रमः ॥ ९५७ ॥**

तथात्वे वा भ्रान्तिफलकत्ववर्णनपरमेतद्वाक्य प्रशसारूपार्थवादात्मक न स्यादित्याह **एवमिति**॥ ९५७॥

**एकज्ञानेन सर्वस्य ज्ञानं काण्वश्रुतिः पुरा।**
**प्रस्ताव्यपुनराहैतदमृतत्वमिति स्फुटम् ॥ ९५८ ॥**

काण्वश्रुतिसमाख्ययाऽस्य ज्ञानहेतुत्व समर्थयति **एकेति**। **एतदमृतत्व** एतज्ज्ञान अमृतत्वहेतु ॥ ९५८॥

**लाङ्गलं जीवनमिति प्रोक्ते जीवनहेतुता।**
**यथा याति तथा मुक्तिहेतुता वागियं किल ॥ ९५९ ॥**

निमित्तनैमित्तिकयोरभेदव्यपदेश दृष्टान्तेन उपपादयति **लाङ्गलेनेति**। 'दधित्रपुस प्रत्यक्षो ज्वर''आयुर्वै घृत'इत्यादिवैदिकप्रयोगोऽपि द्रष्टव्य ॥ ९५९॥

**अतः प्रमैव वाच्येयं सा ते चिन्मात्रगोचरा।**
**एकज्ञानेन सर्वस्य ज्ञानं तस्मात्कथंवद ॥ ९६० ॥**

**अतः** भ्रमस्य मोक्षहेतुत्वासभवात्॥ ९६०॥

**तदनारोपरूपैव वाच्या सा चरमप्रमा।**
**सर्वस्य नास्तिताज्ञानमपि तत्र न ते मते ॥ ९६१ ॥**

निर्विकल्पचरमज्ञाने जगदभावज्ञानस्यापि प्रकारतया भान न सभवतीत्याह **सर्वस्येति**॥ ९६१॥

**यतो ह्यभावविषयं न प्राहुर्निर्विकल्पकम्।**
**सर्वस्याभावधीस्सा स्यात्सर्वज्ञानं तु तत्कथम्॥ १६२ ॥**

निर्विकल्पकवादिभिरपि अभावनिर्विकल्पक नाङ्गीकृत चेत्याह **यत इति।** उपेत्याप्याह **सर्वस्येति** ॥ १६२ ॥

**घटस्य नास्तिताज्ञानं घटज्ञानं हि को वदेत्।**
**न चेदद्वैतविज्ञानी परस्यात्वं तु भेददृक् ॥ १६३ ॥**

अशाब्दश्चाय प्रजल्प इत्याह **घटस्येति। न चेत्** तथात्वेऽपि त्व वैयात्येन तथा व्यवहरसि चेदतिप्रसङ्गवाह **अद्वैतेति** ॥ १६३ ॥

**तदभावकथां वक्तुं तद्भावं कथयेद्धि कः।**
**अर्थाभावज्ञमर्थज्ञं वक्ति को वा पुमान्भुवि ॥ १६४ ॥**

**पुमानिति।** एव प्रलापपर पशुबुद्धिरिति ध्वनि ॥ १६४ ॥

**किं चैवं सर्वविज्ञानमेकज्ञानाद्यदीष्यते।**
**तदा मिथ्याभूतसर्वजगदैक्यं भवेत्सतः ॥ १६५ ॥**

जडजगदैक्याङ्गीकारे जडस्य मिथ्यात्वेन सतो ब्रह्मणो मिथ्यात्वापत्तिं प्रागुक्ता स्मारयति **तदेति** ॥ १६५ ॥

**तस्मात्तदेकज्ञानेन सर्वज्ञानं श्रुतीरितम्।**
**तव नार्थाय कस्मैचिदनर्थायाभवत्परम्।**
**जीवैक्यस्यानुपायत्वाज्जडैक्यस्यैव चागतेः॥ १६६ ॥**

**अर्थाय** जीवैक्यसिद्धिप्रयोजनाय। अनर्थाय भ्रान्तजडैक्यसिद्धये। तथा च 'सर्व खल्विद ब्रह्म' इति श्रुतिव्याख्यानोक्तसर्वदोषाणा तदवस्थतेति घट्टकुटीवृत्तान्त ॥ १६६ ॥

**अतो जैवैक्यमाशास्यं ज्ञाने ज्ञातमिदं जगत्।**
**प्रदृश्यमानमखिलं किल किं केन सङ्गतम् ॥ १६७ ॥**

किञ्च काण्वश्रुतौ 'सर्व खल्विद विज्ञात' इति इदशब्द श्रूयते। स च दृश्यमानजडपर एवेति जडैक्यसिद्धिदोषो वज्रलेप इत्याह **इदमिति** ॥ १६७ ॥

**विरुद्धो हेतुरुक्तस्स्यान्मिथ्यात्वस्य तु साधने।**
**चरमब्रह्मविज्ञाने सर्वस्य ज्ञातता यतः ॥ १६८ ॥**

जगति दृश्यत्व नाम चरमप्रमाविषयत्वमिति व्याख्याने प्रमाविषयत्वस्य मिथ्यात्वाभावव्याप्तत्वेन दृश्यत्वहेतोर्विरुद्धतैवेत्याह **विरुद्ध इति** ॥ १६८ ॥

**ब्रह्मवज्जगदेतच्च करोति परमार्थसत्।**
**अतः श्रुत्यर्थकथने तवेष्टं नैव सिद्ध्यति ॥ १६९ ॥**

ब्रह्मैक्ये जडस्य परमार्थसत्त्वापत्तिमाह **ब्रह्मवदिति** ॥ १६९ ॥

**अश्रुतार्थपरं त्वां तु श्रौतार्थो हन्ति धीमताम्॥ १७० ॥**

**अश्रुतेति** जगदभावेत्यर्थ ॥ १७० ॥

**अतस्सत्यत्वचित्त्वाद्यैस्सदृशत्वाच्चराचरम्।**
**तदङ्गेष्वाश्रितत्वाद्वा तज्ज्ञाने ज्ञायते जगत् ॥ १७१ ॥**

धीमतामर्थमाह **अत इति**। सादृश्याभिव्यञ्जक च सत्यत्व साधारणम्। चित्त्व जीवेषु। आदिपदेन मुक्तियोग्येषु इति यथायथ ग्राह्यम्॥ १७१ ॥

**दृष्टैकधूमसादृश्याद्धूममात्रस्य धीर्न किम्।**
**व्याप्तिग्रहाय तच्छब्दवाच्यत्वस्य ग्रहाय वा ॥ १७२ ॥**

दृष्टेति। समर्थित चैतत् 'इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यते' इत्यनुव्याख्यानव्याख्यासुधाया वैशेषिकनये। व्युत्पत्ति व्याप्ते कार्यकारणभावस्य, लक्ष्यलक्षणभावस्य च उपलक्षणम् ॥ ९७२ ॥

**नानालङ्कारगन्धाद्यैरलंकृतनिदर्शने।**
**तदलङ्कारगन्धादिदर्शनं च न किं नृणाम् ॥ ९७३ ॥**

**अद्भुतानीह यावन्ति भूमौ वियति वा जले।**
**त्वयि विश्वात्मके तानि किं मेऽदृष्टं विपश्यतः ॥ ९७४ ॥**

आश्रितत्वादित्युक्त उपपादयति **नानाऽलङ्कारेति।** **सर्वात्मके** सर्वाधारे। सर्व आत्मनि मय्येति विग्रह ॥ आत्मशब्दस्य स्वरूपार्थकत्वे त्वयीति अधिकरणसप्तमी विरोध ॥ ९७३ ॥ ९७४ ॥

**इत्युक्रूरवचः पश्य विश्वरूपं च तं स्मर।**
**शिशोर्यस्य किलास्ये प्रागपश्यद्विश्वमम्बिका ॥ ९७५ ॥**

**अबिका** यशोदा ॥ ९७५ ॥

**त्वयि दृष्टेऽखिला दृष्टा इति ग्रामेश्वरं नरम्।**
**अन्यदर्शनजन्यस्य फलस्याप्यत्र संभवात् ॥ ९७६ ॥**

'प्रधानपुरुषज्ञानाद्ग्रामो ज्ञात इति व्यपदेशोऽस्ति' इति भगवत्पादोक्तिं हृदि कृत्वाऽऽह **त्वयीति** ॥ ९७६ ॥

**यथा वदन्ति सर्वेषां हरिं सर्वेश्वरं तथा।**
**महाफलप्रदातारं प्रशंसति महाप्रभुम् ॥ ९७७ ॥**

सर्वेश्वरस्य हरेर्ज्ञाने अप्रधानभूतदेवतादिज्ञानसिद्धिरित्येतदेव एकविज्ञानेन सर्वविज्ञानोक्तेरभिप्राय· न तु अभेदो न वा मिथ्यात्व इत्याह **महाफलेति** ॥ 'ज्ञानादेव सर्वे कामा· सपद्यते' इति श्रुते 'तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानत' इति स्मृतेश्च।

(न्या २८४) अङ्गीकृतश्च सर्वविज्ञानस्य ज्ञातार्थ फलफलिभाव एवेति अद्वैतिभाष्यकारेणापि 'सर्वान् अपि वेदानधीत्य सर्व चान्यद्वेद्यमधिगम्याप्यकृतार्थ एव भवति यावदात्मतत्त्व न विजानाति इत्याख्यायिकातोऽवलभ्यते इति शा भा । अत्र विस्तर भेदपराण्येव खलु ब्रह्मसूत्राणि इति ग्रन्थे (प ९०—९१) ॥ ९७७ ॥

**अमुख्योऽर्थोऽपि मुख्यार्थगुणलाभाय कथ्यते ॥ ९७८ ॥**

श्रुतावमुख्यप्रयोगस्य प्रशसैव प्रयोजनमित्याह **अमुख्येति** ॥ ९७८ ॥

**गङ्गापदेन तीरस्य लक्ष्यत्वे तस्य तत्पदात् ।**
**पावित्र्यमपि यत्सिद्ध्येद्वाक्यं च लघु जायते ॥ ९७९ ॥**

**यदल्पपदवाक्येन बहोर्मुख्यार्थयोगिनः ।**
**अर्थस्य वक्त्री तद्वृत्तिरियं लोकमता मता ॥ ९८० ॥**

शाब्दलाघवेन बह्वर्थबोधाय एवविधोऽमुख्यप्रयोगो लोकसिद्ध इत्याह **गङ्गेति** ॥ ९७९ ॥ ९८० ॥

**किं च ब्रह्मणि विज्ञाते सति तस्य प्रसादतः ।**
**सार्वज्ञं जायते नृणामिति सर्वस्य संमतम् ॥ ९८१ ॥**

**अतः श्रुतिरियं साध्वी ब्रवीत्यखिलसंमतम् ।**
**इदमेवार्थमित्यासीत्सर्वं श्रुतिमनोहरम् ॥ ९८२ ॥**

अथवा रूढोपचारोऽय इति न प्रयोजनगवेषणमित्याह **किं चेति**। 'यो मामेवमसमूढो जानाति पुरुषोत्तमम् । **स सर्वविद्** इति भगवत्प्राधान्यज्ञानिन सर्वज्ञत्वव्यवहारात् । सर्वज्ञत्व च तत्तद्योग्यमेवेति अन्यदेतत् ॥ ९८१ ॥ ९८२ ॥

**सर्वकर्तृत्वसार्वज्ञसर्वेशत्वादिसद्गुणैः ।**
**सहितस्य हरेर्ज्ञाने सर्वं च ज्ञायते यतः ॥ ९८३ ॥**

**सर्वकर्तृत्वेति ।** कर्तृत्वादिविशेषणतया सर्वस्य सामान्यत तत्तद्योग्यतानुरोधेन ज्ञानादिति भाव ॥ १८३ ॥

**अतोऽप्येकस्य विज्ञाने सर्वज्ञानं भवेन्मम ।**
**निर्विकल्पकचिन्मात्रज्ञाने तेऽज्ञकुतोऽन्यदृक् ॥ १८४ ॥**

**ममेति** 'विष्णो सर्वोत्कर्ष एव सर्वागमाना महातात्पर्य' इत्यङ्गीकारिण । **ते इति ।** निर्विकल्पकज्ञानमेवालीकम् । तद्विषयतया अन्यज्ञानप्रत्याशा त्वतिदूरे इति भाव ॥ १८४ ॥

**बर्हिष्मन्नेतदाख्यानं परोक्षेण प्रकीर्तितम् ।**
**यत्परोक्षप्रियो देवो भगवान्विश्वभावनः ॥ १८५ ॥**

**इति भगवतोक्त्या च क्वचिद्वाग्वृत्तिरीदृशी ।**
**श्रुतीनां च स्मृतीनां च तत्त्वं गूहयितुं महत् ॥ १८६ ॥**

अमुख्यवृत्ते प्रयोजनमुक्तम् । त्वादृशाना तमोयोग्याना मोहनमपि ज्ञानाङ्कुरसरक्षणायापर प्रयोजनमित्याह **गूहयितुमिति** ॥ १८५ ॥ १९६ ॥

**तथा तत्त्वमसीत्याह श्रुतिर्ब्रह्म सदृक्षताम् ।**
**गुणैः कतिपयैर्वक्तुं लोकवेदानुसारिणी ॥ १८७ ॥**

**ब्रह्मसदृशतां** तेन 'तद्वत्तमसि' इत्यर्थ । तदुक्त 'तद्गुणसारत्वात्तु तद्व्यपदेश प्राज्ञवत्' इति सूत्रभाष्ये 'भिन्ना जीवा परो भिन्नस्तथाऽपि ज्ञानरूपत । प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वश.' इति । 'अन्तरेणापि वसि अतिदेशोऽवगम्यते । अब्रह्मदत्त ब्रह्मदत्त इत्याह तेन वय मन्यामहे ब्रह्मदत्तवदय भवती'ति महाभाष्योक्ते (न्याया. २-२८ प ५९५) ॥ १८७ ॥

**अतिशूरं नरं प्राहुरशार्दूल इति यज्जनाः ।**
**अग्निर्माणवकश्चेति यस्माद्वाक्चास्ति वैदिकी ॥ १८८ ॥**

लोकवेदसमर्तिं प्रयोगस्य दर्शयति **अतिशूरमिति** ॥ ९८८ ॥

**अथवा जीवपरयोर्भेदं वक्तुं सविस्तरम् ।**
**प्रावर्तत श्रुतिरियं नाभेदमिति मे मतिः ॥ ९८९ ॥**

**सविस्तरमिति।** तथा हि तत्त्वनिर्णये 'अतत्त्वमसीति नवकृत्वोपदेश सदृष्टान्तक इति ॥ ९८९ ॥

**स्वप्नावसानकालीनसुप्त्यवस्थां प्रबोधयन् ।**
**स्वप्नान्तं सौम्य जानीहीत्याह शिष्यं गुरुः पुरा ॥ ९९० ॥**

'स्वप्नान्त मे सौम्य विजानीहि' इत्युपक्रमवाक्य व्याख्याति **स्वप्नेति** । स्वप्नान्त स्वप्नावसानकालीना सुषुप्त्यवस्था । तत्र जागरस्वप्नयो शरीरेन्द्रियमनसामितस्ततो विक्षेपेण श्रान्तस्य जीवस्य श्रमापनोदाय स्वापे परमेश्वरायत्तताऽभिधीयते ॥ ॥९९० ॥

**यत्र स्वपिति नामायं पुरुषो जीवचेतनः ।**
**स ता ब्रह्मचिता साकं संपन्नस्स्यात्तदाऽप्ययम् ।**
**न तु तद्भावमाप्नोति सेऽयं सुप्तिदशा किल ॥ ९९१ ॥**

**प्राज्ञेन संपरिष्वक्त इति शाखान्तरे श्रुतिः ।**
**प्राज्ञेन संपरिष्वङ्गमेव सुप्तावकीर्तयत् ॥ ९९२ ॥**

**सम्यगालिङ्गनं ह्येव संपरिष्वङ्ग ईर्यते ।**
**सम्यक्प्राप्तिश्च संपत्तिर्भिन्नयोरेव किं न ते ।**
**यदेकस्य न ते दृष्टे दृष्टे सर्वत्र च द्वयोः ॥ ९९३ ॥**

'यत्राय पुरुष स्वपिति नाम सता सोम्य तदा सपन्नो भवति' इति वाक्यशेष व्याचष्टे **यत्रेति**। सपरिष्वक्त इत्यनन्तर 'न बाह्य किञ्चन वेद' इति वाक्यशेष ।

सपरिष्वङ्ग सपत्तिरिति उभे अपि भेदनियते इति भेदसिद्धिरित्याह **सम्यगिति** ॥
॥९९१ ॥ ९९२ ॥ ९९३ ॥

**अन्तर्हितस्य या प्राप्तिः प्रविष्टस्योदरे हरेः ।**
**सैवापीति शब्दशक्तिशोधनेन त्वभिन्नता ॥ ९९४ ॥**

'स्व ह्यपीतो भवति' इति श्रुति विवृणोति **अन्तर्हित इति** । तिरोहित सन् प्राप्तो भवतीत्येवार्थ । **न त्वभिन्न इति** । अपेरपि धातौ इणश्च गतौ निष्ठायाश्च कर्तरि शक्ते क्लृप्तत्वादैक्ये योगरूढयोरभावाच्च । ऐक्यार्थत्वे अतीत इत्यस्य भवतेश्चाकर्मकत्वेन श्रुतद्वितीयाऽयोगाच्च । अत्र विस्तर न्यायामृते (२-२८ प ५९७) **अन्यार्थेति** अभेदेत्यर्थ ॥ ९९५ ॥

**ति(क्ति)न्नन्तोऽत्र यदिण्धातुर्यत्पिधानार्थकोस्त्यपिः ।**
**अतोऽत्रान्यार्थविन्यासचिन्ता हन्ता फलैव ते ॥ ९९५ ॥**

**सुप्त्युत्क्रान्त्योश्च भेदेन नेत्याह निर्णयसूत्रकृत् ।**
**यतस्सुप्तौ च मुक्तौ चाभिदा शास्त्रविदोदिता ।**
**अतो द्विर्बद्धभेदोऽयं सुबद्धोऽभूच्छ्रुतेर्गले ॥ ९९६ ॥**

सूत्रे च सुषुप्तौ भेदस्यैव समर्थितत्वाच्च न तमा अभेदार्थावकाश इत्याह **सुप्तीति शास्त्रविदा** निर्णायकसूत्रप्रणेत्रा । **द्विः** द्विवार सुप्तौ मुक्तौ च ॥ ९९६ ॥

**सुप्तिश्चावान्तरा मुक्तिर्देहादेरप्ययात्तव ।**
**सुप्तौ मुक्तौ च यन्नास्ति तदैक्यं स्यात्कदा वद ॥ ९९७ ॥**

**सुबद्धः** मुक्तिप्रायसुप्तौ मुक्तौ चानुवृत्तस्य पारमार्थिकत्वावश्यभावात् ॥
॥९९७ ॥

**सदृष्टान्तमिमामेव वेदः प्राबोधयद्दशाम् ।**
**यतः शकुनिसूत्राख्यनिदर्शनमदर्शयत् ॥ ९९८ ॥**

सदृष्टान्तमिति अन्यत्रापि श्रुतौ भिन्नश्येननीडदृष्टान्तोक्तिरनुसन्धेया ॥ ॥९९८ ॥

**दार्ष्टान्तिके तत्र मनो मन्तृत्वाज्जीव एव तत् ।**
**न चेदुपक्रमोऽन्यस्य स्याच्चान्यस्योपसंहृतिः ॥ ९९९ ॥**

**दार्ष्टान्तिके** 'एवमेव खलु सोम्यैतन्मन ' इति वाक्ये 'मननान्मन उद्दिष्ट' इति प्रमाणाज्जीव एव मन शब्दार्थ । 'यत्राय पुरुष स्वपिति नाम' इति पुरुषशब्देन तस्यैवोपक्रान्तत्वादित्याह **मन इति** ॥ ९९९ ॥

**शकुनेश्शकुनाच्चायं जीवस्तत्रापि जीवति ।**
**यच्चेतनोपमा प्रायश्चेतनस्यैव शोभते ॥ १००० ॥**

**शकुनेः** शकुनात् प्रवासोपक्रमे शुभसूचनात् न जीवभय तथाऽत्रापि शकुनेश्चेतनस्य जीवस्य दृष्टान्तीकरणान्न जीवभावापगमेन ऐक्यभयमिति साहित्यमुद्रयाऽऽह **जीव इति** ॥ १००० ॥

**किञ्चान्तःकरणाख्यं ते मनो लीनं तदा तव ।**
**प्राणसंश्रयता तस्य कथं लीनस्य कथ्यते ॥ १००१ ॥**

मन शब्दस्यान्त करणार्थकत्व परस्यापि दुर्घटमित्याह **किञ्चेति** । प्राणबन्धनमित्युक्त प्राणाश्रितत्व प्रलीनस्य न सभवतीत्याह **प्राणेति** ॥ १००१ ॥

**यतश्चोपरि तत्स्थाने प्रजाशब्दं हि जीवगम् ।**
**सन्मूला एव सोम्येमाः प्रजा इति वदिष्यति ।**
**अतो मनःप्राणशब्दौ जीवब्रह्मपराविमौ ॥ १००२ ।**

**इति भेदं सदृष्टान्तं प्राक्प्रस्ताव्यपुनर्गुरुः ।**
**तत्त्वमस्यादिवाक्येन कथमैक्यं वदेद्वद ॥ १००३ ॥**

**यस्त्वारब्धार्थमुत्सृज्य द्विरूपाया गिरो भरात्।**
**मध्येऽन्यार्थमपि व्यर्थमाशास्ते मद्यपाय्यसौ ॥ १००४ ॥**

**स्वारब्धार्थं** उपक्रमे सदृष्टान्तमुपपादित भेदरूपार्थम्। **उत्सृज्य** दुराग्रहादपलप्य। द्विरूपाया सावकाशाया गिर तत्त्वमसिवाक्यस्य **बलात्** आपातार्थे मोहात् **अन्यार्थं** अभेदरूपम्। **आशास्ते** केवल दुराशा करोति। न तु पुन स्वार्थसिद्धि। **मद्यपायी** अतितामस सर्वार्थान् विपरीताश्च बुद्धि सा पार्थ तामसी' इति लक्षणसमन्वयात् ॥१००२ ॥१००३ ॥ १००४ ॥

**सत्यतत्त्वमसीत्यस्मदर्थे मुख्येन लक्षणा।**
**न ते श्लोक्यं नापि शक्यं शक्यैक्य**
**तेन शोक्यसि ॥ १००५ ॥**

सति अतत्वमिति पदच्छेदे मुख्ये मदर्थे सतीत्यन्वय। न लक्षणा युक्तेति शेष। शक्ययो मुख्यार्थयोरैक्यम्। न शक्य स्वीकारानर्हम्। न स्वीकृत च। 'ऐक्य नयोर्लक्षितयोर्न वाच्ययो' इति तेनेवोक्ते। **शोकी** श्रुतीनामखण्डार्थ-परत्वरूपाऽप्रामाण्यशङ्काऽनेन तमसि सुबहुलदु खवान् ॥ ॥१००५ ॥

**तत्त्वज्ञानश्रुतौ तस्मात्तत्त्वज्ञो मत्त एव सः ॥ १००६ ॥**

तस्य भाव तत्त्व ब्रह्मैक्य तज्जानातीति तत्त्वज्ञ न तत्त्वज्ञ यथार्थज्ञानवान्न अत्र विरोधाभासद्वयम्। तत्त्वज्ञ· ब्रह्मैक्यज्ञानी न तत्त्वज्ञ। किन्तु ब्रह्मभाव स्वस्य अजानान अतत्व एव तत्वज्ञ इति ॥ १००६ ॥

**यत्सत्प्रतिष्ठसन्मूलसदायतनतां श्रुतिः।**
**प्रजाशब्दोक्तजीवानां वक्ति तत्रैव सादरम्।**
**अतस्त्रिधा प्रजानां च सतश्चोक्तैव भिन्नता ॥ १००७ ॥**

सन्मूला इति सृष्टे प्राक्। सदायतना इति मध्ये। सत्प्रतिष्ठा इति मुक्तौ इत्येव अवस्थात्रये सच्छब्दाभ्यासेन सत ब्रह्मण प्रजाना जीवाना च भेदकथनात् सादरमित्युक्तम् ॥ १००७ ॥

**लवणोदकदृष्टान्ते स्पष्टं भेदो निदर्शितः।**
**यन्नैक्यं भिन्नरसयोर्योगेऽप्यालोडनं परम् ॥ १००८ ॥**

**भिन्नरसयोः** बहुव्रीहि । जलस्य मधुर लवणस्य लवण रसमित्येव भिन्नौ रसौ ययोस्तौ तयो जललवणयो । **योगेऽपि** मिश्रणेऽपि । **नैक्यं** न स्वरूपैक्य किन्तु **आलोडनं** स्थानैक्यमेव ॥ १००८ ॥

**यथा तप्तोदके रूपस्पर्शाभ्यामभिभूतयोः।**
**अबग्न्योरुभयोर्यागस्तथैव लवणोदके।**
**रूपाभिभूतलवणे रसस्याभिभवोजले ॥ १००९ ॥**

**यथेति** तप्तोदके तेजसो रूपमात्राभिभवो न उष्णस्पर्शस्य जलस्य स्पर्शमात्राभिभवो न तु रूपस्य तथाऽपि स्वरूपभेद, तथाऽत्रापि लवणस्य रूपाभिभवो न रसस्य, उदकस्य रसाभिभवो न रूपस्य स्वरूपे तु भिन्ने एवेत्याह **यथेति** ॥ १००९ ॥

**नदीसमुद्रावप्येवं गङ्गासागरसङ्गमः।**
**इति शास्त्रप्रसिद्धेश्च वृद्धानां च प्रसिद्धितः।**
**नदीशुद्धोदसंयोगो वार्धे स्स्याल्लवणोदके ॥ १०१० ॥**

**शास्त्रप्रसिद्धितः** 'सितासिते सरिते यत्र सङ्गते' इत्यादौ ॥ १०१० ॥

**शुद्धे शुद्धोदकं सिक्तं तादृगेव भवेत्परम्।**
**एकप्रकारोदकयोरप्यैक्यं न तयोः किल ॥ १०११ ॥**

कैमुत्येन तत्र भेदमुपपादयति **शुद्धे इति** मुक्तावपि सरूपतैवेत्यत्र दृष्टान्त । तदाऽपि न स्वरूपैक्य किमु ससारे इति यथा। तथा समानप्रकारयोरपि शुद्धोदकयोर्यदा भेद तदा विरुद्धप्रकारयोर्लवणमधुरोदकयोस्तथात्व इति किमु वक्तव्यमिति ॥ १०११ ॥

**स्वोक्ततादृक्च दार्ढ्यार्थमेवेत्यैक्यं व्यवच्छिनत् ।**
**यतः श्रुतिस्ततस्तत्र तयोरैक्यं न सर्वथा ॥ १०१२ ॥**

तादृगेव न तु तदेवेति स्वरूपैक्यव्युदास सुस्फुट एवेत्याह **स्वेति** ॥ ॥१०१२ ॥

**एवं चेत्कथमैक्यं स्याच्छुद्धोदलवणोदयोः ।**
**वृद्धेः प्रत्यक्षसिद्धत्वादप्यैक्यं नोभयत्र च ॥ १०१३ ॥**

**प्रत्यक्षसिद्धत्वादिति** द्वारि ईषद्वृद्धि स्थूलमतीना अपि । सूक्ष्मधिया तु सर्वत्र । भामत्यामपि नदीसमुद्रोदकयोरैक्यस्य सपरिकर 'अवस्थितेरिति' सूत्रभाष्यव्याख्याने दूषितत्वाच्च । (न्याया ५९८) ॥ १०१३ ॥

**न हि रासोत्सवस्यान्ते बहुमूर्त्येकतां गते ।**
**कृष्णो विशति नन्दस्य गृहद्वारमवर्धत ॥ १०१४ ॥**

स्वरूपैक्ये तु न वृद्धिरित्येतन्निदर्शयति **न हीति** ॥ १०१४ ॥

**नद्यम्बुयोगे वर्षासु वार्धिरप्यभिवर्धते ॥ १०१५ ॥**

**अभिवर्धते** इद तु मार्कण्डेयमुनेरनुभवसिद्धम् । प्रलयकालीनवर्षाजन्य-समुद्रवृद्धेस्तेनानुभूतत्वात् । इदानी इतरेषा समुद्रस्य महत्त्वाद्वृद्ध्यदर्शनम् ॥ ॥१०१५ ॥

**यतश्चोक्तं पुराणेषु सङ्गमे द्विगुणं फलम् ।**
**अतश्च न तयोरैक्यमैक्ये यत्स्यात्फलैकता ॥ १०१६ ॥**

**द्विगुणम्** । उपलक्षणम् । 'तत्राप्लुतासो दिवमुत्पतन्ति' । 'ब्रह्मज्ञानेन वा मुक्ति प्रयागमरणेन वा' इत्याद्युक्ते अधिकफलमित्यर्थ ॥ १०१६ ॥

**समुद्रोदेऽपि लवणद्रव्यस्य च जलस्य च ।**
**संयोग एवेशकृतः सरिदब्ध्योस्तु किं पुनः ॥ १०१७ ॥**

**समुद्रोदेऽपीति** एकदेवताकेऽपीत्यर्थ । कि पुनर्भिन्नभिन्नतत्तन्नद्यादि-देवताकेषु तत्तच्छरीरस्थानीयेषु नद्युदकेषु इति ॥ १०१७ ॥

**पत्न्यस्तु सरितस्सर्वः पतिस्तु सरितां पतिः ।**
**तद्भेदो नेक्ष्यते पुंभिर्गाढालिङ्गनतः परम् ॥ १०१८ ॥**

उक्त प्रमेय शृङ्गाररसेन मधुरयति **गाढेति** ॥ १०१८ ॥

**न हि प्रधानदिक्पालो वरुणोऽसौ निजालये ।**
**पिता मुनीनामेकाकी शेते तारापतेस्सखा ॥ १०१९ ॥**

**प्रधानेति** निऋति कुबेरादित उत्तमेत्यर्थ । निजालये इति पत्नीभि सहभावे हेतु ॥ १०१९ ॥

**न चेद्वर्षासु वार्ध्यम्बुमध्यान्नद्यम्बुवार्धराः ।**
**आनयन्ति कथं शुद्धं वर्षन्ति च ततस्ततः ॥ १०२० ॥**

**न चेत्** पाथ परमाणूना भिन्नत्वाभावे । **वार्धराः** मेघा । अत्राय विशेष 'स्वकीयमुदक नद्य समुद्रेनैव जानते । वायुस्तु तत्पृथग्भाव मेघे कृत्वा प्रवर्षति' इति स्मृतेर्ज्ञातव्य । (वि त टी श्रीनिवासती ५६८) ॥ १०२० ॥

**श्वेतं गङ्गोदकं स्वादु तुङ्गाम्बुयमुनाजलम् ।**
**नीलमित्यादिभेदोस्ति प्रत्यब्दमपि तज्जले ॥ १०२१ ॥**

सोऽब्धौ च भिन्नभिन्नाम्बुसद्भावेन विना कथम्।
न ह्यपूर्वं स वार्वाहः कुर्वीताम्बु स्थले स्थले ॥ १०२२ ॥

सर्वे च सङ्गमं ब्रूयस्त्वं ब्रूषे कथमेकताम्।
हन्ताज्ञाश्च हसेयुस्त्वां पूर्णप्रज्ञभटास्तु किम् ॥ १०२३ ॥

वायुनैव विवेकेन तत्तज्जलानयनप्रदेशो प्रत्यब्द वर्षणादेव नदीजलाना रूपरसादिगुणभेदो निर्वहति नान्यथेत्याह **श्वेतमिति**। न मेघा वायुर्वा अपूर्व रूपादिक सृजन्तीति युक्तमित्याह **नेति** ॥ १०२१ ॥ १०२२ ॥ १०२३ ॥

सितासिते च नद्यौ द्वे प्रयागे सङ्गते किल।
मिश्रतीर्थं किलैकत्र चित्रतीर्थोदसंग्रहः ॥ १०२४ ॥

निवृत्तिसङ्गमः सप्तनदीनां सङ्गमः किल।
कृष्णाभीमरथीसङ्गं प्राहुरद्यापि सङ्गमम् ॥ १०२५ ॥

सितासिते सरितौ यत्र सङ्गते इति प्रयागेऽपि सङ्गम इत्येव व्यवहार । सर्वेभ्यस्तीर्थेभ्य किञ्चिज्जल आहृत्य इन्द्रेण मिश्रीकृत्य निर्मित सरोवर मिश्रतीर्थ इति पुराणप्रसिद्धि । तस्यापि मिश्रेत्येव व्यवहार । न तु कुत्रापि ऐक्यमापन्नमिति । एव निवृत्तिसङ्गममपि सङ्गम इत्येवाहु । अतो लोकव्यवहारप्रतीपा तव प्रक्रियेत्याह **सिते इति** ॥ १०२४ ॥ १०२५ ॥

नानारससमाहारो मधुन्यप्येकता किल।
वृद्धिश्च रसवैचित्र्यं नो चेत्तत्र कुतो वद ॥ १०२६ ॥

मधुमधुकृददृष्टान्ते तु स्पष्ट 'समवहार एकता गमयन्ति' इति श्रुतिरेव स्वय 'समवहार एवैकता' इति रसमेलनमेव मधु न तु रसाना स्वरूपैक्यमिति व्याख्याति । अतो न तत्र तव कुचोद्यावकाश ।स्वरूपैक्ये बाधकमाह **वृद्धिर्गिति** ॥ ॥ १०२६ ॥

**सति संपद्य न विदुरिति सर्वत्र यच्छ्रुतिः ।**
**दार्ष्टान्तिकोपसंहारं कुरुतेऽतो न तत्कथा ॥ १०२७ ॥**

'सति सपद्य न विदु सति सपत्स्यामहे' इति ते इह व्याघ्रो वा सिंहो वा' इति सत आगम्य न विदु सत आगच्छामहे इति न इह व्याघ्रो वा सिंहो वा' इति भेदापरिज्ञानेनानर्थवचनाच्च । न हि गृहादागतस्य गृहे प्रविष्टस्य च तदैक्यम्' । इति तत्त्वनिर्णयवाक्य हृदि कृत्वाऽऽह **सतीति तत्कथा** ऐक्यकथा ॥ १०२७ ॥

**यस्मात्प्राग्भिन्नयोरैक्यं न स्याद्यत्नशतैरपि ।**
**तस्मात्सर्वेऽपि दृष्टान्ताभेदस्यैव प्रसाधकाः ॥ १०२८ ॥**

**यस्मादिति** न हि भिन्नमभिन्नता यातीति न्यायादिति भाव ॥ १०२८ ॥

**स त आगम्य न विदुः सति संपद्य चेति सा ।**
**मुक्तौ संपत्तिमेवाह सृष्टौ चागमनं ततः ॥ १०२९ ॥**

सत आगम्येति सृष्टौ, सति सपद्येति मुक्तौ इति योग्यतयाऽन्वय ॥ १०२९ ॥

**कस्य च गम्यार्थादागन्तुश्चागमावधेः ।**
**अवश्यं भिन्नतावाच्या मध्ये वाच्या कथं न सा ॥ १०३० ॥**

अधिकरणस्यापादानस्य च आधेयादेर्भेद व्युत्पत्तिसिद्ध इत्याह **गमकस्येति** । एव सृष्टौ मुक्तौ चेद्भेद श्रुतिसिद्धो मध्येऽपि स भवेदेवेत्याह **मध्ये इति** ॥ १०३० ॥

**अनाद्यनन्तकालीनामेवं जीवेशयोर्भिदाम् ।**
**न विदुर्ये ते भवन्ति सिंहव्याघ्रादयः किल ॥ १०३१ ॥**

'यद्यद्भवन्ति तत्तदा भवन्ति' इति वाक्ये जीवाना विद्यमानभेदापरिज्ञानेन व्याघ्रादित्वापत्तिरूपस्यानर्थस्योक्तत्वात् दृष्टान्तवाक्ययोरपि विद्यमानभेदापरिज्ञानमेव विवक्षितम् ॥१०३१ ॥

इति भेदाज्ञानिनिन्दां भूयो भूयः करोति या।
अभ्यासादर्थवादाच्च सा सम्यग्भेदतत्परा।
अतदित्येव गदितुं यतते न ततोऽन्यथा ॥ १०३२ ॥

सदायतनसन्मूलसत्प्रतिष्ठत्वकीर्तनात्।
स्थितौ सृष्टौ च मुक्तौ च भेदस्स्पष्टं निगद्यते ॥ १०३३ ॥

सा अतत्त्वमसीति वाक्। नेति। तदिति पदच्छेद न सहते ॥ १०३२ ॥
॥१०३३ ॥

दार्ष्टान्तिकप्रकरणमेवं सर्वं हि शोधने।
अभूद्भेदप्रकरणं तदैक्यस्य न भूरियम् ॥ १०३४ ॥

इयं उपनिषत् भूः प्रतिपादिका ॥ १०३४ ॥

तावदेव चिरं तस्य यावन्मोक्ष्येत कर्मभिः।
प्रारब्धैरखिलैः पश्चात्सति संपद्यते किल ॥ १०३५ ॥

न चात्रोक्ता सत्सपत्तेरपरममोक्षविषयेति शङ्क्यम्। प्रारब्धकर्मावसान-कालीनत्वात्। अपरममुक्तौ प्रारब्धकर्मलेशावश्यभावादित्याह तावदेवेति। 'तस्य तावदेव चिर यावन्न विमोक्ष्येऽथ सपत्स्यते' इति वाक्यमनेनोपादत्ते ॥ १०३५ ।।
॥१०३६ ॥

इति प्रारब्धनाशाच्च पश्चाद्भाविनि या श्रुता।
भिदा परममोक्षे ते कदा वा नास्ति सा वद ॥ १०३६ ॥

गम्यगन्तृतयाऽन्योन्यं किं न तत्रापि भिन्नता।
तन्न तामुन्नता वाक्के निन्हुवीत सतां मताम् ॥ १०३७ ॥

उन्नता वाक् दोषच्छादनाय उच्चैर्वचनम् ॥ १०३७ ॥

**अतत्त्ववादिनामेव तच्चित्रं तत्त्ववादिता ॥ १०३८ ॥**

प्रागुक्त स्मारयति **अतत्त्वेति** ॥ १०३८ ॥

**ततो वर्णादिना छिन्नं पदं सन्धायसा श्रुतिः ।**
**चरेद्भेदार्थलाभाय या ब्राह्मणजनप्रिया ॥ १०३९ ॥**

**वर्णादिना ।** वर्णाना चतुर्णामादि ब्राह्मण । अक्षराणा आदिरकार । ब्राह्मणेन अकारप्रश्लेषेण छिन्ना इत्यावृत्त्या योज्यम् । सा श्रुति त्व इति शब्द । **चरेत्** विद्वत्सभायामिति शेष ॥ १०३९ ॥

**किञ्च शब्दोऽनित्य इति वाक्ये घटनिदर्शने ।**
**अनित्य इत्येव यथा पदच्छेदं विदो विदुः ॥ १०४० ॥**

**एवं शकुनिसूत्राख्यस्पष्टदृष्टान्तशक्तितः ।**
**आत्मा तत्त्वमसीत्यत्राप्यतद्ब्रह्मेति गम्यते ॥ १०४१ ॥**

**किञ्चेति** 'शब्दो नित्य कृतकत्वात् घटवत्' इति प्रयोगे प्रतिज्ञासन्दिग्धार्थाऽपि सधर्मघटदृष्टान्ताभिधानसामर्थ्यात् अनित्यताविषयेति निश्चीयते तद्वत् । यदा त्वेकमपि भेदविषयत्वेनासन्दिग्ध दृष्टान्ताभिधान सन्दिग्धप्रतिज्ञावाक्यस्यार्थनिश्चयायाल तदा किमु वक्तव्य नवस्वपि प्रकरणेषु न वा सन्दिग्धानि भेदविषयाणि दृष्टान्ताभिधानानि इति तत्त्वनिर्णयटीका हृदि कृत्वाऽऽह **शब्द इति** ॥ १०४० ॥ १०४१ ॥

**तस्माज्जीवेशभेदस्य साधिका भेदवागियम् ।**
**न ह्यतिस्तब्धबुद्धेस्स गुरुर्ब्रह्मैक्यमादिशेत् ॥ १०४२ ॥**

प्रकरणविरुद्धोऽत्राभेदोपदेश इत्याह **न हीति** ॥ १०४२ ॥

**अतः श्रुतिः केरलानां करवालमभूदियम् ।**
**धारा त्वत्पार्श्वगैवातिक्रूरा किं स्यात्तवानया ॥ १०४३ ॥**

**केरलानां करवालं** स्वपरयोरुभयोरपि अभिमुखधारोपेतम् । तथाऽत्रोभयथाऽपि पदच्छेदावकाशवती । तत्रापि विशेषमाह **धारेति** । स्वाभिमुखा **अतिक्रूरा** नवविधदृष्टान्तशाणोत्तेजिता । पराभिमुखा तु शिलायामिव अविषये अभिदाया प्रयुक्ता कुण्ठिता साधनासमर्थेत्याह **किमिति** ॥ १०४३ ॥

**किञ्च दृष्ट्वैव तं मुच्येतेत्याद्यागमराशिषु ।**
**ज्ञानमज्ञानमात्रस्य विरोधीति स्वकल्पितात् ।**
**युक्तिमात्राच्च भीतेन श्रौतोऽर्थो येन धिक्कृतः ॥ १०४४ ॥**

स्वप्रक्रियाविरुद्ध परार्थ इत्याह **किञ्चेति** । **मुच्येत** मुच्यते । **इत्यादीति** 'तरति शोकमात्मवित्' । 'तमेव विद्वानमृत इह भवति' इत्यादीत्यर्थ । **स्वकल्पितात्** अप्रामाणिकात् । वस्तुत निवृत्ते सत्यत्वेनैव व्याप्ते गरुडध्यानसेतुदर्शनादिषु प्रमितत्वात् । **धिक्कृतः** अज्ञाने निवृत्ते, पश्चात् तदुपादानको मिथ्याभूतो बन्धो निवर्तते इति वदता इति शेष· ॥ १०४४ ॥

**तस्य प्रत्यक्षसहितविरुद्धगुणवत्त्वतः ।**
**महायुक्तेर्विरोधेऽपि मुख्येऽर्थेऽद्य कुतो भरः ॥ १०४५ ॥**

**प्रत्यक्षेति** नाह निर्दु ख इत्यादिरूपेत्यर्थ । 'द्वासुपर्णे'त्याद्यागमसहितेत्यपि ग्राह्यम् । 'मुख्येऽर्थे' इति गुडजिह्विकामात्रम् । वस्तुत पदद्वयलक्षणाश्रयणेनामुख्य एवार्थ इति ध्येयम् ॥ १०४५ ॥

**अक्षस्य युक्तिश्रुत्यादेरमानत्वं यदीष्यते ।**
**युक्तिमात्रामानतायां हीनता का तवोच्यताम् ॥ १०४६ ॥**

**इष्यते** स्वकल्पितयुक्तिविरोधात् । तर्हि **युक्तिमात्रेति** । सकलप्रमाणविरुद्ध-त्वत्कुकल्पितयुक्तीत्यर्थ ॥ १०४६ ॥

**यद्यक्षादेरमानत्वं विरुद्धैक्यमपीष्यताम्।**
**मानत्वे तु गुणत्यागः प्राणत्यागो भवेत्तव ॥ १०४७ ॥**

**यदीति। अयमाशयः** प्रत्यक्षादिक भेदावेदक प्रमाण न वा। द्वितीये विशिष्टैक्यमेव अङ्गीक्रियताम्। प्रत्यक्षादिविरोधस्याकिञ्चित्करत्वात्। आद्ये गुणत्यागस्य प्रमाणविरोधान्न लक्षणयैक्यसिद्धिरिति ॥ १०४७ ॥

**विरुद्धैक्यस्य चायुक्तिर्वाच्या कुत्राऽप्यदर्शनात्।**
**तर्ह्यक्षमानतावश्यं न चेदैक्यं विरुद्धयोः ॥ १०४८ ॥**

ननु विरुद्धयोरैक्य कुत्रापि न दृष्ट अतो विशिष्टैक्य न युक्तमिति चेत् एव तर्हि दृष्टमेव युक्त अङ्गीकारार्हमित्यायातम्। तथा च प्रत्याक्षादिप्रामाण्यमवश्य जातम्। एव च स्वरूपैक्यस्य तद्विरुद्धस्य न सिद्धि। तदुक्त तत्त्वोद्योते 'दृष्टस्य वस्तुनो बलवद्दृष्टि विना नान्यद् बाधकमि'ति ॥ १०४८ ॥

**आदित्ये पुरुषो योऽसौ सोऽहमस्मीति च श्रुतिः।**
**स यश्चायं पुरुषोऽस्ति यश्चादित्येऽस्ति सर्वदा ॥ १०४९ ॥**

**स एक इति विस्पष्टसमाख्या श्रुतिसख्यतः।**
**अर्थलक्षणया ब्रूते सुस्थसूत्रोक्तवर्त्मना ॥ १०५० ॥**

'योऽसावादित्ये पुरुष सोऽहमस्मि' इति श्रुतौ अहशब्द अन्तर्यामिपर·। 'स यश्चाय पुरुषे यश्चासावादित्ये स एक' इति समाख्यानुसारादित्याह **आदित्ये इति।** समाख्यावाक्य अन्तर्यामिरूपाभेदपर इति स्पष्टम्। उभयत्रापि सप्तम्या निर्देशात्। **लक्षणया** अहशब्दस्य अन्तर्यामिणि लक्षणया। इद च मुखत·। वस्तुतस्तु अहमादिशब्दा अन्तर्यामिण्येव मुख्या·। 'तत्सबन्धात्तु जीवेषु तत्सबन्धादचित्स्वपि। वर्तन्ते उपचारेण' इति तत्त्वनिर्णयोक्तेरिति ध्येयम्। **सूत्रेति** न वक्तुरात्मोपदेशादित्यादिसूत्रेत्यर्थ ॥ १०४९ ॥ १०५० ॥

**एकवाक्येऽपि चादित्य इत्याधारत्वकीर्तनात्।**
**स्वस्याप्याधारतैवोक्ता किमर्केशोर्कपूजकः ॥ १०५१ ॥**

**आधारत्वम्।** नियामकत्वेन पूज्यत्वम्। 'य आदित्ये तिष्ठन् — आदित्य यमयति' इति अन्तर्यामिनयोदाहृतश्रुते । अहशब्देन अर्कादप्यधम तत्पूजको जीव उच्यते। तादृशस्य स इति तच्छब्दपरामृष्ट-अर्केशाभेदविधान विरुद्धमित्याह **किमिति** ॥ १०५१ ॥

**तत्स्पष्टभेदश्रुत्यक्षबाधे सति सतां मते।**
**वृत्तित्रये च सत्यैक्यवाक्यं स्यात्क्व**
**विरुद्धयोः ॥ १०५२ ॥**

**वृत्तित्रये।** 'तस्मात्परममुख्यत्व विष्णावन्यत्र मुख्यता। उपलक्षणा च गौणी च तिस्र शब्दस्य वृत्तय' इति अनुव्याख्यानोक्ते । **क्व विरुद्धयोरिति।** विरोधे वृत्त्यन्तरस्यावश्यमाश्रयणीयत्वात् 'पूर्वायोगे परग्रह' इति तत्रैवोक्ते ।। १०५२ ॥

**किञ्चैकजीवब्रह्मैक्यं वाक्यो नानेन सेत्स्यति।**
**सर्वैक्ये किं प्रमाणं ते श्रुत्यर्थो न किलार्थिकः ॥ १०५३ ॥**

**एकजीवः** श्वेतकेतु । अर्थात्सर्वजीवाभेद इति चेन्नासौ श्रौतार्थ इत्याह **नेति।** यश्चार्थादर्थ न स चोदनार्थ इति वचनात् ॥ १०५३ ॥

**तत्तत्पदोक्तयोरैक्ये सुप्रसिद्धा विरुद्धता।**
**पदद्वयस्य लक्ष्यत्वाल्लघ्व्येकपदलक्षणा।**
**तत्संबन्धात्तत्पदेन जीवोक्तौ किं गतं तव ॥ १०५४ ॥**

**उक्तयोः** जीवेशयो **लक्ष्यत्वात्** लक्षणाश्रयणात्। **तत्पदेन** तदितिपदेन सबन्धश्च तदधीनत्वादि- प्रमाणान्तरानुगुण ॥ १०५४ ॥

**पञ्चम्यर्थे यत्तदिति पदं प्राहुर्यतोऽव्ययम् ।**
**तदित्यस्यैव तस्मादित्यर्थो वा तेन कथ्यताम् ।**
**ऋजुष्वनेकमार्गेषु सत्सु किं कुटिलाध्वना ॥ १०५५ ॥**

**प्राहुः** 'तदस्य कौषारव शर्मदातु' इत्यादौ सुबहुलप्रयोगात् । **अव्ययं** तथा च तदुपरि सर्वविभक्तिलोप । **अनेकेति** विभक्त्यन्तराश्रयणेऽपि उपपद्यमानप्रकारेषु इत्यर्थ ॥ १०५५ ॥

**किञ्च ब्रह्मेन्द्ररुद्रादिशब्दास्सर्वेऽपि सर्वदा ।**
**तत्तद्विशिष्टार्थपरा विशिष्टैक्यं च ते मते ।**
**न विद्यते चितोरैक्यं यतो लक्षणया तव ॥ १०५६ ॥**

**तद्देववासुदेवैक्यं वाक्यं नाख्याति ते क्वचित् ।**
**अत्राप्यत्रापि यत्तेन द्विदेव पदनाशनात् ॥ १०५७ ॥**

**तत्तद्विशिष्टेति ।** कमलासनत्व-शचीपतित्वादिविशिष्टेत्यर्थ । अत्रापि । लुड् । वाक्यस्य लज्जा भवतीत्यर्थ । **अत्रापि** स ब्रह्मा स शिव इत्यादिवाक्येष्वपि । लज्जाहेतु **द्विदेवेति** सर्वदेवेति तात्पर्यम् । **पदानि** सत्यलोकाधिपत्यादीनि । तेषा **शासनात्** मिथ्यात्वोक्त्याऽपलापात् ॥ १०५७ ॥

**किञ्चावान्तरवाक्यं च महावाक्यं च ते मते ।**
**सर्वलक्षणया ब्रह्मरूपमात्रपरं किल ।**
**अतस्तव प्रक्रिययाऽप्यैक्ये मानं न किञ्चन ॥ १०५८ ॥**

**अवान्तरवाक्यं** जीवब्रह्मरूपपदार्थप्रतिपादनपर 'विज्ञानघन' 'सत्य ज्ञान'मित्यादिरूपम् । **महावाक्यं** ऐक्यप्रतिपादनपर तत्त्वमसीत्यादिकम् । **ब्रह्मरूपमात्रपरं** ससर्गासङ्गि-प्रातिपदिकार्थमात्रपर अखण्डार्थनिष्ठम् । ऐक्यरूपससर्गाबोधकम् ॥ १०५८ ॥

**अखण्डार्थत्वसन्त्यागेनाभूदैक्यं भवन्मते ।**
**अखण्डार्थपरत्वेऽपि नाभूदैक्यं भवन्मते ॥ १०५९ ॥**

**सन्त्यागे** विशिष्टार्थपरत्वे । **नेति** विरोधादित्यर्थ । **नेति** ऐक्याबोधकत्वादित्यर्थ । एव उभयत पाशारज्जु ॥ १०५९ ॥

**विशिष्टार्थपरत्वेऽपि विशेषणबलान्न तत् ।**
**अविशिष्टार्थनिष्ठत्वे साधकाभावतो न तत् ॥ १०६० ॥**

उपपादयति **विशिष्टेति** ॥ १०६० ॥

**ऐक्यस्यान्यस्य वा वाक्याद्वैशिष्ट्यं भासते यदि ।**
**निष्प्रकारकधीरं ते शब्दादिति गतं मतम् ।**
**तस्मादैक्यं न वै शक्यं वाक्यैः**
**साधयितुं त्वया ॥ १०६१ ॥**

**वैशिष्ट्यं** ससर्ग । **वाक्यैः** तत्त्वमस्यादिभि तेषा बोधकत्वस्यैव त्वयाऽनङ्गीकारात् । 'ज्ञान च तस्य परात्मभावनिवृत्तिरेव । तज्ज्ञान नैव जायते । (शा भा.) इत्युक्ते (भे प व प) । आकाक्षासन्निधियोग्यताना अन्वयघटितत्वेन अन्वयाबोधकत्वे आकाक्षादिमत्त्वरूपवाक्यत्वस्यैवासभवादिति न्यायामृतोक्त-दिशा ध्येयम् ॥ १०६१ ॥

**यो स्मरन्त्यात्मनि भिदां निरुपाधिकयोगिनः ।**
**त्वं तानुपविशेत्याह विस्पष्टं श्रुतिगीतिका ।**
**स्फुटत्वाच्छ्रुतिमूलत्वात्फलवत्वाद्बलीयसी ॥ १०६२ ॥**

इदानी 'तर्हि न सन्न चासदुभय न च कालजव किमपि न तत्र शास्त्रमपकृष्य शयीत यदा । जनिमसत सतो मृतिमजात्मनि ये च भिदा विपणमृते स्मरन्त्युपविश ध्वनिमरुवत ' इति प्रलयकालीन जीवेश्वरभेदप्रतिपादिका श्रुतिगीतिका व्याख्याति । **ये इति** । विपणमृते इत्यस्यार्थ **निरुपाधिकेति** । आशिष काम्यफलस्याशासन

विना इत्यर्थ । तथात्वे वणिक्त्वप्राप्ते 'यस्त आशिष आशास्ते न स भृत्य स वै वणिक्' इति प्रल्हादवचनात्। ये स्मरन्ति इत्यस्यार्थ **योगिन इति।** अखण्डस्मृतिरूपयोगवन्त इत्यर्थ । आरुषत प्राणघोष कुर्वत वायो । वायो प्रसादात्। ल्यब्लोप । अनुग्रह निमित्तीकृत्य। **तेषां ध्वनिमुपविश** हृदये प्रवेश कुरु। स्फुटत्वादिक त्रय बलीयस्त्वे हेतु ॥ १०६२ ॥

**उपस्थितात्स्मर्तृतया जीवाख्यात्प्रतियोगिनः ।**
**परमात्मनि भेदोऽत्र प्रलये प्रतिपाद्यते ॥ १०६३ ॥**

**आत्मनि** प्रलयकर्तरि परमात्मनि धर्मिणि। भिदा स्मर्तृतया उपस्थितजीवप्रतियोगिकाम्। न सन्न चासदिति प्रलयज्ञापकम्। 'नासदासीन्नोसदासीत्' इति श्रुते ॥ १०६३ ॥

**अपकृष्य शयीतेति प्रस्तावः प्रलयस्य हि।**
**यस्सर्वस्य लये चास्ति सोऽस्त्येव परमात्मवत्॥ १०६४ ॥**

**शास्त्रं अपकृष्य** वेद पदसमन्वयवृत्त्या स्वप्रतिपादनपर आपाद्य। **यः** भेद । **सः,** परमार्थत अस्त्येव, प्रलयकालीनावस्थितिमत्त्वात् परमात्मवत् इति युक्तिसवादित्वेन उक्त बलीयस्त्व उपपादितम्॥ १०६४ ॥

**फलं च स्मर्तृजीवेषु प्रवेशः किल नैकता ॥ १०६५ ॥**

फल च प्रवेश भेदाविनाभूत । 'न हि ग्राम प्रविष्टस्य तदेकता' इति भगवत्पादोक्ते ॥ १०६५ ॥

**तत्ते ब्रह्मैकता नाभूद्विरुद्धे दृग्गिरः परम्।**
**सभायामसहायस्य स्यादेकाकितयैकता ॥ १०६६ ॥**

एकशब्दस्य असहायवाचित्वात् साधकप्रमाणसाहाय्यशून्यत्वादेव एकतेत्याह **सभायामिति**॥ १०६६ ॥

**क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसंभवाः ।**
**क्व चाखण्डितविज्ञानज्ञानैश्वर्येश्वरो हरिः ॥ १०६७ ॥**

**इति भागवते प्रोक्त्या सदा दोषोपमर्दने ।**
**सुशक्तमीशचैतन्यं तदशक्तमनीदृशम् ॥ १०६८ ॥**

**स्नेहः** दुर्विषयेषु । **अज्ञसंभवाः** अविद्याक्षेत्रत्वमुत्तरेषामित्युक्ते । **अखण्डितेति** । यावद्द्रव्यभावित्वात्स्वरूपभूतेत्यर्थ । तदर्थ **सदेत्यादिकम्** ॥ ॥१०६७ ॥ १०६८ ॥

**जीवचैतन्यमिति तच्चैतन्यद्वयमेव हि ।**
**मिथोविरुद्धं नीचोच्चचितोरैक्यं कथं वद ॥ १०६९ ॥**

इति हेतो ॥ १०६९ ॥

**एवं च ब्रह्मचैतन्यं नैव जीवस्य चित्क्वचित् ।**
**अभयत्वादमोहत्वादशोकत्वाच्च कुड्यवत् ॥ १०७० ॥**

न चासिद्धि तन्मूलाज्ञानरहितत्वादित्युक्त अज्ञसभवा इति अज्ञे एव सभाविताना अज्ञानशून्ये असभवादिति भाव ॥ १०७० ॥

**किं न श्रुतं हरिर्ब्रह्मरुद्राद्युत्कृष्टचेतनः ।**
**इति नामसहस्रस्थं पुण्यनाम महात्मनः ॥ १०७१ ॥**

**नामसहस्रस्थ** वासुदेवसहस्रनामपठितम् ॥ १०७१ ॥

**उत्कृष्टचेतनत्वोक्त्या चिन्मात्रमपि मापतेः ।**
**अत्युच्चं जीवचैतन्यादित्यर्थः किं न सिध्यति ॥ १०७२ ॥**

चेतनश्चेतनाना इति श्रुतिप्रतिपाद्ये विष्णौ चेतनशब्द अन्तर्भावितोत्कर्ष एव । चित् चेतन इति चानर्थान्तरम् । तथा च 'पवित्राणा पवित्रो य ' इत्यत्र पवित्राणामिति

निर्दिष्टवस्त्वपेक्षया पवित्र इति निर्दिष्टस्य स्वतन्त्र निरतिशाय पावित्र्य इव अत्रापि चेतनानामिति निर्दिष्टजीवचेतनापेक्षया चेतन इति निर्दिष्टस्य हरे उत्कर्षसिद्धिर्निष्प्रत्यूह इत्याह **उत्कृष्टेति** ॥ १०७२ ॥

**मायां व्युदस्य चिच्छक्त्या कैवल्येस्थितआत्मनि ।**
**इति भागवतोक्त्या च समर्था नृहरेर्हि चित् ॥ १०७३ ॥**

**तत्पूर्णापूर्णयोश्शक्ता शक्तयोरुच्चनीचयोः ।**
**जीवब्रह्मचितोरैक्यमपि शक्यं कथं वद ॥ १०७४ ॥**

अत चिन्मात्रलक्षणायामपि ईशाचित स्वशक्त्यैव मायाव्युदासकत्वादुत्कृष्टत्व अतथाभूतचित सकाशादित्याह **मायामिति** ॥ १०७३ ॥ १०७४ ॥

**वृथा मुण्डनमेवेदं तस्मात्तद्धर्ममुण्डनम् ।**
**न्यासानर्हस्य शूद्रस्य यथा मूर्धजमुण्डनम् ॥ १०७५ ॥**

**यतश्च मुण्डिता व्यक्तिरपि तेऽर्थस्य बाधिका ।**
**यस्माच्चिन्मात्रमप्यैशं शक्तं शोकादिधूनने ।**
**जैवं तु तदशक्तं चेत्युक्तं भागवते स्फुटम् ॥ १०७६ ॥**

**मुण्डन** भागत्यागलक्षणा । **वृथा** चितोरेव तरतमभावान्नैक्यसाधकम् । वृथात्वमेवोपपादयति **यत** इति ॥ १०७६ ॥

**अतो न मुख्यतः काचिच्छ्रुतिर्वक्ति जगत्त्रये ।**
**तवापेक्षितमद्वैतं यत्सा वक्ति न तत्तव ॥ १०७७ ॥**

अतो भक्षितेऽपि लशुने न शान्तो व्याधिरित्याभाणकविषयस्त्वमभूरित्याह **यदिति । सा** तत्त्वमस्यादिश्रुति । तदा **वक्ति** ऐक्यबोधकमिति तवाभिमतम् । **न तव** लक्षणापक्षेऽपि भेदबोधकत्वात् न त्वदनुकूला ॥ १०७७ ॥

**पदद्वयेऽपि लक्ष्यार्थस्वीकारादेकलक्षणा।
लघीयसी ततस्सर्वा श्रुतिः परमतानुगा ॥ १०७८ ॥**

**परमतानुगा** सादृश्यादिगौणैक्यपरा ॥ १०७८ ॥

**किं च मुख्यार्थपरयोश्शब्दयोर्लक्षणा तव।
सामानाधिकरण्यार्थमात्रस्यामुख्यता मम ॥ १०७९ ॥**

**अतो गुणवती गौणीवृत्तिरेतादृशस्थले।
आदरार्हा शिरश्छेदात्करच्छेदो यतो लघुः ॥ १०८० ॥**

**सामानाधिकरण्येति।** अभेदबोधकविशेषणमात्रविभक्तीत्यर्थ । विशेष्य-विभक्त्या नील घटमानय इत्यादौ कर्मत्वादिबोधनात्। तेन प्रत्ययार्थबाधेऽपि बहुबाध समान इति दोषोऽलग्नको वेदितव्य अत्र सुधाया सन्न्यायरत्नावल्याश्च फलतो विरोधाभाव तर्कताण्डवे 'लक्षणातो गौण्या प्राबल्यनिर्णय' इति भङ्गे उपपादितो द्रष्टव्य ॥ १०७९ ॥ १०८० ॥

**यदन्विताभिधायीनि पदान्यन्वयबोधनम्।
उपसर्जनतः कुर्युस्तन्मुख्योऽर्थः पदोदितः ॥ १०८१ ॥**

**अयोग्यस्त्वन्वयोऽर्थो न मुख्यार्थो न तरामसौ।
यद्युक्तायुक्तविन्याससंन्यासौ च गुणोचितौ ॥ १०८२ ॥**

**पदानि** वाक्यस्थानि। **उपसर्जनतः** पदार्थविशेषणत्वेन। अन्वयश्च वाक्यबोध्य प्रमाणाविरुद्ध एव भवेत्। अन्यथा पदाना योग्यताहाने तद्घटितवाक्यस्याप्रमाणत्वापत्ते । तत् तस्मात् युक्तस्यान्वयस्य विन्यास स्वीकार अयुक्तस्य च परित्याग इत्येतौ **गुणोचितौ** गौणीवृत्त्याश्रयणेनापि न्यायप्राप्तौ ॥ ॥१०८१ ॥ १०८२ ॥

**योग्यान्वयं समादाय जहती बाधितं च तम्।**
**मुख्यार्थावभिरक्षन्ती वृत्तिस्साति**
**(मही)बलीयसी ॥ १०८३ ॥**

अमुख्यवृत्त्यो गौणीलक्षणयो स्वरूपनिरूपणपूर्वक बलाबले वक्ति। **योग्येत्यादिभिः**। योग्यान्वय सादृश्याभेदरूप समादाय। **बाधितं तं** स्वरूपैक्यरूप अन्वयम्। 'सिहो माणवक' इत्यत्र **मुख्यार्थौ** सिहमाणवकरूपौ। **सा** गौणीवृत्ति। बलीयसी लक्षणापेक्षयेति शेष ॥ १०८३ ॥

**यस्यां लक्ष्यार्थनिर्दिष्टे नास्ति तद्वाचकं पदम्।**
**लक्षकेणैव बोध्योऽसौ युक्तोऽन्योऽप्यन्वयोऽस्ति न।**
**अगत्या जहती मुख्यं वृत्तिस्साऽतिलघीयसी ॥ १०८४ ॥**

**आद्या गौणीति निर्दिष्टा द्वितीया लक्षणा किल।**
**विरुद्धाकारसंपत्ती वृत्ती द्वे नात्र संशयः ॥ १०८५ ॥**

**यस्यां** गङ्गाया घोष इत्यत्र गङ्गापदस्य तीरे लक्षणायाम्। **निर्दिष्टे** तीरे। **तद्वाचक** तीरवाचकम्। **लक्षकेणैव** गङ्गापदेनैव। **असौ** तीर **अगत्या** = सादृश्यान्तर्गणिकभेदे सत्यपि सादृष्यत्वरूपेणानुगतस्यैकस्य तात्पर्यविषयस्य अन्वयस्याभावात्। **सा** लक्षणा। **लघीयसी** गौणीत। केचित् सादृष्यमपि सबन्धविशेष विवक्षित्वा गौण्या लक्षणायामन्तर्भावमिच्छन्ति। तन्मत खण्डयति **विरुद्धेति**। दूषणप्रकारे विस्तर तर्कताण्डवे 'गौण्या लक्षणातो भेदसमर्थन' इति भङ्गे अत्रोक्तबलवत्त्वप्रकारस्य प्रायिकत्व तत्रैव व्यक्तम् ॥ १०८४ ॥ १०८५ ॥

**जहत्स्वार्थाऽजहत्स्वार्थेत्याहुर्यल्लक्षणाद्वयम्।**
**तदाद्यायां मुख्ययोगोऽप्यार्थिको न तु शाब्दिकः।**
**वाक्यार्थोऽप्यन्वयस्तीरघोषयोरेव न त्वयम् ॥ १०८६ ॥**

लक्षणाया **मुख्ययोगः** गङ्गासबन्ध तीरेण। **आर्थिकः** लक्ष्य एव। **न शाब्दिकः** न वाच्य। **न स्वयं** न गङ्गाघोषयोरपि। अजहत्स्वार्थलक्षणाया तु दध्युपघातकत्वरूपलक्ष्यताऽवच्छेदकरूपेण उपस्थिते काकेऽप्यन्वय इति विशेष.। लक्षणायामपि गङ्गाशब्दो गङ्गातीरत्वेनैव तीरोपस्थापक इत्यस्य पञ्चधोपपादन तर्कताण्डवे 'लाक्षणिकादेरपि शक्यसबन्धित्वादिनैव लक्ष्याद्युपस्थापकत्व-समर्थनम्' इति भङ्गे (६८) द्रष्टव्यम् ॥ १०८६ ॥

**लक्ष्यार्थो निर्विकल्पा धीर्यस्य तस्य मते पदम्।**
**मुख्यार्थयोगं मुख्यं च न वदेन्नापि लक्षयेत् ॥ १०८७ ॥**

**निर्विकल्पा** अन्वयानुभावकत्वशून्या। **यस्य** तार्किकस्य **पदं** लाक्षणिकादि-पदम्। अन्वय स्वार्थ वा न **वदेत्** **नापि लक्षयेदिति**। 'वाचकमेवानुभावकम्। लाक्षणिकादिक तु स्मारकमेव। शक्तस्यैवानुभावकत्वे तन्त्रत्वात्' इति मण्युक्ते। अत्र विस्तर तर्कताण्डवे 'लाक्षणिकादेरनुभावकत्वसमर्थन' इति भङ्गे (६७) ॥ ॥१०८७ ॥

**पौनरुक्त्यार्त्सिहपदं देवदत्तं न लक्षयेत्।**
**किन्तु सिंहात्मतां सिंहसादृश्यं वाऽस्य शंसति ॥ १०८८ ॥**

लक्षणाया मुख्यस्य प्रातिपदिकस्यैव अर्थत्याग। गौण्या तु अमुख्यस्य प्रत्ययमात्रस्य इति प्रागुक्त गौण्या. प्राबल्य स्मारयति। **पौनरुक्त्यादिति**। **किन्तु** प्रातिपदिकार्थात्यागेनैव ॥ १०८८ ॥

**अक्षस्य पक्षपातस्तु साक्षाद्भेदे प्रदृश्यते।**
**कामाच्च नानुमापेक्षेत्युक्तेश्शुष्कानुमाऽफला ॥ १०८९ ॥**

**तस्मात्त्वदैक्यगाथाया मानं मूलं न दृश्यते।**
**कृष्णस्नेहविनाशाय सा निर्मूला लतेव ते ॥ १०९० ॥**

सर्वप्रमाणविरुद्धा निर्मूला इय तव प्रक्रिया कृष्णे परमात्मनि तद्गुणापलापेन स्नेहविनाशिनी इति लताश्लेषेण साहित्यमुद्रयाऽऽह **अक्षस्येति**। काचन मूलवहिता गुल्मादिस्थिता लता अङ्गाभ्यक्तस्नेहयुक्ततैलविनाशिनी इति प्रसिद्धि ॥ ॥१०८९ ॥ १०९० ॥

**पदद्वयोक्तयोरैक्ये विरोधान्नास्ति ते श्रुतिः ।**
**ऐक्यं न मुख्यतोऽर्थस्याल्लक्ष्यत्वे पदयोर्द्वयोः ॥ १०९१ ॥**

**अमुख्यार्थं च मुख्यार्थभेदश्रुतिशतार्दिता ।**
**कथं वक्ति श्रुतिर्मुख्यामुख्ययोर्मुख्यतः फलम् ॥ १०९२ ॥**

**नामुख्यान्न हि हर्यक्षस्याग्रे हरिणगर्जितम् ।**
**चिन्मात्रैक्ये न काऽप्यस्ति श्रुतिरित्यश्रुतं**
**हि तत् ॥ १०९३ ॥**

**ऐक्यं** चिन्मात्रैक्यम्। पदयोर्द्वयोरमुख्यार्थ इत्युत्तरेणान्वय । श्रुति कथ वक्तीति योजना। तत्र हेतु **भेदश्रुतीति। अर्दिता** बाधिता। नामुख्यात् फलमित्यस्यानुकर्ष । **नेति** निर्धर्मिताऽवच्छेदकशाब्दबोधस्यालीकत्वात्। चितश्च निर्धर्मिकत्वात् ॥ १०९१ ॥ १०९२ ॥ १०९३ ॥

**प्रवव्राज तदद्वैतं त्वमिवाम्नायमन्दिरात् ।**
**शिरोमुण्डितमस्माभिर्बाह्येभ्यो भैक्षमाददे ॥ १०९४ ॥**

**त्वमिव** जनाना वञ्चनायैव सन्यासभाक् इव। 'न वर्णाश्रमाचारधर्मा' इति मन्वानस्य कुत वास्तव प्रव्रजनमि'ति ध्वनि । **शिरः** ऐक्यवाक्य चिन्मात्रैक्यरूपादर्थात् प्रच्यावितम्। **बाह्येभ्यः इति** निर्विशेषचित शून्यादविशेषात् इति भाव ॥ १०९४ ॥

**स्वशिरः पातिवृक्षस्य च्छेदेनाधो मरिष्यति ।**
**भेदे भिन्नादिकल्पोक्तदोषेण स्वैक्यदोषवत् ॥ १०९५ ॥**

'विशिष्टादिनिराकरणयुक्तीनामपि विशिष्टाद्यपेक्षत्वाज्जात्युत्तरमिति न युक्तिबाधाऽपी'ति तत्त्वोद्योत हृदि कृत्वा खण्डनकारोक्त भेदविकल्पदूषण अभेदपक्षेऽपि साम्योक्त्या व्याघातेन दूषयति **स्वशिर इति** ॥ १०९५ ॥

**शिशोर्जातस्य या रक्षां कुरुते जननी हि सा ।**
**सर्वखण्डनकारस्तु पूतनायाः कुमारकः ॥ १०९६ ॥**

**शिशोः** स्वाभिमतप्रमेयस्य । **सा जननी** स एव कथायामधिकारी ॥ ॥१०९६ ॥

**सर्वं खण्डयतोप्यऽस्य खण्डनं रक्ष्यमेव हि ।**
**आत्मा च रक्ष्यस्तत्काले भिक्षापात्रं करे भवेत् ॥ १०९७ ॥**

'यदि भेददर्शन न स्यात् तर्हि सकलव्यवहारविधुर· पर प्रसज्येत' इति वादावली अनुरुध्याह **सर्वमिति**। ऐक्यस्य बाधितत्वे भेदोन्मज्जनप्रसङ्गात् । **भिक्षेति** परेभ्यो भेद भिक्षित्वा खलु त्वया आत्मभिन्नेभ्य आत्मा रक्ष्य इति भाव ॥ ॥१०९७ ॥

**परन्यायैः परो दूष्यस्स्वार्थस्साध्यो मतो यदि ।**
**याचिता अपि ते न्यायास्सन्याया वा न वा वद ॥ १०९८ ॥**

'नापि परन्यायै· परस्य दूषणम् । परस्यापि स्वन्यायस्वक्रियाविरुद्ध-विकल्पसाधुत्वाप्रसिद्ध्या बोधयितुमशक्यत्वात्' इति वादावल्युक्तमाह **परेति** ॥ ॥१०९८ ॥

**सन्न्यायाश्चेज्जितं तेन दुर्न्याया अपि चेज्जितम् ।**
**स्वेष्टापुष्टेः किमु व्योमनीलिम्ना सोमनीलिमा ॥ १०९९ ॥**

सन्न्याया इति पक्षे । **तेन** परेण त्वयैव तन्न्यायाना साधुत्वाङ्गीकारात् । दुर्न्याया इति चेत् न याचितैरपि तै तव पक्षसिद्धि । तदाह **स्वेष्टापुष्टेः**। स्वेन इष्टस्य खण्डनस्यापि असिद्धे । तत्रार्थान्तर **किमु इति** याचितस्य व्योमनीलिम्न एवाप्रामाणिकत्वात् ॥ १०९९ ॥

**उष्ट्रः कण्टकमेवात्ति तृणं गोर्दर्दुरो मृदम् ।**
**शिलाकणान्कपोतोत्ति स्वयं शाल्योदनप्रियः ॥ ११०० ॥**

**स्वयमित्यपहासः** स्वयमपि कण्टकाद्याहारवान् भवेरिति ॥ ११०० ॥

**गोपुच्छग्रहणेनापि गोष्ठप्राप्तिर्भवेत्तव ।**
**गोष्ठात्तु स्वगृहप्राप्त्यै स्वयमेव यतेत हि ॥ ११०१ ॥**

**गोपुच्छग्रहणेन** पराभ्युपगतप्रमाणाद्यभ्युपगमेन **गोष्ठप्राप्तिः** परसिद्धान्त-सिद्धि· । **स्वगृहप्राप्त्यै** स्वाभ्युपगतचिन्मात्रस्य अनिर्वचनीयाविद्यादिकस्य सिद्ध्यै **स्वयमेव यतेत** अविद्यातत्कार्यमिथ्यात्वसाधकप्रमाणाना उपन्यस्य समर्थनीयत्वात् । पराक्रान्त च परेण तदर्थम् ॥ ११०१ ॥

**अभेदार्थे बाधिते तु श्रुतेरन्यार्थतां परः ।**
**ब्रूते परस्य न्यायेऽस्मिस्त्वं कस्मान्न प्रवर्तसे ॥ ११०२ ॥**

किञ्च 'वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना' इति न्यायम् । परो ब्रूते । तत्र तव न प्रवृत्ति । प्रत्युत भेदवाक्याना सर्वथाऽतत्त्वावेदकतैवेति त्व आस्थित । अतो रिक्थमिद ते वच परन्यायाङ्गीकार इतीत्याह **अभेदार्थे इति** ॥ ११०२ ॥

**विच्छिद्य सिंहपुच्छादिपुरुषस्य करादि च ।**
**तयोरैक्यं वदन्तः के परे यद्याचको भवान् ॥ ११०३ ॥**

किञ्च त्वया दुर्भाषिता न्याया न केनापि परेणोक्ता इति अनेकधा निरूपयति **विच्छिद्येति** जहदजहल्लक्षणा न केनापि स्वीकृतेति भाव· ॥ ११०३ ॥

**परन्यायैः परो बोध्या इति वाङ्मात्रमेव ते ।**
**मिथ्याभूतप्रमाणेन कोऽर्थसिद्धिं परो वदेत् ॥ ११०४ ॥**

**ऐक्यवेदकवाक्यानां मानत्वं कः परो वदेत् ।**
**अन्येषां वेदभागानाममानत्वं च को वदेत् ।**
**शब्दादेवापरोक्षं च कः परो वक्ति भूतले ॥ ११०५ ॥**

**इत्थं न्यायस्यैव भेदान्नान्यस्य न्यायतस्तव ।**
**अर्थसिद्धिर्भवेन्मन्दस्वन्यायानुसृतौ च ते ।**
**वाच्या सर्वा व्यवस्थापि तेनास्थापि मतं परैः ॥ ११०६ ॥**

एव मिथ्याभूतस्य साधकत्व, प्रत्यक्षादिसकलप्रमाणविरुद्धार्थे वाक्याना प्रामाण्य, तत्सिद्धार्थबोधकाना अमानत्व, शब्दादेवापरोक्ष इत्यादीनि न केनापि परेण स्वीकृतानि । अत्र सर्वत्रापि अगत्या स्वन्यानुसृतिरेव वक्तव्या । तथैव पर प्रमेय स्व स्थापयेदेवेत्याह **मिथ्येत्यादिना**। अस्थापीति लुङ् ॥ ११०४ ॥ ११०५ ॥ ॥१००६ ॥

**सोऽयमित्यादिवाक्येऽपि न त्यागोस्ति**
**पदार्थयोः ॥ ११०७ ॥**

तत्त्वमस्यादिवाक्य अखण्डार्थनिष्ठ अकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकृतत्वात् तन्मात्रप्रश्नोत्तरत्वात् । सोऽय देवदत्त इति वाक्यवत् इति परानुमान दूषयति **सोऽयमित्यादिना** । तत् दृष्टान्त साध्यविकल । अनुपपत्त्यभावेन स· अय इति पदयो लक्षणाऽऽश्रयणानुपपत्तेरित्याह **नेति** ॥ ११०७ ॥

**प्राग्देशकालयोगस्यातीतत्वं वक्ति तत्पदम् ।**
**इदंपदं तु वक्त्येतद्देशकालानुबन्धिताम् ॥ ११०८ ॥**

**तद्देशकालयोगस्य ह्यस्य यं तत्पदोदितम् ।**
**कस्त्यजेदन्यदस्त्येव विशेषणपदोदितम् ॥ ११०९ ॥**

'अनित्यदेशकालसबन्धित्वस्य सत्त्वान्न सोऽय देवतेत्युपमा च' इति तत्त्वोद्योतवाक्य विवृणोति **प्रागिति** स इति। स इति पदं खलु न अतीतदेशकालसबन्धमाह येन तस्य अयमिति इदन्ताविधानकालेऽभावेन अनुपपत्त्या पदार्थस्वरूपमात्रे लक्षणाऽऽश्रयण किं नाम तस्यातीतत्वमपि। अतीतत्व च ध्वस इदानीमस्त्येवेति काऽनुपपत्ति इत्याह **क इति। अन्यत्** इदता एतद्देशकालसबन्ध । स तु अस्त्येवेत्यविवादम्। अत न पदद्वयेऽपि लक्षणाऽवकाश ॥ ११०८ ॥ ११०९ ॥

**विशेष्यपदवाच्यस्य त्वीषत्त्यागोऽपि नेष्यते ।**
**वाक्येऽस्मिन्नन्यवाक्ये तु मृद्घटस्वर्णमेव हि ।**
**कर्णभूषणमित्याद्ये नैकत्यागेऽपि विद्यते ॥ १११० ॥**

ऐक्यसिद्धये मृद्घट सुवर्णभूषण इत्यादिकमेव त्वया उदाहर्तुमुचितम् । तत्र तु एकस्यापि न त्याग इत्याह **मृदिति** ॥ १११० ॥

**यो दण्डी कुण्डली चासाविति दण्डविशिष्टतः ।**
**स्यात्कुण्डलविशिष्टैक्यं किमेके दण्डकुण्डले ॥ ११११ ॥**

सामानाधिकरण्य हि दण्डाश्रयस्य कुण्डलाश्रयेणैव तादात्म्यमवलम्बते न तु दण्डकुण्डलयोरित्याह **य इति** ॥ ११११ ॥

**विशेष्योपादानकस्य विशिष्टस्य हि जन्मनि ।**
**विशेषणं निमित्तं नस्तदैक्येऽस्यैकता कुतः ॥ १११२ ॥**

विशेष्यः पुरुष, विशिष्ट दण्डी, विशेषण दण्ड । तत्र पुरुषोपादानकदण्ड्युत्पत्तौ दण्ड निमित्तकारणम् । **तदैक्ये** पुरुषाद्दण्डिनो भेदाभेदेन अभेदस्यापि सत्त्वे । **अस्य** दण्डस्य ॥ १११२ ॥

**अथौद्धत्याद्विशिष्टैक्यं यदि क्वापि न मन्यसे।**
**तर्हि दृष्टान्तशून्यत्वाद्गतमापादनं तव ॥ १११३ ॥**

एव व्यभिचारे प्रदर्शिते तत्परिहाराय यदि वैयात्यात्कुत्रापि विशिष्टैक्य नाङ्गीकरोमि इति ब्रूयात्तर्हि तर्के आपादकासिद्धिरित्याह **अथेति** ॥ १११३ ॥

**अस्ति रूपविशिष्टैक्ये रूपैक्यमपि यद्यपि।**
**भेदाभेदमते तच्च न ते तर्कनिदर्शनम् ॥ १११४ ॥**

**कार्यकारणभावाद्वा धर्मधर्मित्वतोऽपि वा।**
**ईदृग्विशेषणैक्यस्य प्राप्तिस्तव ममापि च ॥ १११५ ॥**

**अप्रयोजकमेवाभूद्विशिष्टैक्यमिहावयोः।**
**औपाधिकसमावेशे व्याप्यव्यापकता न हि ॥ १११६ ॥**

**रूपविशिष्टैक्ये** रूपी घट इत्यत्र रूपविशिष्टस्य घटेनैक्ये **रूपैक्यं** रूपस्य घटेनैक्यम्। **भेदाभेदमते** अयावद्द्रव्यभाविधर्माणा धर्मिणा भेदाभेदौ इति मते। तत्रोपाधिनिमित्त एवाभेद काचित्क न त्वत्तर्कोपयोगिव्याप्ति प्रयोजयतीत्याह **औपाधिकेति**। 'सहदर्शनमात्रेण न व्याप्तिरवसीयते' इत्युक्ते। सोपाधिकसबन्धेनापि व्याप्त्यध्यवसाये वह्नेर्धूमेनापि तन्निश्चय स्यादिति भाव ॥ ॥१११४ ॥ १११५ ॥ १११६ ॥

**अतो निदर्शनं नेदं यदि भिन्ने विशेषणे।**
**विशिष्टैक्यबलादेव स्यादैक्यमपि कुत्रचित् ॥ १११७ ॥**

**निदर्शनं तदेव स्यात्तच्च नाङ्गीकृतं त्वया।**
**तदा निदर्शनं नेति सुष्ठूक्तं पूर्वसूरिभिः ॥ १११८ ॥**

**इदं** रूपघटनिदर्शनम्। न व्याप्तिसाधन न। तर्हि कीदृश निदर्शन व्याप्तिगमक स्यादित्यत आह **यदीति**। **भिन्ने** कार्यकारणभावाद्युपाधिमन्तरेणापि

स्वभावत एव भिन्ने धूमवह्निरूपे विशेषणे **विशिष्टैक्यबलात्** धूमवतः वह्निमतश्च पर्वतस्य विशिष्टस्यैक्यबलात् **ऐक्य** धूमवह्निरूपविशेषणयोरैक्य स्यात्। तर्हि तदेव **निदर्शनं** व्याप्तिनिश्चायक स्यात् इति उत्तरेणान्वय । तादृश निदर्शन नास्ति त्वया नाङ्गीकृत च । **सुष्ठु उक्तं** व्याप्तिविकलस्तव तर्काभास इत्युक्तम् ॥१११७ ॥ ॥१११८ ॥

**किञ्चैवमपि सार्वज्ञपूर्वधर्मविशिष्टतः ।**
**अज्ञतादिविशिष्टाच्च चिन्मात्रैक्यमिहोच्यताम् ॥ १११९ ॥**

**यतोऽस्ति गुणगुण्यैक्यमपि जीवे हरौ च नः ।**
**उक्तैतद्बाधकाभावाल्लक्षणावसरोऽत्र न ॥ ११२० ॥**

विपर्यये पर्यवसानविकालोऽपीत्याह **किञ्चेति**। 'नास्ति च विशेषणयो सर्वज्ञत्वाल्पज्ञतयोरैक्य अतो विशिष्टयोर्जीवेशयोरपि नैक्य इति अखण्डवादिना त्वया पर्यवसातव्यम् । न च तथा प्रकृते सभवति । अल्पज्ञत्वादिधर्माणा जीवेन चिता सर्वज्ञत्वादिधर्माणा परमात्मना चिता चाभिन्नत्वेन, जीवेशयोरिव तत्तदभिन्नयोर्विवशेषणयोश्चिन्मात्रैक्यस्य त्वद्रीत्यैव निष्प्रत्यूहत्वादित्याह **चिन्मात्रेति**। **उक्तैतद्बाधकाभावात्**। बाधकाभिमतस्य तर्कस्य आभासत्वादिति भाव ॥ ११२० ॥

**विशेषणद्वयस्यात्र यद्यप्यस्ति विरुद्धता ।**
**न सा दृष्टान्तवाक्ये मे तदेतौ द्राविडान्धकौ ॥ ११२१ ॥**

**अत्र** दार्ष्टान्तिके। **विरुद्धता** कदाऽपि असहावस्थानम्। **सा** विरुद्धता। **दृष्टान्तवाक्ये** सोऽय देवदत्त इत्यत्र **मे न**। क्रमेण श्यामत्वरक्तत्वयोरेकस्मिन् फले इव तत्तेदन्तयोरपि एकस्मिन् देवदत्ते समावेशासभवादेव। तदुक्त न्यायामृते 'कालद्वयेन योगस्य क्रमेण स्थायि वस्तुनि। नैल्यरक्तत्ववत्सत्त्वात्तदुक्तौ का विरुद्धता' इति (२९३ । प४९१)। **एतौ** दृष्टान्तदार्ष्टान्तिकौ। **द्राविडान्धकौ** अन्योन्यवार्तानभिज्ञौ ॥ ११२१ ॥

**तत्ते दृष्टान्तचर्चेयं न दार्ष्टान्तिकसिद्धये।**
**क्रमेलकोयंकदली पक्वत्वङ्मोचनं च सा॥ ११२२॥**

**तत्** तस्मात्। **न सिद्धये** प्रत्युत अखण्डार्थत्वखण्डनायैव। दृष्टान्तवाक्यस्य विशिष्टार्थकत्वादेव। तदुक्त तत्त्वोद्योते 'अत कैर्विशेषणैर्विशिष्ट इति प्रश्ने प्रकृष्टप्रकाश तद्देशाकालादिविशिष्ट एव वाक्यार्थ' इति। अत स्वरूपमात्र-प्रश्नोत्तरत्वहेतो अखण्डार्थनिष्ठत्वरूपसाध्यस्य च अभावात् दृष्टान्तचर्चा त्वया क्रियमाणा सर्वाऽपि अनर्थायैव। तत्र दृष्टान्त **क्रमेलकः** उष्ट्र। **अय** दार्ष्टान्तिक। **सा** चर्चा। कदलीफलस्येव पुरुषार्थस्य हेतो प्रमाणादिकस्य चर्चा, कण्टकभक्षयितुरिव जगत्कण्टकस्यैक्यस्य प्रतिपादयितुस्तस्य वाक्यस्य प्रमाणविचारोऽनर्थकर एवेति ध्वनि॥ तथा हि। विशिष्टैक्यानुपपत्तावपि दण्डकुण्डलोपलक्षितयोरैक्य विवक्ष्यते इति चेत् देवदत्तस्वरूपमात्रैक्यसिद्ध्या वाक्यवैयर्थ्यम्। अदण्डिव्यावृत्त्यादिसिद्ध्या सार्थक्य इति च न युक्तम्। दण्डसबन्धानुक्तौ व्यावर्तकत्वासिद्धे। काकस्य उपलक्षकत्वमपि तस्य वा तत्कृतस्योत्तृणत्वादिधर्मस्य गृहसबन्ध एव सिद्ध्यति। सर्वथा तदसबन्धिन-स्तद्व्यावर्तकत्वमलौकिकम्। व्यावृत्तिवैशिष्ट्यासिद्ध्याऽपि सखण्डार्थत्वमेव। अभाववैशिष्ट्याङ्गीकारेऽपि तदपरिहारात्। व्यावृत्तेश्च भेदापरपर्यायत्वेन तदङ्गीकारस्य सुतरामनर्थकत्वात्। व्यावर्तकत्व च न व्यावृत्तिजनकत्वम्। धर्मिस्वरूपाया व्यावृत्ते धर्मिजनकेनैव उत्पत्ते। विशेषणस्य वा उपलक्षणस्य वा तज्जनकत्वायोगात्। नापि व्यावृत्तिधीजनकत्वम्। धर्मिज्ञाने एव सर्वतो व्यावृत्तिज्ञानस्यापि सिद्धत्वात्। तदुक्त तत्त्वनिर्णये 'भेदश्च स्वरूपदर्शन एव सिद्ध'। किन्तु व्यावृत्तिधीहेतुधीविषयत्वम्। तच्चानुमापकत्व व्यावर्त्यसबन्ध-मेवापेक्षते। पर्वतसबन्धिनि एव धूमे अवह्निमद्व्यावर्तकत्वदर्शनात्। तथा च सत्यत्वादे· सर्वथा चिदसबन्धिन कथ व्यावर्तकत्वम्। ज्ञान च विषयमनन्तर्भाव्य स्वसामग्रीमहिम्नैव ज्ञानान्तरव्यावृत्तम्। कलमबीजाद्भिन्ने वेत्रबीजे तथाभाव-दर्शनात्। देवदत्तसबन्धित्वस्य उभयत्राविशेषात्। मध्येमार्गं पतितयो-स्तदभावाच्च॥ अत· उपलक्षणत्वेऽपि उपलक्ष्यसबन्धस्यानिवार्यत्वेन सखण्डार्थमेव। विस्तरो न्यायामृते। (२१३)॥ ११२२॥

**यथा धूमविशिष्टस्य वह्निवैशिष्ट्यवर्णने ।**
**न विशेषणयोरैक्यं न त्यागो नापि लक्षणा ॥ ११२३ ॥**

विशिष्टैक्येऽपि न विशेषणैक्य न वा विशेषणत्यागेन स्वरूपमात्रे लक्षणा इत्यत्र स्पष्ट दृष्टान्तमाह **यथेति** ॥ ११२३ ॥

**तथा सति कथं व्याप्तिर्धूमवह्न्योः प्रसिद्ध्यति ।**
**व्याप्तिबोधार्थमेवैतद्वचनं सर्ववादिनाम् ॥ ११२४ ॥**

विपक्षे व्याप्तेरेवासिद्धि दोषमाह **तथेति** ॥ ११२४ ॥

**इदं तु तत्पदं पूर्ववाक्योक्तगुणयुक्तताम् ।**
**ब्रह्मणो वक्ति देशादिव्यापकस्य न चापरम् ॥ ११२५ ॥**

इद तत्त्वमसीत्यत्र विद्यमानम् । न **चापरमिति** । देवदत्तस्येव तदेतद्देशाकालसबन्धिताम् । तस्या देशाकालापरिच्छिन्नो सिद्धत्वेनाबोधनीयत्वात् ॥ ११२५ ॥

**सत्यत्वात्मत्वैतदात्म्यपूर्वाः पूर्वपदोदिताः ।**
**गुणास्स्वार्थसमास्तेषां त्यागोऽर्थत्याग एव ते ॥ ११२६ ॥**

**पूर्वपदेति** ऐतदात्म्यमिद सर्व तत्सत्य स आत्मा इति पूर्वपदेत्यर्थः । **ते इति** उक्तगुणाना त्वत्सिद्धान्तपरमप्रमेयत्वात् ॥ ११२६ ॥

**अतः क्लीबविवाहार्थं चित्रस्त्रीप्रार्थनं तव ॥ ११२७ ॥**

**क्लीबेति** सर्वथा ज्ञानरूपसूत्वजनकतत्त्वमसिवाक्येत्यर्थ । अखण्डार्थत्व ज्ञानाजनकमिति चानर्थान्तरम् । सर्वेषा ज्ञानाना इदमित्थमिति सप्रकारकतयैव उत्पद्यमानत्वस्वरूपत्वात् । **चित्रस्त्रीप्रार्थनं** असभविदृष्टान्तगवेषणम् ॥ ११२७ ॥

**विशेष्यब्रह्मशब्दार्थसार्वज्ञादिगुणाम्बुधेः ।**
**निषेधः कुत्र दृष्टस्ते त्वं पदार्थगुणस्य च ॥ ११२८ ॥**

**किञ्चाविनाशी जीवोनुच्छित्तिधर्माश्रुतौश्रुतः ।**
**न कर्मणा कनीयान्यो नित्योऽस्य महिमाऽपि च ॥ ११२९ ॥**

गुणाना त्याग न तन्मिथ्यात्व प्रमाणाभावात् । प्रत्युत जीवगुणाना 'अविनाशी वे'त्यादिश्रुतिभि, ईशगुणाना च 'न कर्मणा वर्धते' । 'एष नित्यो महिमा' इत्यादिभि सत्यत्वेन सिद्धत्वादित्याह **विशेष्येति** ॥ ११२८ ॥ ११२२९ ॥

**अतस्तद्गुणसन्त्यागः प्राणत्यागः श्रुतेर्भवेत् ।**
**परन्यायस्तु नैवास्ति दग्धारण्यमृगोऽभवः ॥ ११३० ॥**

**दग्धेति** तस्य स्वतो वा वनाद्याचितस्य वाऽऽहारस्याभावादित्याशय ॥ ॥११३० ॥

**यद्यैक्योक्तिबलादेव गुणानां बाधनं तदा ।**
**उत्पन्नबालमन्त्रेण विरोधग्रहनिग्रहः ।**
**निगृहीते च तस्मिंस्त्स्याद्बालस्योत्पादनं तव ॥ ११३१ ॥**

**वाक्येति** तत्त्वमस्यादिवाक्येत्यर्थ । तदेवाद्यापि गहननिविष्टमिति नैक्यसाधनमित्यर्थ । तथा चान्योन्याश्रय इति भाव । तत्र दृष्टान्त **उत्पन्नेति** ॥ ॥११३१ ॥

**सामान्यनिर्गुणोक्त्यापि न गुणोक्तेः पराभवः ।**
**यदग्नीषोमवाक्येनैव हिंसा वागपोद्यते ॥ ११३२ ॥**

**यदि तत्त्वं पदाभ्यां ते रूपमात्रनिरूपणम्।**
**चिच्चिदित्येव चोक्तं स्यात्कस्यैक्यं**
**तेन साध्यते ॥ ११३३ ॥**

विशेषविषयकत्वेन निरवकाशत्वेन च गुणोक्तीना प्राबल्ये दृष्टान्त यदिति। निर्गुणवाक्य तु सामान्यविषयक प्राकृतगुणराहित्यार्थकत्वेन सावकाश चेति भाव ॥ ११३२ ॥ ११३३ ॥

**सोऽयमित्यत्र चोक्तं स्यात्प्राक्कालाद्यविवक्षणे।**
**देवदत्तो देवदत्तो घटो घट इति स्फुटम् ॥ ११३४ ॥**

**एवं च प्रत्यभिज्ञानस्वरूपस्यैव भर्जनात्।**
**स्थैर्यासिद्धिः पदार्थानां प्राप्ता च पुनरुक्तता ॥ ११३५ ॥**

सोऽयमित्यत्र प्राक्कालाद्यविवक्षणे देवदत्त देवदत्त इति स्फुट उक्त स्यादिति योजना। अत अभिज्ञाद्वयात्प्रत्यभिज्ञाया प्रमेयभेदो न स्यात्। एकस्मिन्कालद्वयसबन्धस्याग्रहणात्। भेदभ्रमनिवृत्ति स्थैर्यबोधकत्व च न स्यात्। तथाच जित क्षणिकवादिभि। प्रत्यभिज्ञाव्यतिरिक्तस्य तन्निराकरणोपायस्याभावादिति भाव। एतेन यदुक्त विवरणे 'सिद्ध तु निवर्तकत्वादि'ति। अभेदाबोधनेऽपि भेदभ्रमनिवर्तकत्वमात्रेण वाक्यप्रामाण्यमिति तदपि निरस्तम्। अभिज्ञाद्वयेनेव तन्निरासासभवस्योक्तत्वात् ॥ ११३४ ॥ ११३५ ॥

**पदेनानुदितो धर्मो नैव व्यावर्तको भवेत्।**
**न ह्ययं घट इत्युक्ते सिद्ध्येद्रक्तघटान्यता ॥ ११३६ ॥**

तदेव विवृणोति **पदेनेति। धर्मः** सत्यत्वादि । **व्यावर्तकः** असत्यादित· । निदर्शयति **नेति** किन्तु घटे रक्तत्वविरोधिश्यामत्वाद्युक्तावेवेति शेष ॥ ११३६ ॥

**अतस्त्वेष्टार्थसिद्ध्यर्थं तत्तदर्थपरिग्रहे ।**
**आवश्यके रूपमात्रलक्षणा कुत्र कथ्यताम् ॥ ११३७ ॥**

**रूपेति** स्वरूपेत्यर्थ· ॥ ११३७ ॥

**पूर्वोत्तरत्वं चैकस्य स्यादेवोक्तव्यवस्थया ।**
**तत्सोऽयमिति वाक्यार्थ ऐक्यं स्यादविरोधतः ॥ ११३८ ॥**

**सार्वज्ञसर्वशक्तत्वपूर्णानन्दत्वपूर्वकः ।**
**तत्पदार्थो ब्रह्मगुणो दुःखित्वाज्ञत्वपूर्वकः ॥ ११३९ ॥**

**जैवो गुणस्त्वं पदार्थो यदि तत्त्वं पदोदितः ।**
**कथं पुनस्तयोरैक्यं स्यादत्यन्तविरुद्धयोः ॥ ११४० ॥**

**उक्तव्यवस्थयेति** । यथोक्त न्यायामृते 'तत्तादेरतीतत्वेऽपि यदान्विततया ज्ञाते एव तात्पर्यविषयीभूतेतरान्वयधी तत्वरूपविशेषणत्वस्य सभवात्' इति अत एवाहु सदसद्वा समानाधिकरण विशेषणमि'ति च ॥ ११३८ ॥ ११३९ ॥ ११४० ॥

**असीत्यैक्यस्य धर्माणां लटोक्ता वर्तमानता ।**
**श्रुत्युक्तधर्मस्याध्यासे त्वैक्याध्यासः**
**कुतो न ते ॥ ११४१ ॥**

तत् त्वमसीत्यनेन तत् त्वपदाभ्या धर्मा , असीत्यैक्य, लटा च वर्तमानता इति त्रय उक्तम् । तत्र धर्माणा अध्याये ऐक्यस्यापि तथात्व, ऐक्यस्य सत्यत्वे वा धर्माणामपि सत्यत्व अवश्य अङ्गीकार्य श्रुत्युक्तत्वाविशेषात् इत्याह **असीति** ॥ ॥११४१ ॥

**त्यजेदेकं कुलस्यार्थ इति न्यायमनुस्मर ॥ ११४२ ॥**

इद चोपेत्योक्तम् । वस्तुतस्तु बहुधर्मरक्षणाय एकस्यैक्यमात्रस्य परित्याग एवोचित इत्याह **त्यजेदिति** ॥ ११४२ ॥

**अद्याप्यसिद्धेरैक्यस्य धर्माध्यासः कुतो हरेः।**
**सत्यस्सो अस्य महिमेत्यस्ति हि श्रुतिरञ्जसा॥ ११४३ ॥**

ऐक्यवाक्यबलादेव धर्माध्याससिद्धिरिति न युक्तमित्याह **अद्यापीति**॥ ॥११४३ ॥

**अध्यस्तधर्माद्व्यावृत्तौ भवेच्छुक्तिरशुक्तिका।**
**इतरस्माद्विरूप्यत्वं व्यावर्तयति धर्मिणम् ॥ ११४४ ॥**

**किञ्च सर्वज्ञचाल्पज्ञाद्व्यावर्तयति धर्मिणम्।**
**व्यावृत्तिर्नामभेदोतो व्याहतिश्च ध्रुवा तव ॥ ११४५ ॥**

वस्तुवृत्तिधर्मस्यैव व्यावर्तकत्व न तु अध्यस्तस्येत्यनङ्गीकारेऽतिप्रसङ्गमाह **भवेदिति**। रूप्यत्व विद्यमानमेव नत्वध्यस्तम्॥ ११४४ ॥ ११४५ ॥

**किञ्च कल्प्यमकल्प्यं वा सार्वज्ञं ब्रह्मणश्चितः।**
**सार्वज्ञरहितायास्ते शुद्धायास्स्वोपलक्षिताम् ॥ ११४६ ॥**

**चितं व्यावर्तयेन्न्यायसाम्याज्जीवचितो यथा।**
**जैवो धर्मोऽपि तच्छून्यचिन्मात्रात्स्वोप-**
**लक्षिताम्॥ ११४७ ॥**

**चितं व्यावर्तयेदेव ततश्चिन्मात्रयोस्तव।**
**कथमैक्यमिदं वाक्यं वक्ति यौक्तिकसंसदि॥ ११४८ ॥**

चिन्मात्रैक्य तु सर्वथा न सिद्ध्यतीत्याह त्रिभि **किञ्चेत्यादिना**। कल्प्यमित्यनास्थया। **सार्वज्ञं** तत्पदोक्तम्। **ब्रह्मणः चितः** ब्रह्मचिति विद्यमानम्। सार्वज्ञरहितादिति हेतुगर्भम्॥ **शुद्धायाः चितः** चिन्मात्रा। **स्वोपलक्षितां चितं** सर्वज्ञत्वोपलक्षिता ब्रह्मचितम्। **व्यावर्तयेत्** तत्र हेतु· **न्यायसाम्यात्** इति। साम्यस्थल **जीवचितो यथेति**। एव **जैवो धर्मः** अल्पज्ञत्व त्वपदोक्तम्।

**स्वोपलक्षितां चितं** अल्पज्ञत्वोपलक्षिता जीवचितम् । व्यावर्तयेदेव न्यायसाम्यात् ब्रह्मचित यथा इति योजनीयम् । तथाच तदित्यस्य सर्वज्ञ ब्रह्मचिदेव न तु जीवचित् नापि चिन्मात्र इत्यर्थ, त्वदित्यस्य च अल्पज्ञजीवचिदेव न तु ब्रह्मचित् नापि चिन्मात्र इत्यर्थ सपत्र इति चिन्मात्रस्य पदद्वयेनापि व्यावर्तितत्वात् न कथचित्तदैक्यसिद्धिरित्याशय ॥ ११४६ ॥ ११४७ ॥ ११४८ ॥

**व्यावृत्तेरनपेक्षायां चिच्चिदित्येव तद्वदेत् ।**
**का नो हानिरतो भेदवादिनां तत्त्ववादिनाम् ॥ ११४९ ॥**

व्यावृत्तेरनपेक्षायां अन्यापोह एव शब्दार्थ इति बौद्धमताप्रमोषेण लक्षणचिन्मात्रैक्याङ्गीकारे । **का नो हानिः** प्रत्युत तदैव आगत स एव पौनरुक्त्यवैयर्थ्यादिरूप दुरात्मा दोष पिशाच इति भाव ॥ ११४९ ॥

**अतः प्रत्यक्पराग्भावादल्पसाम्यात्तयोस्सदा ।**
**सादृश्यैक्यपरैवेयं वाग्बिम्बप्रतिबिम्बयोः ॥ ११५० ॥**

**सादृश्यैक्येऽपि वार्क्सिहो देवदत्त इति स्फुटा ।**
**मुखं चन्द्रः पदं पद्ममित्याद्याश्च सहस्रशः ॥ ११५१ ॥**

'प्रतिबिम्बेष्वल्पसाम्य' इति भाष्योक्तमाह **अल्पेति** ॥ ११५० ॥ ११५१ ॥

**एकत्वरूपणे न स्यादुपमानोपमेययोः ।**
**रूपकाख्यो ह्यलङ्कारो वाक्यसौन्दर्यपोषकः ॥ ११५२ ॥**

**अतस्सार्वजनीनेऽर्थे सति सर्वा विरोधिनि ।**
**स्वतोऽन्यतो विरुद्धार्थं को नून्मादी वदेद्वद ॥ ११५३ ॥**

यादृश्यैक्ये अभेदव्यवहार 'अखिलाज्ञानमतध्वान्तदिवाकर' इत्यत्रेव रूपकालङ्कारपोषक इत्याह **एकत्वेति**। एव प्रयोगे लघुमाशब्देन बह्वर्थलाभश्च फलम् ॥ ११५२ ॥ ११५३ ॥

**ईशाभेदस्य कथनं स्तब्धस्तब्धत्ववृद्धिदम् ।**
**प्रकृतासङ्गतं च स्याच्छिष्यकल्पतरोर्गुरोः ॥ ११५४ ॥**

**शिष्यकल्पतरोः** पुत्रवत्सलस्य उद्दालकमुने । **स्तब्धस्य** प्रागेवानूचानमानिन स्तब्धस्य पुत्रस्य । स्तब्धत्ववृद्धिद । 'ईश्वरोऽहमह भोगी' इति अभेदानुसन्धानस्य स्तब्धतारूपत्वात् ॥ ११५४ ॥

**मानेन स्तब्धचित्तस्य प्रतिबिम्बत्वरूपणे ।**
**ईशाधीनत्वबोधाप्त्या वाक्यं स्यादतिसङ्गतम् ॥ ११५५ ॥**

गर्वपरिहारप्रकरणत्वात् ईशाधीनत्वोक्तिरेव श्लिष्टेत्याह **मानेनेति** । तदुक्त तत्त्वनिर्णये सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयास' इत्यात्मनोऽन्य अनूचानत्वादिगुणप्रद परमविज्ञाय स्तब्धस्य पराधीनत्वज्ञापनेन स्तब्धता निरस्य तन्निष्ठा ह्यत्रोपदिश्यते इति ॥ ११५५ ॥

**दृष्टेऽर्थेऽयुक्तशिष्टोक्तेस्तमेवार्थं विमर्शवान् ।**
**को गृह्णीयाद्विषं भुंक्ष्वेत्युक्ते किं**
**विषमत्ति तत् ॥ ११५६ ॥**

**दृष्टेऽर्थे** आपातप्रतीतार्थे अयुक्ता च सा शिष्टोक्ति इति विग्रह । शिष्टस्य आप्तस्य उक्ति । आप्तोक्तस्यापि प्रमाणविरुद्धस्यापातार्थस्य, विमर्शवान् शिष्य, क तमेवार्थ अयुक्तमेवार्थ गृह्णीयात् । तत्र निदर्शन **विषं भुंक्ष्वेति** । द्विषदन्न न भोक्तव्यमिति तात्पर्येण आप्तेनोक्ते सति । **किं विषमत्ति** नैव अत्ति । किन्तु प्रमाणविरुद्धार्थप्रयोगेण तस्य क्रोध अनुमाय, क्रोधस्य च आत्मन शत्रुगृहान्न भक्षणोद्यमत इति च अनुमाय, द्विषदन्नस्य अभोक्तव्यतामेव वाक्यतात्पर्यार्थं निश्चिनोति । तदुक्त 'वाक्यलिङ्गकानुमा हि सा' इति ॥ ११५६ ॥

**अत एव गुरुश्शिष्यस्तब्धबुद्धिं पदे पदे ।**
**विचारशीलां रचयन्स्पष्टं नाचष्ट कार्यवित् ॥ ११५७ ॥**

तदाधीनोऽसीति स्पष्टमनुक्तौ कारणमाह **विचारेति** ॥ ११५७ ॥

**अद्यापि बुद्धिवैशद्यसिद्ध्यर्थं वक्रमुद्रया ।**
**आलिख्य वर्णशिक्षायां मेधामाधावयन्ति हि ॥ ११५८ ॥**

**वक्रमुद्रया** क्रममुल्लघ्य ॥ ११५८ ॥

**बोधोबुद्ध्यै तथा प्राह मन्तारं मन इत्यपि ।**
**अभ्रमाय प्रजाशब्दं तत्र प्रायुंक्त चोपरि ॥ ११५९ ॥**

'मननान्मन उद्दिष्टा' इति विमर्शार्थ मन्तार जीव मन शब्देन प्राह । मम भ्रमो मा भूदिति कृपया प्रजाशब्दप्रयोगेण तदर्थ व्यवृणोत् ॥ ११५९ ॥

**अहंब्रह्मेति योऽनुक्त्वा त्वं ब्रह्मेत्याह मां गुरुः ।**
**अतो नास्य प्रतीतार्थ इत्यन्यार्थे करोन्मतिम् ॥ ११६० ॥**

**कथं स्वशिष्यस्य मम स्वाशिष्यब्रह्मतां वदेत् ।**
**कथं च दुःखिनोऽज्ञस्य ब्रह्मत्वमपि मेऽधुना ॥ ११६१ ॥**

यदि जीवाभेद एव पित्रा जिज्ञापयिषित तदा मदधिकस्य स्वस्यैव अग्रत ब्रह्मता 'अह ब्रह्मेति शब्दविन्यासेन अवदिष्यत् । तथाऽनुक्त्वा अधम मा 'त्व ब्रह्मेति' उक्तवान् । अत, **अस्य** वाक्यस्य । **न प्रतीतार्थः** प्रतीत एवार्थ, न तात्पर्यविषयभूत । **स्वाशिष्यब्रह्मता** स्वस्य अशिष्यरूप प्रत्युत स्वामित्वेन नित्य आराध्यदेवतारूप यद् ब्रह्म, तदात्मता तदैक्यम् । यद्वा स्वेन अशिष्या, उपदेष्टुमनर्हा अनर्थहेतुभूता या ब्रह्मता ब्रह्मैक्य ताम् । **अधुना** असीत्युक्त्या वर्तमानकाले । स्वकाले 'नाह निर्दु ख' इति भेदस्य अस्तिता गृह्णन् साक्षी तस्य त्रिकालबाध्यतामेव निश्चिनोतीति हृदयम् । तदुक्त 'स्वकाले ह्यस्तिता गृह्णन् साक्षात्कारस्त्रिकालगम् । प्रतिषेध निरुन्धानो गृह्णात्येवात्यबाध्यतामि'ति ॥ ११६१ ॥

**प्रजामूलब्रह्मता स्यात्कथं तास्वधमस्य मे ।**
**प्राणसंस्थस्य जीवस्य प्राणाख्यब्रह्मता च न ।**
**सुप्तौ च येन संपन्नस्सो सुप्तौ स्यामहं कथम् ॥ ११६२ ॥**

**प्रजामूलेति** 'सन्मूला सोम्य इमा सर्वा प्रजा' इत्यत्रोक्तेत्यर्थ । **प्राणसंस्थस्येति** । 'प्राणबन्धन हि सोम्य मन' इत्युक्तस्येति भाव । **संपन्नः** न तु एकीभूत ॥ ११६२ ॥

**करुणापूर्णगुरुणा तन्नात्र ब्रह्मतोच्यते ।**
**ममेति निर्ममो भूत्वा पुनर्मीमांसकोऽभवत् ॥ ११६३ ॥**

**निर्ममः** ममैवेद अनूचानत्व इति स्तब्धताया निष्क्रान्त ॥ ११६३ ॥

**अस्ति सादृश्यमात्राच्च वस्तुवस्त्वन्तरात्मना ।**
**कथ्यमानं तत्र तत्र सेयं वात्तावतैव न ॥ ११६४ ॥**

**प्रतीचस्स्वनियन्तुश्च कथं सादृष्यमात्रतः ।**
**पराचीशनियम्ये च मयीयं वाक्प्रवर्तताम् ॥ ११६५ ॥**

**प्रतिबिम्बं दर्पणस्थं मुखमित्येव लौकिकाः ।**
**वदन्ति तन्नियम्योऽसौ परा क्व प्रतिदृश्यते ॥ ११६६ ॥**

**तत्र तत्र** आदित्यो यूप', अग्निर्माणवक इति लोकवेदयो । **तावतैव** केवल सादृश्यमात्रेण । किन्तु प्रतिबिम्बस्येव तन्नियम्यत्वेनापि । यथोक्त भाष्ये 'अत एव भिन्नत्वतदधीनत्वतत्सादृश्यैरेव सूर्यकाद्युपमा' इति ॥ ११६४ ॥ ११६५ ॥ ॥११६६ ॥

**अतस्तद्विधतामेव लघूक्त्या मयि बोधयन् ।**
**मतिं प्रचारयंश्चोचे नोचेदाचार्यता कथम् ॥ ११६७ ॥**

तद्विधतां प्रतिमुखविधता तदधीनत्वतत्सादृश्यपराक्त्वाभिमुख्यरूपाम् ॥ ॥११६७ ॥

**तस्मात्प्रत्यक्पराग्भावो नियामकनियम्यता ।**
**अशब्दोच्चारणस्येव सादृश्यं चाल्पमेव मे ।**
**इति प्रबुध्य दुर्बुद्धिं त्यक्त्वा भक्तो भवत्प्रभोः ॥ ११६८ ॥**

**अथापि कृपया शिष्यस्यायोग्यार्थे प्रमादतः ।**
**गतिं निवारयंत्सूत्रशकुन्यादीन्यदर्शयत् ॥ ११६९ ॥**

**तदुक्तस्पष्टदृष्टान्ते स्वयोग्यां प्रतिबिम्बताम् ।**
**ज्ञात्वेशाधीनताबोधादस्तब्धोऽभूदिति स्थितम् ॥ ११७० ॥**

**अशब्दोच्चारणस्य** शब्दोच्चारणरहितस्य प्रतिमुखस्य । **अल्पमेव** चित्वादिना न तु सार्वज्ञादितद्गतासाधारणधर्मैः ॥ ११६८ ॥ ११६९ ॥ ११७० ॥

**किञ्च जीवब्रह्मभावो यदि तस्य विवक्षितः ।**
**तर्ह्यहं तदिति ब्रूयात्सर्वं तदिति वा वदेत् ।**
**त्वं तदित्युपदेशस्तु व्यर्थस्तद्भावमानिनि ॥ ११७१ ॥**

**तद्भावमानिनि** ब्रह्मनिष्ठस्य स्वातन्त्र्यलक्षणस्य स्वस्मिन्नस्तीत्यनुसन्धानवति । **व्यर्थः** ज्ञातज्ञापकत्वेन निष्फल ॥ ११७१ ॥

**गर्विष्ठगर्वनिर्वाणकुर्वन्गुर्वग्रणीरसौ**
**अतद्वस्तुत्वमित्याहेत्यस्ति शस्ता गतिश्च मे ॥ ११७२ ॥**

अत प्रकरणानुरोधाय अतदित्येव पदच्छेद इत्याह **अत इति** ॥ ११७२ ॥

**त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः ।**
**इति प्रस्तोभितोबालैर्मेने स्वात्मानमच्युतम् ॥ ११७३ ॥**

कदाचित्पौण्ड्रको नाम काशीराजः प्रतापवान् ।
वासुदेवोऽहमित्यज्ञो दूतं कृष्णाय प्राहिणोत् ॥ ११७४ ॥

कत्थनन्तदुपाकर्ण्य पौण्ड्रकस्याल्पमेधसः ।
उच्चकैरुग्रसेनाद्यास्सभ्याः प्रजहसुस्तदा ॥ ११७५ ॥

ये सोहंभावनामूलास्ते बालाः किल सर्वशः ।
वञ्चनं किल तज्ज्ञानं कत्थनं किल तद्वचः ॥ ११७६ ॥

अज्ञोल्पमेधास्स किल यस्तत्र कृतनिश्चयः ।
सभ्यानां न तदभ्याशयोग्यं हास्यं किलाखिलैः ॥ ११७७ ॥

त्वमित्यादिभागवतश्लोकत्रय अनूद्य तदभिप्राय स्वय विवृणोति **य इत्यादिभिः । बालाः** विवेकविधुरा । प्रस्तोभित इत्यस्यार्थ 'वञ्चन किलेति । वञ्चित इत्यर्थ- । **कत्थनं** अतिहीन वचन, मुधा श्लाघनम् । **तत्र** प्रतारकवाक्ये ।**कृतनिश्चयः** याथार्थ्यनिश्चयवान् ॥ ११७३ ॥ ११७४ ॥ ११७५ ॥ ११७६ ॥ ११७७ ॥

मुख्याधिकारी तद्भावे पौण्ड्रकाख्यो सुरः किल ।
एवं विनिन्दितं सोऽहंभावं कः श्रद्दधीत तत् ॥ ११७८ ॥

**मुख्याधिकारी** निसर्गत 'ईश्वरोऽह' इति आसुरभावनावान् ॥ ११७८ ॥

यदि तत्त्वं महदिदं कथं निन्द्यं भवेत्सताम् ।
सकृन्निन्दाऽपि निन्दैव किमु निन्दापदे पदे ॥ ११७९ ॥

अत्र अनेकधा अभ्यासेन ऐक्यस्य निन्दितत्वात् तत्र निन्दाया, भेदसत्यत्वे च तात्पर्यातिशयो ज्ञापित इत्याह **पदे पदे इति** ॥ ११७९ ॥

नन्वसौ दूरमानीय शेते मामिह साधुवत् ।
इति मत्वाऽच्युतं मूढस्स्वपदातमताडयत् ॥ ११८० ॥

नन्विति कालयवनस्य ऐक्यानुसन्धाननिरूपणम् ॥ ११८० ॥

**पृथक्स्थिताच्युताज्ञानात्तत्सादृश्ययुते नृपे ।**
**यवनस्याच्युतमतिश्च्युतिकालेऽभवत्किल ॥ ११८१ ॥**

पृथक् तत्रैव गुहाया पार्श्वतो निलीनतया । च्युतिकाले तम सस्थितिसाधनकाले । 'अथ च दैत्यहति तमसि स्थिरा नियतसस्थितिरि'त्युक्ते ॥ ११८१ ॥

**एकस्मिन्नपि जीवेऽस्मिन्मूढस्याच्युतधीः किल ।**
**अतस्सर्वेषु जीवेषु सा धीर्मूढतमस्य हि ।**
**निनिन्द शुकयोगीन्द्रो यां सभास्थस्स्थले**
**स्थले ॥ ११८२ ॥**

सभास्थः गङ्गातीरे मुनिसभास्थ ॥ ११८२ ॥

**ईश्वरोऽहमिति ब्रूयुर्मदिरामत्तवृत्तयः ।**
**दैत्या इत्याह स मुनिर्व्यक्तं भूगोलनिर्णये ॥ ११८३ ॥**

यस्मिन्नुपयुक्ते इति मैरेयीनाममदस्य पानानन्तर इति पूर्वकथाऽनुसन्धेया । भूगोलनिर्णये पञ्चमस्कन्धे अधस्तनलोकवर्णनावसरे ॥ ११८३ ॥

**यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः ।**
**क्वासौ यदि स सर्वत्र स्तम्भे कस्मान्न दृश्यते ॥ ११८४ ॥**

य इति हिरण्यकशिपोर्विनाशाभिमुखस्य वचनम् ॥ ११८४ ॥

**स्वान्येश्वरनिषेधेन स्वस्यैवेश्वरता हृदि ।**
**हिरण्यकशिपोश्चेति स्पष्टं ह्यत्र प्रतीयते ॥ ११८५ ॥**

अत्र ईश्वरस्य अन्यत्वनिषेधे ऐक्यानुसन्धान सुतरा ज्ञायते ॥ ११८५ ॥

**इति भागवते प्रोक्तं तत्र तत्र कथान्तरे ।**
**अत्राधिकारिणस्सर्वे श्रूयन्ते क्रूरराक्षसाः ॥ ११८६ ॥**

**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ।**
**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥ ११८७ ॥**

**इदं गीतासु कृष्णेन ह्यासुरीं पार्थ मे शृणु ।**
**इत्यारभ्योदितं तस्मान्मतमेतद्धि रक्षसाम् ॥ ११८८ ॥**

**अतोऽपि जीवभेदोऽयं बुधैर्मान्यो मुमुक्षुभिः ॥ ११८९ ॥**

नीताया ऐक्यभावनाया विशिष्य आसुरत्वेन अवधारितत्वाच्च न तत्तत्त्वमित्याह **ईश्वर इति**। 'असत्यमप्रतिष्ठ' इत्यादिक तत्रैव वाक्यान्तरम् । अत्र जगदन्त पातिना सर्वज्ञत्वाल्पज्ञत्वादीना मिथ्यात्वेन भागत्यागलक्षणाश्रयण निन्दितमिति प्रकृतोपयोग ॥ ११८६ ॥ ११८७ ॥ ११८८ ॥ ११८९ ॥

**इत्यैक्यनिन्दनाद्ग्रन्थे स्पष्टं ग्रन्थकृतैव हि ।**
**क्वचिदापाततः प्राप्तं नैक्यं वाक्यार्थ इष्यते ॥ ११९० ॥**

**स्पष्टं** निरवकाशम् । तदुक्त वादावल्ल्या 'अमत्यमप्रतिष्ठ ये जगदाहुरनीश्वर' इति निरवकाशस्मृतिविरोधश्चेति । तदुक्त 'शास्त्र हि असन्निकृष्टेऽर्थे शब्दविज्ञान' इति 'असन्निकृष्टशब्देन द्वयमत्र जिहासितम् । ताद्रूप्येण परिच्छेद तद्विपर्ययतोऽपि चे'ति च ॥ ११९० ॥

**अविरुद्धे तु वाक्यार्थे यथा श्रुतपरिग्रहः ।**
**विरुद्धे सति वाक्यार्थे वृत्तिवृत्त्यन्तरे सताम् ॥ ११९१ ॥**

वृत्यन्तरं इति 'पूर्वायोगे परग्रह' इत्युक्ते ॥ ११९१ ॥

एवं च भवदद्वैतभिक्षू राक्षसमन्दिरे ।
भैक्षार्थमागमत्तेषां नाशे चानशनो पतत् ॥ ११९२ ॥

एवं चेति श्रुतिस्मृतिषु कुत्रापि तदभीप्सितैक्यभिक्षाया अलाभात् ततो बहिष्कृतत्वाच्च ॥ ११९२ ॥

सुपर्णौ द्वौ सहयुजौ सखायौ देहपिप्पलम् ।
ब्रह्मजीवाभिधौ नित्यं स स्वजाते परावरौ ॥ ११९३ ॥

तयोर्मध्ये ब्रह्मणोऽन्यो यस्तु जीवाभिधः खगः ।
स पुण्यपापकर्मोत्थं फलमत्ति सुखासुखम् ॥ ११९४ ॥

जीवादन्यस्तु यः पक्षी परमात्माभिधो महान् ।
सोऽनश्नन्नभितो नित्यं चाकशीति महाप्रभुः ॥ ११९५ ॥

इति श्रुतिस्तयोर्भेदं स्पष्टमाह स युक्तिकम् ।
अन्यावकाशशून्या सा मान्यौ केन न वादिना ॥ ११९६ ॥

द्वा सुपर्णेति श्रुतिं 'ॐ स्थित्यदनाभ्या च' इति सूत्रभाष्योक्तदिशा सपरिकर व्याख्याति । सुपर्णावित्यादिभिः । वृक्षमित्यस्यार्थ देहपिप्पलमिति । परीत्यस्यार्थ नित्यमिति । तयोः । मध्ये इति शेष । अन्यः परमात्मन इति पूरणीयम् । जीवाभिध इति । पिप्पलं कर्मफल सुखासुखम् । अनश्नन् भोगनिरपेक्षम् । अभि अभित नित्यम् ॥ ११९३ ॥ ११९४ ॥ ११९५ ॥ ११९६ ॥

यस्माज्जीवेशयोर्भेदव्याप्य द्वित्वाख्ययुक्तितः ।
प्राक्प्रसाध्यभिदां पश्चादशनानशनाख्यया ।
विरुद्धधर्मयुक्त्या च बलीयस्यात्तयोर्भिदाम् ॥ ११९७ ॥

पुनः प्रसाध्या पश्चाच्च श्रुतिस्स्पष्टं द्विधर्मिणीम् ।
अन्यो सावयमन्यश्चेत्याह जीवेशयोर्भिदाम् ॥ ११९८ ॥

अन्यावकाशशून्या इत्येतदुपपादयति **यस्मादित्यादिभिः । द्वित्वाख्ययुक्तितः** द्वित्वस्य उत्सर्गत भेदव्याप्तत्वेऽपि 'द्वित्व चैकस्य युज्यते' इत्युक्ते क्वचिदपवादात् आह **विरुद्धेति** । बलीयस्या इति च ॥ ११९८ ॥

**तस्माद्द्विरूपया युक्त्या श्रुत्या चोभयरूपया ।**
**साधयन्ती तयोर्भेदं केन मान्या न वादिना ॥ ११९९ ॥**

**अभ्यासश्चोपपत्ती च तात्पर्यद्योतकं त्रयम् ।**
**लिङ्गं यतोऽस्ति तत्स्वार्थान्नैव चाल्या कथञ्चन ॥ १२०० ॥**

**तद्विरुद्धा सावकाशा श्रुतिरैक्यं कथं वदेत् ।**
**प्रबलायाविरोधेन दुर्बलार्थान्तरं भजेत् ॥ १२०१ ॥**

**द्विधर्मिणी भिदा** तयोरन्य इति जीवधर्मिक भेदम् ॥ ११९९ ॥ १२०० ॥ ॥१२०१ ॥

**द्वौ बुद्धिजीवावित्याहुस्साङ्ख्यास्त्वत्पूर्वपक्षिणः ।**
**त्वं तु जीवपरात्मानौ द्वौ हृदीति प्रसाधयन् ॥ १२०२ ॥**

अत्रोक्तौ पक्षिणौ जीवपरावेव कुत॰ बुद्धिजीवौ किं न स्यातामित्याशङ्का परसमतिप्रदर्शनेन युक्तिभिश्चापाकरोति **द्वावित्यादिभिः । पूर्वपक्षिणः** गुहा प्रविष्टावात्मानौ हि तद्दर्शनात्' इति नये साख्या॰ ॥ १२०२ ॥

**तज्जीवपरमात्मानौ खगौ तव ममापि च ।**
**तद्भेदबोधिका सेयं श्रुतिरित्यपि संमतम् ॥ १२०३ ॥**

**तत्** तस्मात् । तयोरिति वा । स भेद व्यावहारिक इति तु कुकल्पना निर्मूलेत्यन्यदेतत् ॥ किञ्च तत्र यथा बुद्धिजीवाविति परतीत्योक्त तथा तत्त्वमसीत्यत्र सिद्धान्तेऽपि उपादानस्य अविद्यारूपप्रकृतेः उपादेयस्य देहेन्द्रियादेश्चाभेद एवार्थ व्याख्यायताम् । किं जहदजहल्लक्षणया चिन्मात्रैक्यकल्पनादुर्व्यसनेन । अविद्या हि

ब्रह्म विशेषण, देहाद्युपाधि तदुपादानको जीवस्य। तथा च नागृहीतविशेषणान्यायेन विशेष्यांशे बाधे विशेषणयो अविद्यातत्कार्ययोरभेदो न्यायप्राप्त । उभयोरपि जडत्वादुपपन्नश्च ।

अपि च वृक्षस्य प्रकृतिरूपतया बुद्धेरपि तद्विकारत्वेन तदेकदेशत्वेन च नात्रोक्त परिष्वङ्गो युक्त । बुद्धिजीवयोर्जडाजडयो सख्य च दुर्घटम् । सुपर्णावितौ सयुजौ सखायौ' इत्यत्र भागवते स्पष्ट जीवपरमात्मपरत्वेन व्याख्यानात् तद्विरोधश्च । आथर्वणभाष्ये अस्यैव वाक्यस्य जीवपरमात्मपरत्वेन भाषितत्वेन तद्विरोधश्च । तदेतदभिप्रेत्योक्त **तवापि च ममापि चेति** ॥ १२०३ ॥

**सुखदुःखाद्यनुभवो जीवसाक्षी किलावयोः ।**
**बुद्धिस्तु घटपूर्वार्थबुद्धिर्न सुखदुःखधीः ॥ १२०४ ॥**

युक्त्यन्तरेणापि अत्र कर्मफल सुखदु ख अत्ति इत्युक्त जीव एव न बुद्धिरित्याह **सुखेति** । 'स दु खी स सुखी चैव, स जीव इति कीर्तित ' इति परमश्रुतौ तस्य तत्तल्लक्षणत्वेनोक्ते । मनोवृत्तिस्तु बाह्यार्थविषयिण्येवेत्याह **बुद्धिरिति** ॥ ॥१२०४ ॥

**अतोत्ता जीव एवात्र न बुद्धिर्बुद्धिमन्मते ।**
**यत्पिप्पलं कर्मफलं सुखदुःखे च ते स्मृते ॥ १२०५ ॥**

**अदनं च तयोस्साक्षादीक्षणं निजसाक्षिणा ।**
**अनश्नन्परमात्मैव योभितोपि प्रकाशते ॥ १२०६ ॥**

अदन च रससाक्षात्कार साक्षिणैवेत्याह **अदनं चेति** ॥ १२०५ ॥ १२०६ ॥

**सोऽनश्नन्पारमार्थ्येन सोऽत्ति चापरमार्थतः ।**
**इति शङ्का पिशाचीं तु हन्ति युक्ति नृकेसरी ॥ १२०७ ॥**

**य एवात्ति स वानश्नंश्चेति श्रूयते यदि ।**
**तदोत्थानं भवेदस्य नैवमाह श्रुतिस्सती ॥ १२०८ ॥**

नन्वत्र अपारमार्थ्येन अत्ति पारमार्थ्येन अनश्नन् इति पदद्वय अध्याह्रियते । अतो न भेदसिद्धिरिति मन्दाशङ्का हिनस्ति **स इत्यादिभिस्त्रिभिः** । अत्र अन्य अन्य इति सुस्पष्ट द्वयोरेव श्रवणात् अनुपपत्तिरेव नास्ति । यच्छमनाय अध्याहारप्रयास इत्याह **य इति** ॥ १२०७ ॥ १२०८ ॥

**अत्त्यन्योयमनश्नंश्च तथान्य इति सा जगौ ।**
**अतस्तच्छ्रुतमन्यत्र जीवे त्वश्रुतमेव हि ।**
**अभूदनशनं तेन वदनं मुद्रितं तव ॥ १२०९ ॥**

तत् अनदन अभिचाकशन च ॥ १२०९ ॥

**यदेतच्छ्रुतमिथ्यात्वमश्रुतस्य च सत्यता ।**
**वदेत्तद्वैदिकं मन्यस्त्वन्न्यायेन न किं शुभा ॥ १२१० ॥**

एव वदत जीवे श्रुतस्य अशनस्य ह नि अश्रुतस्य अनशनस्य च स्यादित्याह **यदिति** ॥ १२१० ॥

**न चेच्छङ्का पिशाचीयं व्याहति प्रमदाकुलम् ।**
**हन्यादन्यायवाक्सा च त्वन्न्यायेन न किं शुभा ॥ १२११ ॥**

**किञ्चानश्नन्निति पदमशनाभाववाचकम् ।**
**अश्नन्नित्यशनं वक्ति कथमेकत्र ते वद ॥ १२१२ ॥**

**इयं** अश्रुतपदाध्याहारेण प्रमाणविरुद्धार्थघटना । व्याहति प्रमदाकुल, कर्म हन्यादिति योजना । 'मे माता वन्ध्या' इत्यादिके सर्वत्रापि अपरमार्थतः माता, परमार्थतः वन्ध्या इति समाधानस्य सुकरत्वादिति भाव । तथा च ईदृशी व्याहतिग्रस्ता अन्यायवाक् सर्वाऽपि शुभैव स्यात् ॥ १२११ ॥ १२१२ ॥

**भावाभावविरोधस्य न चेच्छान्तिर्भविष्यति ।**
**ततश्च भावरूपं ते नैवाज्ञानं प्रसिद्ध्यति ॥ १२१३ ॥**

**अभावाज्ञानवादो हि भावाभावविरोधतः ।**
**निवार्यते त्वया तस्याभावेऽसौ केन वार्यते ॥ १२१४ ॥**

एव भावाभावविरोधस्यैवापलापे तव भावरूपाज्ञानासिद्धिरेव स्यादित्याह **ततश्चेति**। स्वप्रकाशेन चैतन्येन आध्यात्मिकसबन्धस्य विद्यमानत्वेऽपि ज्ञानाभावघटनाय खलु भावरूपमज्ञानमावरण त्वयैष्टव्यम् । न च तदुक्तम् । इदानी त्वदुक्तरीत्या ज्ञाने सत्यपि ज्ञानाभावस्य अन्यतरस्य मिथ्यात्वकल्पनेनैवोपपत्तौ अज्ञानरूपावरणकल्पनस्य क्वावकाश इति भाव ॥ १२१३ ॥ १२१४ ॥

**जगच्च ब्रह्मणि सदा सदेव स्यादखण्डितम् ।**
**तदभावाख्यबाधोऽपि स्यात्तयोरविरोधतः ॥ १२१५ ॥**

**सदेव** परमार्थत । **बाधोऽपि** अपरमार्थत ॥ १२१५ ॥

**भावाभावविरोधोऽतो वाच्यस्सर्वात्मना त्वया ।**
**अभावेन सह स्थित्या मिथ्यात्वाशाप्यतो गता ॥ १२१६ ॥**

भावाभावरूपत्वस्य तृतीयप्रकारस्यैव सभवेन मिथ्यात्वरूपचतुर्थप्रकारोऽपि न सिद्ध्येदिति आह **मिथ्यात्वेति** ॥ १२१६ ॥

**विरोधेऽप्यविरोधेऽपि ततस्सा घटते न ते ॥ १२१७ ॥**

**विरोधे** अन्यतरत्वस्यैव अविरोधे उभयात्मकत्वस्य सभवेन, **सा** मिथ्यात्वाशा ॥ १२१७ ॥

**भावाभावविरोधे हि स्वोक्तमिथ्यात्ववाग्गता ।**
**स्वाभावेन सह स्थित्या यतो मिथ्यात्वमुच्यते ॥ १२१८ ॥**

विरोधे स्वात्यन्ताभावसमानाधिकरणत्वरूपमिथ्यात्वलक्षणमेव व्यासज्यत इत्याह **स्वोक्तेति** ॥ १२१८ ॥

**अविरोधे जगत्सत्स्याद्भावाज्ञानं च भर्जितम् ॥ १२१९ ॥**

**अविरोधे** अत्यन्ताभावस्यापारमार्थिकत्वे मिथ्याभूतमिथ्यात्वकत्वेन जगत् सत्स्यात् । **भर्जितं** प्रागुक्तदिशैव ॥ १२१९ ॥

**तथापि लोकतो भीत्या भावज्ञानरिरिक्षया ।**
**विरोध एव श्लाघ्यस्ते यो योग्यो बुधसंसदि ॥ १२२० ॥**

**तथाऽपि** पक्षद्वयेऽपि त्वत्सिद्धान्तहानावपि । विरोधपक्ष एव श्लाघ्य । तत्र हेतुद्वय लोकत इति भावाज्ञानेति च । भावाज्ञान खलु त्वन्मतजीवातु । तदसभवे त्वन्मतमखिलमपाकृत स्यादिति भाव ॥ १२२० ॥

**अतो धर्मद्वयस्यास्य भिद्येते धर्मिणावपि ॥ १२२१ ॥**

**अतः** विरोध्यङ्गीकारस्यावश्यकत्वात् । **धर्मद्वयस्य** अशनानशनरूपस्य । धर्मिणौ जीवपरमात्मानौ ॥ १२२१ ॥

**यथास्थितपदस्यार्थायोगेऽध्याहार इष्यते ।**
**जीवशयोर्द्वयोस्सत्त्वादर्थो युक्ततरोऽभवत् ।**
**अतोऽध्याहार एवैष दोषाध्याहार एव ते ॥ १२२२ ॥**

प्रमाणसिद्धघटनाय खलु अध्याहार । त्वदुक्तस्तु तद्विघटनायैव जात इति दोष एवेत्याह **यथास्थितेति** ॥ १२२२ ॥

**यद्येवमपि ते प्रीतिरध्याहारे महीयसी ।**
**तदाध्याहरभावार्थपरमेकं हि लाघवात् ॥ १२२३ ॥**

**ततश्च पारमार्थ्येन तौ धर्मौ धर्मिणोर्द्वयोः ।**
**धर्मभूतौ तयोर्भेदं स्थिरीकुरुत एव हि ॥ १२२४ ॥**

अपीत्यनेन अध्याहारपक्ष गर्हयति । बाधकाभावेन पारमार्थस्य स्वत सिद्धे । **एकं पद** पारमार्थ्येनेति पदम् । **स्थिरीकुरु** भेदकधर्माणा पारमार्थ्यकथनेनेति भाव ॥ ॥१२२४ ॥

**मुक्तोऽपि ब्रह्मणा साकं सर्वान्कामान्किलाश्नुते ।**
**पारमार्थ्यं च तदशने युक्तं नापरमार्थता ॥ १२२५ ॥**

सोऽश्नुते इति मुक्तावपि अशनस्य श्रुतत्वात् तदपारमार्थ्य अश्रौत चेत्याह **मुक्त इति** ॥ १२२५ ॥

**अतो जीवेशयोर्भेदः श्रुत्यर्थस्सुतरामभूत् ।**
**श्रुतेः प्रच्यावनं तस्माच्छ्रुतप्रच्यावनं तव ॥ १२२६ ॥**

**अतः** बुद्धिजीवपरिग्रहपक्षस्य दूषितत्वात् ॥ आविद्यकबुद्धेर्मुक्तावभावात् । तत्परतयाऽर्थकथने श्रुतिप्रच्यावन ततश्च तव **श्रुतप्रच्यावन** वेदान्तश्रवणरहितेति व्यवस्थापक च ॥ १२२६ ॥

**अतो यथाश्रुतश्रुत्या तवानर्थस्स्थिरोऽभवत् ।**
**अध्याहारे तु सोऽनर्थो ह्यनिवर्त्यो भवेत्तव ॥ १२२७ ॥**

**कथं द्वितैकदैकत्र वृथेवमपि कल्पने ।**
**किमेकस्मिन्नपि घटे धर्मद्वित्वाद् द्वितोच्यते ॥ १२२८ ॥**

अपि च अस्तु कथञ्चिद्धर्मयोरेकत्र घटना। सर्वथा धर्मिणि द्वित्वानुपपत्तिरेवेत्याह **किमिति** ॥ १२२७ ॥ १२२८ ॥

**किन्तु रूपरसादीनां बहुत्वे द्वित्व एव च ।**
**रसवान्रूपवांश्चैको घट इत्यवकीर्त्यते ॥ १२२९ ॥**

अविरुद्धधर्माणामेकत्र वृत्तिरविरुद्धैवेत्याह **रूपेति** ॥ १२२९ ॥

**नचेत्सौन्दर्यधैर्याभ्यां भार्ये द्वे भवतस्तव ।**
**अतः पुनर्विवाहार्थमपुत्रस्य वृथा श्रमः ॥ १२३० ॥**

अन्यथाऽतिप्रसङ्गोक्त्या परमपहसति **न चेदिति** ॥ १२३० ॥

**विद्यामयो नित्यमुक्तो वेदात्मानं किल प्रभुः ।**
**पिप्पलादं स्वतोऽन्यं स वेदाविद्यान्धचक्षुषम् ॥ १२३१ ॥**

'आत्मानमन्य च स वेद विद्वानपिप्पलादो न तु पिप्पलाद । योऽविद्ययान्ध स तु नित्यबद्धो विद्यामयो य स तु नित्यमुक्त' इति भागवतश्लोक अर्थत अनुवदति **विद्यामय इति** ॥ १२३१ ॥

**इति भागवतोक्तिस्सा यतो वक्ति ततोऽनुमा ।**
**विमतो जीवपरयोर्भेदोऽयं परमार्थसत् ॥ १२३२ ॥**

**संसारोन्मुक्तचैतन्योल्लेख्यत्वान्मौक्तसौख्यवत् ।**
**इति जीवब्रह्मभेदं साधयत्यागमानुगा ॥ १२३३ ॥**

**ततः** उक्तित लब्धा भेदपारमार्थसाधिका **अनुमा** आगमाऽनुगा आगमानुसारिणीति उत्तरेणान्वय ।**उल्लेख्यत्वात्** सबन्धित्वात् । **मौक्तसौख्यवत्** 'श्रोत्रियस्य चाकामहतस्य' इत्यत्र तारतम्येनोक्तमौक्तानन्दवत् ॥ १२३३ ॥

**तर्कं च कर्कशं सा वाग्वैलक्षण्यमलक्षयत् ।**
**यत्र त्वस्येतिवाक्यस्याप्यापातार्थमपाकरोत् ॥ १२३४ ॥**

विपक्षे बाधक विरुद्धलक्षणयोगित्वानुपपत्तिरूप नित्यबद्धत्वनित्यमुक्तत्वादि विरुद्धलक्षणोक्त्या **अलक्षयत्** अज्ञापयत् । **आपातार्थं** स्वपरज्ञानाभावरूपम् । 'आत्मानमन्य च वेद' इति निरूपणात् ॥ १२३४ ॥

**तस्माद्द्वित्वाख्ययुक्तेश्च भोगाभोगाख्ययुक्तितः ।**
**अन्यत्वश्रुतितश्चाभूदन्योन्याभाववागियम् ॥ १२३५ ॥**

अन्योन्याभाववाक् परमार्थतो भेदसाधिका वाक् । इयं द्वा सुपर्णेति श्रुति· ॥ ॥१२३५ ॥

**न केवलं स्थानबुद्धिभेदमात्रेण भिन्नता ।**
**किन्तु स्वरूपभेदोऽयमिति साधयितुं श्रुतिः ।**
**सखायौ सयुजौ चेति पदद्वयमुदाहरत् ॥ १२३६ ॥**

ननु यथा भवद्भिरैक्यवाक्यानि सादृश्यादैक्यपरतया योज्यन्ते तथाऽस्या अपि श्रुते स्थानभेदपरतया मतिभेदपरतया सावकाशन स्यात् । न स्यात् । अत्रैव सयुजाविति स्थानभेदस्य सखायाविति मतिभेदस्य च प्रतिषेधादित्याह नेति ॥ ॥१२३६ ॥

**तौ चेतनौ स्थिरीकर्तुं सुपर्णावित्यरूरुपत् ।**
**स्वतोभिकाशनोक्त्यात तत्रैकमकरोत्प्रभुम् ॥ १२३७ ॥**

चेतनौ न बुद्धिजीवौ । स्वतः अभिकाशनेति दु खानत्तृत्व, विषयान्विनाऽपि पूर्णत्व, स्वनशेनैवादन, इत्याद्यर्थ तत्त्वप्रदीपोदाहृतप्रमाणैरवसेय ॥ १२३७ ॥

**यदिमौ द्वौ च संयोगात्सयुजाविति शब्दितौ ।**
**अतोऽन्ते यद्धि सायुज्यं तच्च योगात्मकं जगौ ॥ १२३८ ॥**

**अतश्शङ्का पिशाचीः सा श्रुतिरेव न्यवारयत् ॥ १२३९ ॥**

मोक्षे सायुज्यशब्दस्यापार्थकत्व वदन्तो रामानुजीया अपि अनेनैव निरस्ता इत्याह संयोगादिति सह युज्येते इति व्युत्पत्त्येति भाव । तदुक्त 'आदत्ते हरिहस्तेन, हरिदृष्ट्यैव पश्यति' इत्यादि भाष्ये ॥ १२३८ ॥ १२३९ ॥

**एकं भाविभवच्चैकमित्याशां हन्ति लड्द्वयम् ।**
**मुक्तस्याप्यवृतोक्तेश्च नैराश्यं परमं सुखम् ॥ १२४० ॥**

**एकं** अनशनम् । **भावि** मुक्तिकालीनम् । **एकं** अशन **भवत्** ससारकालीनम् । **लड्द्वयं** अत्ति अनश्नन् इति । **मुक्तस्यापि** 'सोऽश्नुते सर्वान् कामान्' इति श्रुतौ कथितस्य । **नैराश्यं** स्वमतसमर्थनाशापरित्याग । 'नैराश्य परम सुखमिति पिङ्गलया शिक्षितस्य भागवतोक्तस्य धर्मस्य तव परिहारार्थमेव प्रवृत्तिरिति ध्वनि ॥ १२४० ॥

**स्याद्रक्तिमेति श्यामत्वदशायामपि किं घटः ।**
**रक्त इत्युच्यते सद्भिस्ततोऽप्येतदपार्थकम् ॥ १२४१ ॥**

भाविनिवर्तमानत्वप्रयोग निदर्शनेन खण्डयति **स्यादिति** ॥ १२४१ ॥

**किञ्चैक्यवाक्यवाक्यस्य वृथैवं क्लिष्टकल्पना ।**
**ऋजोर्यथा श्रुतार्थस्य त्यागे हेतोरभावतः ॥ १२४२ ॥**

ऐक्यवाक्य प्रबलमस्ति न वा । उभयथाऽपि अस्य वाक्यस्य बुद्धिजीवपरत्वेन अवस्थाभेदपरत्वेन वा क्लिष्टकल्पना न युक्तेत्याह **किञ्चेति** । **बाधसंभवात्** न हि प्रमाणबाधितस्याग्न्यनुष्णत्वस्योपपत्तये उपपादक क्लेशेन कल्प्यत इति भाव ॥ १२४२ ॥

**दौर्बल्ये चैक्यवाक्यस्य वृथैवं क्लिष्टकल्पना ।**
**ऋजोर्यथा श्रुतार्थस्य त्यागे हेतोरभावतः ॥ १२४३ ॥**

**हेतोरभावत इति** बाधकाभावे उत्सर्गत· सिद्धस्य त्यागायोगादेवेति भाव· ॥ ॥१२४३ ॥

**व्यावहारिकभेदं ते का वा वक्ति श्रुतिस्तयोः ।**
**वाक्यस्यास्य कुसृष्ट्यैवम(न्यार्थी)-**
**न्यथाकरणे वद ॥ १२४४ ॥**

सिध्यतु भेद । किन्तु स व्यावहारिक इति चेत् स किं सत्यो मिथ्या वा । आद्ये अनुज्ञया वर्तामहे । व्यावहारिकत्वविशेषण व्यर्थ च । न द्वितीय निर्मूलत्वात्कल्पनाया इत्याह **का वेति** ॥ १२४४ ॥

**सिद्धभेदानुवादश्च कस्मिन्वाक्ये प्रकथ्यते ।**
**भेदोपास्तेश्च किं मूलमतश्चायं वृथा श्रमः ॥ १२४५ ॥**

अनुवाद एवाय भेदस्येति चेत् स किं श्रुतिसिद्धस्य अथ प्रमाणान्तरेण । नाद्य 'तद्धैक आहु' इत्यत्रेव अनुवादलिङ्गाभावादित्याह **कस्मिन्निति**। सर्वथा श्रुत्यसिद्धत्वे उपायनार्थत्वगतिकथनायोगादिति आह **भेदेति**। प्रमाणान्तरसिद्धत्वे च तद्विरोधादेवाप्रामाण्यमभेदागमस्य । तेन च तस्या प्रामाण्याभावे नानुवादकत्व भेदवाक्याना' इत्यादि तत्त्वनिर्णयोक्तदोषापातात् ॥ १२४५ ॥

**परप्रयोजनार्थं हि परमात्मा प्रवर्तते ।**
**सुरां सुधां च दुस्साध्यां किं संसाध्य स्वयं पपौ ।**
**असुरांश्च सुरांश्चैव यथायोग्यमपाययत् ॥ १२४६ ॥**

परमात्मन· सर्वत्र प्रवृत्ति आनन्दोद्रेकेण परप्रयोजनार्था, 'पूर्णानन्दस्य तस्येह प्रयोजनमति कुत' इति भाष्योक्त पुराणसवादेन द्रढयति **सुरां सुधां चेति**। एतेनाशनानशने सुरां सुधा चेति । एतेनाशनानशने श्रुत्युक्ते समर्थिते ॥ १२४६ ॥

**स हि सर्वं जगदिदं व्याप्य नारायणः स्थितः ।**
**तत्रैव देवदैत्यादिष्वावेशस्य प्रकीर्तनात् ॥ १२४७ ॥**

**सोऽनश्नन्देहिनां देहेऽप्यश्नंश्चान्यस्तथैव हि।**
**प्रेरकप्रेर्यरूपौ तौ कथं न द्वौ तनौ तनौ ॥ १२४८ ॥**

तत्रैव मथनसमयसमय एव। **आवेशस्येति** 'तेषा बलवीर्यमीरयन्। उद्दीपयन्देवगणाश्च विष्णुरिति कीर्तनात्। एतेन समान वृक्षमिति श्रुत्युक्तस्य सवाद उक्त ॥ १२४७ ॥ १२४८ ॥

**ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।**
**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ १२४९ ॥**

श्रुत्युक्तार्थे गीतावाक्य सवादयति **ईश्वर इति** ॥ १२४९ ॥

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।**
**इति गीतासु हरिणा गीतां गाथामनुस्मर ॥ १२५० ॥**

अनश्नन्नित्युक्तशुभाशुभलेपाभावे गीता प्रमाणयति **न मामिति** ॥ १२५० ॥

**अन्ते संहृत्य योऽनेकान्विप्रर्षिविबुधादिकान्।**
**न लिप्यते पापकेन कनीयान्न स कर्मणा ॥ १२५१ ॥**

**अन्ते** प्रलये। न लिप्यते। हत्वा स इमाल्लोकान् न हन्ति न निबध्यते इति गीतोक्ते। कनीयान्नेत्यनेन न कर्मणा वर्धते नो कनीयान्' इति श्रुते ॥ १२५१ ॥

**यो सक्तस्सन्विविक्तश्च साक्षी किल नृणां हृदि।**
**स पापमूलदुःखानि नैव भुंक्त इति स्मृतेः ॥ १२५२ ॥**

'योऽसक्त सन्' इत्यनेन 'नमोऽसक्तविविक्तसाक्षिणे' इति भागवते वाक्य, नैव भुक्ते' इत्यनेन न वै स आत्माऽऽत्मवता महेश्वरो भुक्ते हि दु ख इति वाक्य च सूचयति ॥ १२५२ ॥

श्रुतेश्च युक्तितश्चेशस्सिद्धो विद्वज्जनप्रियः ।
यश्च स्वकृतपापौघैर्नरकाननुगच्छति   ॥ १२५३ ॥

आधिना व्याधिना देहेऽप्यनीशः क्लेशभाक्सदा ।
उभावश्नदनश्नन्तौ कथं नेमौ तनौ तनौ   ॥ १२५४ ॥

नित्याऽतादृशास्तु जीवाख्यपक्षी इत्याह **यश्चेति। आधिव्याधीति च** ॥ ॥१२५४ ॥

उद्गते सति जीवाख्यचैतन्यांशे कलेवरात् ।
देहव्यापि तदाऽप्यन्यचैतन्य किल ते मते ॥ १२५५ ॥

न चेदनारोपितोऽसौ देहस्स्यात्पतितो भुवि ।
नाधिष्ठानं विनाऽध्यासो न चैतन्यं
विना च तत् ॥ १२५६ ॥

एवं चाश्नदनश्नन्तो चिदंशौ द्वौ यतो बलात् ।
तच्छ्रुतिस्तत्परैवास्तु किमर्था क्लिष्टकल्पना ॥ १२५७ ॥

परप्रक्रिययैव प्रतिदेह चैतन्यद्वयसिद्धिप्रकार दर्शयति **उद्गते** इत्यादिभ्याम् । चैतन्याशे बुद्ध्युपाधिके । न चेत् उत्क्रमणानन्तर ब्रह्मचैतन्यमधिष्ठानभूत देहे नास्ति चेत् । पतितः स्वरूपेण अत्यन्ताभावप्रतियोगी । अधिष्ठानाभावे मृतकलेवरस्याप्यवस्थानायोगादिति ध्येयम् । **नाधिष्ठानमिति।** शून्यवादे इव मायावादे निरधिष्ठानकभ्रमानङ्गीकारात् । तत् चैतन्यम् । अन्यस्य मिथ्यात्वेन अधिष्ठानत्वायोगात् ॥ १२५५ ॥ १२५६ ॥ १२५७ ॥

श्रावयन्ती भिदां तस्य व्यावहारिकतादिकम् ।
कपोलक्लृप्तमश्रौतधिक्कृत्यैव श्रुतिर्द्वयोः ॥ १२५८ ॥

सायुज्यसख्या सादृश्यस्वातन्त्र्यादिविशेषणैः ।
उपसर्गेण च व्याप्तिं प्रबोध्यैक्यगिरां गतिम् ॥ १२५९ ॥

**सगुणत्वं च संसाध्य लिटा मिथ्याश्रुतेर्गतिम्।**
**लटा तद्बाधकं चोक्त्वा माध्वराद्धान्तमुद्दधे ॥ १२६० ॥**

एतस्या श्रुते सकलसिद्धान्तप्रमेयसाधकत्वप्रकार विविनक्ति **त्रिभिः श्रावयन्तीत्यादिना**। द्वौ, अन्य, अन्य इत्यादिशब्दै ॥ **धिक्कृत्य** मोक्षेऽपि सहभावादिभेदकधर्मकथनेन। **विशेषणैः** सयुजौ, सखायौ, अनश्नन्, इत्यादिभि । **सायुज्यसख्यसादृश्यस्वातन्त्र्यादि** इति द्वितीयान्तम्। प्रबोध्य इत्यनेनान्वय । **उपसर्गेण अभीत्यनेन, व्याप्तिं च प्रबोध्य** प्रतिपाद्य यद्वा स्वातन्त्र्यादिविशेषणै इत्येक पदम्। व्याप्ति गुणतो व्याप्ति प्रबोध्येत्यर्थ। **ऐक्यगिरा गतिं** सादृश्यैक्येत्यादिक ससाध्य। **लिटा** सस्वजाते इत्यत्र प्रत्ययेन **मिथ्याश्रुतेर्गतिं** 'असदि चेन्न धर्मान्तरेण वाक्यशेषादि'ति सूत्रोक्ता गतिम्। **लटा** अनश्नन्, अत्ति इत्यत्रत्येन **तद्बाधक** स्वरूपेण निषेधरूपमिथ्यात्वबाधक उक्त्वा। **उद्दधे** समर्थयामास ॥ १२५८ ॥ १२५९ ॥ १२६० ॥

**व्यावहारिकभेदस्य साधिका भेदवाग्यदि।**
**तवैक्यवाक्यं किं न स्यात्तादृगर्थपरं तदा ॥ १२६१ ॥**

**तादृगर्थपरं** व्यावहारिकैक्यपरम्। **तदा** तद्बोधकपदाभावेऽपि तथाभावकल्पने ॥ १२६१ ॥

**न चेत्प्रत्यक्षसाहित्यबाधाभ्यां किं विधीयताम्।**
**मृतस्य प्रेतकर्म स्याज्जीवतस्तु कथं वद ॥ १२६२ ॥**

**प्रत्यक्ष** 'नाह निर्दु ख' इत्यादि साक्षिप्रत्यक्ष, **साहित्यं** मोक्षेऽपि 'सहाश्रुते', 'उपसक्रम्य' इति श्रुत्युक्त भेदकधर्मानुमान, एताभ्या निर्दोषश्रुतिसाक्षिभ्या यौ बाधौ ताभ्या **किं विधीयता** कस्य प्रतिषेध उच्यताम्। **मृतस्य** अप्रामाणिकस्य ऐक्यस्यैव **प्रेतकर्म** बाध। **जीवतः** सकलप्रमाणप्रमितस्य बाधानर्हस्य। तथा च उपेत्य ऐक्यप्रतिबन्दी प्रागुक्ता। वस्तुतस्तु ऐक्यस्यैव व्यावहारिकत्वेन त्वदभिमतबाधो युक्त इत्युक्त भवति ॥ १२६२ ॥

**यदि ब्रह्मप्रमामात्रबाध्यो भेदस्ततः पुरा ।**
**व्यवहारपदं प्राप्तो व्यावहारिक इष्यते ॥ १२६३ ॥**

**तर्हि नाहं सर्ववेत्ता न सर्वेशोऽहमित्यपि ।**
**प्रत्यक्षबाधादधुना स्यादैक्यं प्रातिभासिकम् ॥ १२६४ ॥**

ननु ब्रह्मप्रमाबाध्यो भेद अतो व्यावहारिक । ऐक्य तु न तथेति चेत् न । 'यदा पश्य पश्यते रुक्मवर्ण कर्तारमीश पुरुष ब्रह्मयोनि' 'तमेव विद्वानमृत इह भवति' इत्यादिमोक्षहेतुब्रह्मप्रमापकैर्वाक्यै कर्तृत्वेशत्वब्रह्मयोनित्वादिना भेदस्यैव श्रावणाद्विरुद्धो हेतुरिति दोषे सत्येव दोषान्तरमाह **यदीति** । **प्रत्यक्षेति** ब्रह्मप्रमान्येति भाव ॥ १२६३ ॥

**ब्रह्मप्रमाऽन्यबाध्यं यत्तद्धिते प्रातिभासिकम् ।**
**नचेद्रज्जुभुजङ्गाद्यं कथं स्यात्प्रातिभासिकम् ॥ १२६५ ॥**

**रज्जुप्रत्यक्षवद्भेदप्रत्यक्षं किं न बाधकम् ॥ १२६६ ॥**

ब्रह्मप्रमाऽन्येन बाध्यत्व प्रातिभासिकत्व इति परपरिभाषा । अत एव रज्जुभुजङ्गादिक प्रातिभासिक तेनोच्यते । 'नाय सर्प किन्तु रज्जुरि'ति प्रत्यक्ष निर्दोषत्वाद्यथा बाधक तथैव नाह निर्दुःख ईश्वर किन्तु दुःखी जीव एवेति साक्षिप्रत्यक्ष नित्यनिर्दोषत्वाद्बाधकमेवेत्याह कि न बाधकमिति ॥ १२६५ ॥ ॥१२६६ ॥

**अतो वृश्चिकतो भीत्या पलायनपरस्य ते ।**
**महोरगबिले स्थूले पातो जातो विचारय ।**
**यद्भेदसाम्यतो भीतस्यासीदैक्येति नीचता ॥ १२६७ ॥**

ततोऽपहसनीयाभाजकविषयता परस्यापतितेत्याह **वृश्चिकेति** । **यत्** यस्मात्कारणात् **साम्यतः** भेदस्यापि पारमार्थिकत्वे ऐक्यसाम्य आपद्यते इति असहनतया तस्य व्यावहारिकत्वसाधने प्रवर्तमानस्य **ऐक्ये** स्वसिषाधयिषित एव

अतिनीचता भेदापेक्षया **अतिनीचता** प्रातिभासिकता आपतिता। अत· साधूक्त भागवते 'महदवज्ञा कात्स्न्येंनात्मन एव प्रतिफलति' इति ॥ १२६७ ॥

**व्यावहारिकमानं हि प्रातिभासिकमानतः।**
**बलवत्ते मते तस्मादैक्यं स्याद्धि बहिष्कृतम् ॥ १२६८ ॥**

निष्प्रमाणक सत्त्वैविध्य तत्र च अवान्तरबलाबलकल्पनस्य अय अनर्थविपाक इत्याह **व्यावहारिकेति** ॥ १२६८ ॥

**व्यावहारिकतायां च बाधाभावो यदीष्यते।**
**सिद्धं समीहितं तर्हि न चेदतिविगर्हितम् ॥ १२६९ ॥**

**अतत्वावेदकत्वाप्त्या यच्छ्रुतेर्मानता गता।**
**इदं च बौद्धराद्धान्तवार्धिमध्यप्रवेशनम् ॥ १२७० ॥**

किञ्च व्यावहारिक नाम तत्त्वमेव चेत् व्यर्थ तेन सत्यविशेषणम्। न हि कश्चिल्लौकिको वैदिको वा भेदस्य व्यावहारिकता नाभ्युपैति। अप्राप्ते शास्त्रमर्थवदि न्यायात्। अतत्त्व चेत् **अतिविगर्हितं** अवैदिक मायामत आपन्नम्। श्रुतेरप्रामाण्यापातात्। तदुक्त वादावल्या 'अतत्वावेदक प्रमाण चेद्व्याघात' इति। **बौद्धेति** तदुक्त वार्तिके 'सत्य चेत् सवृति केय मृदा चेत्सत्यता कथम्। वञ्चनार्थमुपन्यास' इति ॥ १२७० ॥

**उभयोर्मानतासिद्ध्यै यो यतेत स वैदिकः।**
**अतो मुख्यामुख्यवृत्त्या वयं गुप्त्यै यतेमहि।**
**न चेद्भेदघ्न एवासौ गवोरेकघ्नगोघ्नवत् ॥ १२७१ ॥**

**यद्यमानत्वमेकस्या वक्तुं युक्तं श्रुतावपि।**
**तर्हि मीमांसकाचार्याः पुर्याः कार्यास्त्वया**
**बहिः ॥ १२७२ ॥**

**वैदिकः** वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना' इति वचनात्। **गोघ्नवत्** इति व्यक्तमेतद्गुणसौरभे ॥ १२७१ ॥ १२७२ ॥

**पौरुषेयेषु पुरुषविप्रलिप्सादिकारणात्।**
**युक्ता द्विविधता बुद्धाद्युक्ताविव न सा श्रुतौ ॥ १२७३ ॥**

'इतराविरुद्धानि प्रलम्भभ्रमजान्यपि' इति स्मृत्युक्तमाह **पौरुषेयेषु इति** ॥ ॥१२७३ ॥

**विप्रलिप्सा प्रमादश्च भ्रमश्च स्याद्धि पुंसु यत्।**
**अपौरुषेयवचने मुख्यामुख्यार्थतैव तत् ॥ १२७४ ॥**

तत् निर्दोषत्वेन सर्वथाऽप्रामाण्यस्याशक्यत्वात् ॥ १२७४ ॥

**किञ्च त्वच्छ्रुतिबाधात्सा व्यावहारिकवाग्भवेत्।**
**अपौरुषेयवचने मुख्यामुख्यार्थतैव तत् ॥ १२७५ ॥**

**त्वच्छ्रुतिबाधात्।** तवैक्यश्रुत्या बाधे सति। **सा** भेदश्रुति। **व्यावहारिकवाक्** व्यावहारिकभेदप्रतिपादिका। **तवश्रुतिः** त्वदभिलषितैक्य-प्रतिपादिका। तथा चान्योन्याश्रय ॥ १२७५ ॥

**व्यावहरिकता चेयं न युक्ता या त्वयोदिता ॥ १२७६ ॥**

**ब्रह्मज्ञानेतरज्ञानाबाध्यत्वे सति तद्धिया।**
**यद्बाध्यं तस्य भावो हि व्यावहारिकता तव ॥ १२७७ ॥**

**न युक्ता** विकल्पासहत्वात्। तथा हि किं इद व्यावहारिकत्वम्। ब्रह्मज्ञानेतरज्ञानाबाध्यत्वे सति ब्रह्मज्ञानबाध्यत्व उत ब्रह्मप्रमेतराबाध्यत्वे सति तद्बाध्यत्वम् ॥ १२७७ ॥

**यतो सत्त्वास्थिरत्वादिब्रह्मणः प्रमयैव हि।**
**ब्रह्मण्यारोपितं बाध्यं तच्च ते प्रातिभासिकम् ॥ १२७८ ॥**

नाद्य ब्रह्मण्यारोपिते प्रातिभासिके क्षणिकत्वे असत्त्वे चातिव्याप्तेरित्याह **यत इति** ॥ १२७८ ॥

**प्रमापदप्रवेशोऽपि नोक्तदोषप्रतिक्रिया।**
**प्रमा यथार्थधीरेवं नोचेद्व्यर्थं विशेषणम् ॥ १२७९ ॥**

न द्वितीय । दोषतादवस्थ्यात् ब्रह्म स्थिर सत्य इत्यस्यापि प्रमात्वादेव । आह **यथार्थधीरिति। एवं नोचेत्** प्रमा यथार्थधीर्नयेनोक्तदोष । किन्तु वेदान्तजन्या निर्विकल्पा चरमप्रमैवेति चेत् एव तर्हि ब्रह्मप्रमान्येनाबाध्यत्वविशेषण व्यर्थम् । अस्मिन्पक्षे इय शुक्तिरिति ज्ञानस्याप्रमात्वेन शुक्तिरजते प्रमेतरप्रमाऽबाध्यत्वस्यैव सत्त्वेन विशेषणनिवेशोऽपि अतिव्याप्त्यपरिहारात् ॥ १२७९ ॥

**देहात्मैक्यं नभो नैल्यं प्रातिभासिकमेव ते।**
**ब्रह्मप्रमान्याबाध्यं च बाध्यं चरमतद्धिया ॥ १२८० ॥**

देहात्मैक्यभ्रम नभोनैल्यभ्रम इत्येतयो ब्रह्मप्रमयैव बाध्यत्व इति परो मनुते । तथाऽपि तयो प्रातिभासिकत्व अङ्गीकरोति । तत्रोक्तलक्षणस्यातिव्याप्तिरित्याह **देहेति** ॥ १२८० ॥

**नियमेनेतरज्ञानाबाध्ये तद्बाधयोग्यता।**
**कथं स्यान्न हि तत्तस्य योग्यं यन्न कदाचन ॥ १२८१ ॥**

**ब्रह्मप्रमान्याबाध्यत्वे सति तज्ज्ञानबाध्यता।**
**कथमुक्तेष्वतिव्याप्ता व्यावहारिकता वद ॥ १२८२ ॥**

इतरज्ञानाबाध्यत्वेऽपि बाधयोग्यता तयोरस्ति अतो नोक्तदोष इत्यत आह **न हि तदिति।** सहकारिविरहप्रयुक्तफलानुपधान हि योग्यता । यदा कदाऽपि वा तेन

फलनिष्पत्तौ तस्य तज्जननयोग्यता कल्प्यते। अत्र तु न कदाऽपि बाधो दृष्ट इति बाध्यत्वयोग्यताकल्पनाया अवकाश एव न। तथा सति यवबीजेऽपि कलमाङ्कुरजननयोग्यता कल्प्येतेति भाव ॥ १२८१ ॥ १२८२ ॥

**किञ्च ब्रह्मप्रमान्याबाध्यत्वमात्रं न सोचिता।**
**ब्रह्मणो बाध्यतापत्तेस्तत्प्रमा बाध्यतापि च ॥ १२८३ ॥**

मात्रपदेन ब्रह्मप्रमाबाध्यत्वरूपविशेष्यदलस्य व्यवच्छेद। **सा** व्यावहारिकता। ब्रह्मण सर्वथाऽबाध्यत्वेन तत्र लक्षणस्यातिव्याप्त्यापत्तेरित्याह **ब्रह्मण इति**। तर्हि ब्रह्मप्रमाबाध्यत्व लक्षणमस्तु इति च नेत्याह **तदिति** ॥ १२८३ ॥

**बाधश्च नास्तिताबोधो नाप्रतीतिस्तु केवला।**
**असतो बाध्यतापत्तेरपसिद्धान्ततोऽपि च ॥ १२८४ ॥**

कुत इत्यत बाधस्यैव त्वया दुर्निरुपत्वादित्याह **बाध इति**। स किं नास्तिताबोध, 'अविद्या सहकार्येण नासीदस्ति भविष्यति' इति तदुक्ते। उत अप्रतीतिमात्र आद्ये वक्ष्याम। द्वितीय आह **असत इति** तथा च तत्रातिव्याप्ति। **अपसिद्धान्ततोऽपि चेति**। नासत्त्वस्यास्ति बाधकमित्यात्मवचनविरोधात् ॥ ॥१२८४ ॥

**सर्वप्रकारशून्यैव निर्विकल्पकधीस्तव।**
**ब्रह्मप्रमा तया कस्य साधनं बाधनं वद ॥ १२८५ ॥**

ज्ञानत्वे सविषयकत्व तन्त्रम्। इदमित्थ इति हि सर्वा धी। चरम ज्ञान च निर्विषयक परस्याभिमतम्। तथा च तस्य ज्ञानत्वमेवासभवि कुतस्तेन साधन बाधन वा शक्यनिरूपणमित्याह **कस्येति** ॥ १२८५ ॥

**अतो भेदाख्यरत्नस्य जगत्कल्पद्रुमस्य च।**
**पारमार्थिकतापन्ना बाधाभावाद्धि सर्वदा।**
**त्वद्रीत्यैव न मद्रीत्या चित्रा ते शास्त्रकर्तृता ॥ १२८६ ॥**

**शास्त्रकर्तृता** अखण्डार्थपर इति वाचोभङ्ग्या शास्त्रमबोधकमिति निरूपणात् **चित्रा**। लोकबहिष्कृता ॥ १२८६ ॥

**निष्प्रकारकधीर्या ते भेदाभेदप्रमा न सा।**
**तत्त्वं किल तथाप्येकमतत्वमपरं किल ॥ १२८७ ॥**

ज्ञानमेव न दूरे तस्य प्रमात्व इत्याह **नेति**। तथा च अबोधकेन बोध्य तत्त्व ऐक्य प्रमापकै सकलप्रमाणै साधितो भेद अतत्त्व इति अपहास इत्याह **किलेति** ॥ ॥१२८७ ॥

**यदि बाधस्तेन नाशस्तदा दण्डादिनाश्यता।**
**दृष्टा घटादौ यत्तस्मान्न स्युस्ते व्यावहारिकाः ॥ १२८८ ॥**

तन्नाश्यत्वमेव तद्बाध इति चेद्घटे ब्रह्मज्ञानानाश्ये मुद्गरप्रहारादिना नाश्ये अव्याप्तिरित्याह **यदीति** ॥ १२८८ ॥

**उपादानाज्ञाननाशद्वारा ज्ञानं हि नाशकम्।**
**अनादेरस्य भेदस्य तन्न स्याज्ज्ञाननाश्यता ॥ १२८९ ॥**

किञ्च ज्ञानस्य न साक्षात्प्रपञ्चनाशकत्वमभिमत किन्तु उपादानाज्ञान-नाशनद्वारैव। यथाऽऽह 'अज्ञानस्य स्वकार्येण प्रविलीनेन वा सह ज्ञानेन निवृतिर्बाध' इति। तथा च अनादेरत एव निरुपादानकस्य भेदस्य न बाध इति तत्राव्याप्ति ॥ १२८९ ॥

**अज्ञानोपादानके ते रूप्यादौ प्रातिभासिके।**
**अस्त्येव ज्ञाननाशत्वमतोऽप्येतदलक्षणम् ॥ १२९० ॥**

ज्ञाननाश्यत्व व्यावहारिकत्व चेत्प्रातिभासिके रूप्यादावतिव्याप्तिरित्याह **अज्ञानोपादानके** इति ॥ १२९० ॥

**शुक्त्यवच्छिन्नचिज्ज्ञानं ब्रह्मज्ञानं च तत्तव ॥ १२९१ ॥**

ननु तथापि रूप्यस्य शुक्तिज्ञानेनैव नाश्यत्व न ब्रह्मज्ञानेन इत्यत तव मते तदवच्छिन्नचैतन्यज्ञानमेव तज्ज्ञान, आध्यासिकसबन्धाभ्युपगमात् तच्च ब्रह्मज्ञानमेव 'सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते' इति सुरेश्वरवार्तिकोक्तेरित्याह **शुक्तीति** ॥ ॥१२९१ ॥

**ज्ञानान्नाशेऽपि मिथ्यात्वे हेतुरज्ञानकार्यता ।**
**सा चास्ति शुक्तिरूप्यादौ**
**नास्ति भेदाद्यनादिषु ॥ १२९२ ॥**

तथा च पूर्वोक्तदोषद्वयानिस्तार एवेत्याह **ज्ञानान्नाशेऽपि इति** ॥ १२९२ ॥

**ब्रह्मज्ञानेतरज्ञानानाश्यत्वस्य प्रवेशने ।**
**घटादिवृत्तिनाश्येषु तूलाज्ञानेषु लक्षणम् ।**
**अव्यापकं स्यात्तद्योगे मूलस्यापसृतौ भवेत् ॥ १२९३ ॥**

ननु मन्मते अज्ञान द्विविधम् । तूलाज्ञान मूलाज्ञान चेति । तत्र ससारमूलाज्ञान निवर्तयत् ब्रह्मज्ञान चरमज्ञानमेव । न तु शुक्त्यवच्छिन्नचैतन्यविषयकम् । तन्निवृत्तिद्वारा निवर्त्यत्वमेव च बाध । ब्रह्मज्ञानेतरज्ञानानाश्यत्व च लक्षणे विशेषण निवेश्यते । शुक्तिरूप्य च तदितरेण युक्त्यवच्छिन्नचैतन्यज्ञानेनापि निवर्तते । अतो नातिव्याप्तिरिति चेत् । तथाऽपि अनादिभेदादिष्वव्याप्तेरपरिहार एव । दोषान्तर चाह **घटादीति**। ब्रह्मज्ञानेन तन्निवृत्त्यनङ्गीकारात् । **तद्योगे** मूलाज्ञानसबन्धे । मूलाज्ञानस्य तदाऽनाशेऽपि, भीरुभटवदपसरणाभ्युपगमेऽपीति भाव, मूलाज्ञानसबन्ध एवाव्याप्ति । मूलाज्ञानसबन्धस्य ब्रह्मज्ञानेतरज्ञाननाश्यत्वस्यैव प्राप्त्या विशेषणाभावेनाव्याप्तिरित्याशय ॥ १२९३ ॥

**किञ्च ब्रह्मज्ञाननाश्यं ब्रह्मज्ञानं तवापि न ।**
**आत्माश्रयादतस्तत्रैवाव्याप्तिरभवद्ध्रुवा ॥ १२९४ ॥**

स्वाभाववतिकाले स्वस्य भावरूपव्याघातपर्यवसानभिया, स्वस्य स्वनाशकत नाङ्गीकृतम् । न हि नखाग्रेण स्वनखाग्रमेव छेद्यमुपलब्ध' इति परेणोक्ते प्रागभाव प्रतियोगिहेतुरिति पक्षे तन्मात्रस्याहेतुत्ववत् प्रतियोगी ध्वसहेतुरिति पक्षेऽपि अतिप्रसङ्गेन (क्षणिकत्वापत्तिरूपेन श्री) तन्मात्रस्याहेतुत्वात् । दग्धदाह्यदहनस्यापीशेच्छादिनैव नाशात् (न्या ४ ।३ ।६३५) । अत ब्रह्मज्ञान एव लक्षणस्याव्याप्ति । न च तदपि अलक्ष्य अद्वैतहान्यापत्ते । नापि प्रत्यक् स्वरूप वेदान्तजन्यत्वानुपपत्ते । नापि च अज्ञाननिवृत्तिद्वारा स्वनिवर्तकत्वम् । त्रिक्षणावस्थायिन तृतीयक्षणे स्वयमेव नष्टत्वेन नाशकत्वायोगात् । तदेतदभिप्रेत्योक्त **ध्रुवेति** ॥ १२९४ ॥

**बाध्यत्वे निर्विकल्पा धीर्न जगद्धीषयेन्मम ।**
**नाश्यत्वे स्वविनाश्या धीर्न जगद्धीषयेन्मम ॥ १२९५ ॥**

तथा च निवृत्तिर्बाधश्चेत् निर्विकल्पकस्य बाधकत्वायोगेन न तद्बाधधी । नाशश्चेत् स्वखिन्नेवाव्याप्ति । रूप्यादौ निन्यनिवृत्ते नष्टमित्यननुभवेन तत्राप्यव्याप्ति ॥ अधिष्ठानवत्सत्येऽज्ञानेऽतिव्याप्तिश्च तदुक्त न्यायामृते 'विज्ञाननाश्यता मिथ्यारूप्यादौ नानुभूयते । कि त्वदधिष्ठानवत्सतो तदज्ञानेऽनुभूयते इति (१ । १ । प ४०) ॥ १२९५ ॥

**किञ्च प्रारब्धकर्माणि ब्रह्मज्ञानादनन्तरम् ।**
**स्थायीनि भोगक्षय्याणि तेष्वव्याप्तिर्द्विधा-**
**ऽप्यभूत् ॥ १२९६ ॥**

द्विधाऽपि बाध नाश इति पक्षद्वयेऽपि । अविद्यालेशसस्कारादिकमपि समानयोगक्षेमम् । तस्यापि भोगनाश्यत्वेन तत्रापि अव्याप्ति ॥ १२९६ ॥

**अर्थक्रियाकारितैव व्यावहारिकता यदि ।**
**शशशृङ्गमभूत्तत्वं परमार्थतरं तदा ॥ १२९७ ॥**

परमार्थतर इति तस्य लक्षणसद्भावशङ्काया अप्यविषयत्वात् ॥ १२९७ ॥

**उपादानं निमित्तं वा भ्रमाधिष्ठानमेव वा ।**
**ब्रह्मत्वपरमार्थत्वादुपेक्ष्यमभवत्तव ॥ १२९८ ॥**

ब्रह्मण्यतिव्याप्तिश्च । 'न चात्मन्यर्थक्रियाकारित्व मास्तीति वाच्यम् । तस्य निखिलप्रपञ्चकारणत्वेन श्रुतिशतसमधिगतत्वात्' (वादा) पररीत्याऽप्याह **उपादानमिति।** उपादाननिमित्त वा इत्यनास्था। विवर्तोपादानत्वपक्षे आह **अधिष्ठानमेव वेति।** अन्तत अज्ञानसाधकताङ्गीकृतैव। 'साधकत्व सतस्तेन साक्षिणा सिद्धिमिच्छता। स्वीकृतमि'ति उक्ते । अस्त्वतिव्याप्ति कि तत इत्यत आह **अपरमार्थत्वादुपेक्ष्य इति** ॥ १२९८ ॥

**मुक्तेश्च साधको मुक्तो मुक्तिदं चाभवन्मृषा ॥ १२९९ ॥**

तदुक्त गौडपादकारिकाया 'न बद्धो न च साधक । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता' इति। तदप्यस्तु इति वैयात्येन वदन्त प्रति तु 'कशावेत्रादिक तु तस्करस्योत्तर भवेदित्युक्त्यैव गति ॥ १२९९ ॥

**भयकम्पादिहेतुत्वं रज्जुसर्पस्य ते मते ।**
**स्वाप्नस्य चास्ति तेनेदं व्यावहारिकता कथम् ॥ १३०० ॥**

**प्रातिभासिक एवार्थो ज्ञानं च प्रातिभासिकम् ।**
**इति यो वक्ति किं नास्य प्रातिभासिकमर्थकृत् ॥ १३०१ ॥**

प्रातिभासिके रज्जुसर्पादौ स्वाप्ने रम्भासम्भोगादौ चातिव्याप्ति । न च प्रातिभासिकपदार्थज्ञानमेवार्थक्रियाकारीति युक्तम् । त्वन्मते प्रतिभासातिरिक्त-प्रातिभासिकानङ्गीकारादित्याह **भयेति** ॥ १३०० ॥ १३०१ ॥

**अतत्वमभवत्तेऽन्नं तृणं तत्वमभूदहो ॥ १३०२ ॥**

पशोरर्थक्रियाऽर्ह तव च अनर्ह तृणमेव तव व्यावहारिकत्वाभावात् तत्वमभूत् तेन विरुद्ध लक्षण आचक्षाणस्य तव पशुत्वमेवाभूदित्यपहास ॥ १३०२ ॥

**समर्थायां प्रवृत्तौ तु प्रामाण्यं हीयते किल ।**
**असमर्थप्रवृत्तौ तु प्रामाण्यमुपचीयते ॥ १३०३ ॥**

तदिदमापन्न गोशृङ्गज्ञानमप्रमाण समर्थप्रवृत्तिजनकत्वात् । अतथाभूत शशशृङ्गज्ञानमेव प्रमाणमिति । अपहसति **किलेति** ॥ १३०३ ॥

**इयं हि शास्त्रमर्यादा न वार्यादायवेदिभिः ।**
**यत्सार्थक्यं परस्याह वैयर्थ्यं स्वस्य स स्वयम् ॥ १३०४ ॥**

इय = भेद मोक्षरूपार्थक्रियाकारी व्यावहारिक अतत्वम् । ऐक्य अतथाभूत तत्त्व इत्येवरूपा । **न वार्या** आदाय वेदिभि इति पदच्छेद । व्याहतभाषिणा परेणास्मदभिलषितस्यैवार्थस्य शब्दभेदेन साधनात् ॥ १३०४ ॥

**सत्त्वमर्थक्रियाकृत्त्वं तेन च क्षणिकं जगत् ।**
**यो वक्ति तेन ते सख्यं महदासीद्भवान्तरे ।**
**अर्थक्रियाकारि सर्वं यस्त्वं मिथ्येति कत्थसे ॥ १३०५ ॥**

**एतादृशं च मिथ्यात्वं भेदस्यास्तु सदा मम ।**
**मुक्तिं च सद्यस्सन्दध्याद्य एवं व्यावहारिकः ॥ १३०६ ॥**

'सर्व क्षणिक अर्थक्रियाकारित्वात्' इति क्षणिकत्वादिमत व्याहतेर्हेयम् । व्याहतत्वेन उभयो सख्यम् । तदुक्तमनुव्याख्याने 'पूर्वमध्यापरकलाविकलः क्षण इष्यते' इति । 'विनाशे चेन्न तत्कार्य' इति च । तथा च न तन्मते सस्काररूपार्थक्रियासाधकत्व तदुक्त तत्रैव 'उत्तरोत्पत्तिमात्रेण विनाशात्पूर्ववस्तुत. । न सस्कारार्पकत्व' इति, 'मायावादिवदेवासावुपेक्ष्यो भूतिमिच्छता' इति च ॥ ॥१३०५ ॥ १३०६ ॥

**महातत्त्वं तवैक्यं च न भेदस्य विरोधकृत् ।**
**अतो यमप्रतिद्वन्द्वो द्वन्द्वं सर्वत्र साधयेत् ॥ १३०७ ॥**

न **विरोधकृत्** अर्थक्रियाऽनर्हत्वात् । **अयं** भेद । **द्वन्द्वं** भेदव्यवहारम् ॥ ॥१३०७ ॥

**नाप्यविद्याकार्यता ते व्यावहारिकतोचिता ।**
**अविद्यायामभावेन भेदेऽनादावभावतः ।**
**सत्वाच्च रज्जुसर्पादिप्रातिभासिकराशिषु ॥ १३०८ ॥**

**अविद्याया** आत्माश्रयात् । अनुपादानकत्वाच्च । व्यक्तिभेदकल्पने च अनवस्थाद्यापत्ते । 'अज्ञानस्य च मिथ्यात्वमज्ञानादिति कल्पने । अनवस्थितिस्तथा च स्यादन्योन्याश्रयताऽथ वा' इत्युक्ते । **भेदे** उपलक्षणम् । ईशे अविद्यासयोगे, जीवे चेत्यपि ग्राह्यम् ॥ १३०८ ॥

**न हि हानमुपादानमभिलापोऽपि वा तव ।**
**व्यवहारो मतस्तस्मात्तदर्हत्वं च सा न ते ॥ १३०९ ॥**

**या ब्रह्मण्यभिलापार्हे सदादेये मुमुक्षुभिः ।**
**हेये च शुक्तिरूप्यादौ जगतीव प्रदृश्यते ॥ १३१० ॥**

व्यवहारयोग्यत्व व्यावहारिकता इत्यपि न युक्तम् । अत्र व्यवहार हानमुपादान अभिलापो वा इति वक्तव्यम् । लक्षण ब्रह्मणि पारमार्थिकेऽतिव्याप्त इत्याह **ये**ति । सदादेये सदा आदेये इति पदच्छेद । जगति व्यावहारिके वियदादौ ॥ ॥१३०९ ॥ १३१० ॥

**उभयत्र ह्यतिव्याप्ता कथं मध्यस्य सा दशा ॥ १३११ ॥**

**व्यावहारिकतोक्तिस्तद्व्यवहारज्ञसंसदि ।**
**न भाति प्राङ्कणकथा न हि भाति रणाङ्कणे ॥ १३१२ ॥**

**सा** व्यवहारयोग्यतारूपा। योग्यताया योग्यतान्तराभावात् व्यवहारयोग्यतायामव्याप्तिश्च ध्येया ॥ १३११ ॥ १३१२ ॥

**प्रत्यक्षश्रुतियुक्तीनां विरोधादैक्यमेव ते।**
**स्याद्व्यावहारिकं सिंहदेवदत्तादिकैक्यवत् ॥ १३१३ ॥**

**व्यावहारिकं** बाध्यम् ॥ १३१३ ॥

**सादृश्यैक्यपरत्वे स्यादेव वाव्यावहारिकम्।**
**न चेत्पूर्वोक्तमार्गेण स्यात्तद्धि प्रातिभासिकम्॥ १३१४ ॥**

**भेदस्तु श्रुतियुक्तिभ्यां प्रत्यक्षेण च साधितः।**
**ब्रह्मवत्पारमार्थ्यार्हः कथं स्याद्व्यावहारिकः॥ १३१५ ॥**

वा अव्यावहारिक इति पदच्छेद । पारमार्थिक इत्यर्थ ॥ १३१४ ॥ ॥१३१५ ॥

**भेदस्तन्मतिभेदादेर्विरोध्यैक्यस्य चोद्धृतेः।**
**त्रिधाऽपि परमार्थोऽभूद्योत्युच्च ब्रह्मधर्मिकः ॥ १३१६ ॥**

**मतिभेदादेः** आदिपदेन स्थानभेदग्रहणम्। सयुजौ सखायौ इति वचनात् **उद्धृतेः** निरासात्। **ऐक्यस्य** स्वरूपैक्यस्य। **उद्धृतेः** त्वयैवासाधकत्वकथनेन निरासात्। चशब्देन भेदस्य पूर्वोक्तप्रमाणत्रयसिद्धत्वसमुच्चय । एव **त्रिधा अत्युच्चब्रह्मधर्मिकः**। परमार्थब्रह्मस्वरूपत्वादिति हेत्वन्तरम्। तुल्यवित्तिवेद्यतया इतरधर्मिकोऽपि परमार्थ एव सेत्स्यतीत्याशय ॥ १३१६ ॥

**एवमाविद्यकं भेदमथवौपाधिकं वदन्।**
**प्रष्टव्यो यद्यविद्याद्यैः कृतत्वं तस्य कीर्त्यते॥ १३१७ ॥**

**तदा तवापसिद्धान्तः षडस्माकमनादयः ।**
**इत्याहुः किल ते पूर्वे तस्माज्जीवेशयोर्भिदा ।**
**अनादिस्ते ततस्तस्याः कृतत्वोक्तिरविद्यया ॥ १३१८ ॥**

**आविद्यक औपाधिकं** इत्यत्र उभयत्र विकल्प । न अविद्यादिकार्यत्वम् । अपसिद्धान्तात् । अनादिभेदस्य कार्यत्वासभवात् । **अविद्यया** स्वसिद्धान्तापरिज्ञानेन ॥ १३१७ ॥ १३१८ ॥

**यदि तज्ज्ञापितत्वाच्च भेदे दोषः प्रभाष्यते ।**
**तदैक्यमपि दोषि स्यात्तच्च मानसवेदने ।**
**आज्ञा नाज्ज्ञापितं किं न किं वा**
**देहाद्युपाधिभिः ॥ १३१९ ॥**

न तज्ज्ञापितत्वम् । ऐक्येऽपि दोषप्रसरात् । तस्यापि देहान्त करणाद्युपाधिभिर्ज्ञापितत्वात् ॥ १३१९ ॥

**अविद्याकार्यमखिलं कार्यं किल भवन्मते ।**
**एवं सत्यैक्यधीरं ते किं ते हन्तैतदन्तरा ॥ १३२० ॥**

अखिल कार्य देहेन्द्रियादिकम् । अविद्याकार्यम् । ब्रह्मातिरिक्तस्य सर्वस्य न कार्यत्वोपगमात् । **अन्ते** तत्त्वमस्यादिवाक्योक्तसम्यग्धीजन्मकाले । **एतदन्तरा** अविद्या विना । देहाद्युपाधिभिर्ज्ञापितत्वे अविद्याज्ञापितत्वमेव पर्यवस्यति ॥ ॥१३२० ॥

**अविद्यमानं भातीति वादो नादौ कथं वद ।**
**बन्धेऽप्याविद्यकत्वं तदन्धते निर्निबन्धनम् ॥ १३२१ ॥**

**भेदः न अविद्यमानः अनादित्वात् ऐक्यवत्** इति प्रयोग अभिप्रेत । न च दृष्टान्त साध्यसाधनविकल । ऐक्यस्य ब्रह्मस्वरूपत्वोपगमात् । बन्धोऽप्यत्र पक्षत्वे नाभिमत एवेत्याह **बन्ध इति** ॥ १३२१ ॥

**अतस्तत्संबन्धमात्राद्यद्यवद्यं निगद्यते ।**
**तर्ह्यैक्यस्याप्यवद्यं स्यात्तदज्ञानावृतं हि ते ॥ १३२२ ॥**

अविद्यासबन्धित्वमात्र अविद्यकत्व इत्यपि पक्ष दुष्ट इत्याह **अतः इति । अवद्यं** आविद्यकत्वदोष । तत् ऐक्यम् । **अज्ञानावृतं** ब्रह्मस्वरूपत्वात् ॥ १३२२ ॥

**यतो ब्रह्मचितोऽप्यस्ति तत्संसर्गोपवर्गतः ।**
**पुरा ततस्सापि भेदसमैवासीन्मते तव ॥ १३२३ ॥**

**सा** विशुद्धा ब्रह्मचित् । **तव मते** 'अविद्यातच्चितोर्योग' इति अनादिरेव शुद्धचित अविद्यासंसर्ग इति वादिनो मते ॥ १३२३ ॥

**अज्ञाननाशाद्भेदस्य नाशे ब्रह्मापि नश्यतु ॥ १३२४ ॥**

**यद्यज्ञानानुपादानं ब्रह्मतन्नाशनाशिन ।**
**तर्ह्यनादिविभेदोऽयं कुतस्तन्नाशनाशवान् ॥ १३२५ ॥**

नापि अविद्यानाशनाश्यत्व औपाधिकत्वम् । अनादेर्भेदस्य तदसभवात् । अन्यथा अनादित्वाविशेषात् ब्रह्मणोऽपि तन्नाशनाश्यत्वेन औपाधिकत्वापातात् । अनादित्वेन तत्र परिहारे भेदस्यापि तथेत्याह **अज्ञानेति** ॥ १३२४ ॥ १३२५ ॥

**तद्ब्रह्मसमसामर्थ्यो भेदो भेद्यो न केनचित् ॥ १३२६ ॥**

**भेद्यः** दूषणार्ह ॥ १३२६ ॥

**किञ्च मायानिवृत्तौ च स्मर्यते श्रूयते च या ।**
**साभिदानपरैर्भेद्या भिनत्ति निखिलं जगत् ॥ १३२७ ॥**

**मायानिवृत्तौ** मोक्षे 'अविद्याऽस्तमयो मोक्ष.' इति तदुक्ते । **सा भिदा** पञ्चविधो भेद । **भिनत्ति** पञ्चधा जडजीवादिक परस्पर व्यावर्तयति ॥ १३२७ ॥

**यद्ब्रह्मणा सहेत्युक्तं मुक्तौ तन्नासती भिदा।**
**व्रणादप्यधिको बाधस्सहोक्त्याऽद्वैतवादिनः ॥ १३२८ ॥**

श्रूयते इत्युक्त प्रमाणयति **सहेति। व्रणादिति** अन्त्यकाले भगन्दरव्रणपीडितेन शिष्यान्प्रति तथोक्ते इति कथा ॥ १३२८ ॥

**अपि स्वरूपनिष्पत्तौ समीपप्राप्तिरुच्यते।**
**परंज्योतिरिति श्रुत्या तत्त्यागार्हा कथं भिदा ॥ १३२९ ॥**

**पूर्वोक्तब्रह्मसूत्राणि भेदमाघोषयन्ति हि।**
**अभेदोक्तीस्तिरस्कृत्य कुतस्तस्य ह्यसत्यता।**
**अतो भेदश्रुतेरग्रे कस्य स्यात्प्रत्यवस्थितिः ॥ १३३० ॥**

उपसपद्येत्यत्र सामीप्यवाचिना उपशब्देनापि मुक्तौ भेदसिद्धिरित्याह **समीपेति।** तदुक्त 'अतिक्रम वदन्त तमुपशब्दो निवारयेदि'ति ॥ १३२९ ॥
॥१३३० ॥

**अनादिवेदवाक्येषु परापरकथा वृथा।**
**निषेधविधिवार्ताद्धा दग्धाग्नीषोमपावके ॥ १३३१ ॥**

यत्तूक्त वाचस्पतिना पूर्वस्य परेण बाध इति तदपाकरोति **अनादीति।** तथा च अभेदवाक्याना भेदवाक्येभ्य· परत्वमसिद्धम्। अतो न तेषा तेन भेदवाक्येभ्य प्राबल्यसिद्धिरिति ॥ विधितो निषेधप्राबल्यमित्यपि न नियम इत्याह **दग्धेति।** तत्र 'मा हिस्यात्सर्वा भूतानि' इति निषेधापेक्षया 'अग्नीषोमीय पशुमालभेते'ति विधेरेव प्राबल्यस्य दृष्टे । तथा च तत्र तव न्याय दग्ध व्यभिचरित इति ध्वनि ॥ १३३१ ॥

**परस्मात्पूर्वबाधश्चेत्स्मृत्या स्याच्छ्रुतिबाधनम्।**
**परस्माज्जगतः पूर्वब्रह्मबाधश्च ते भवेत् ॥ १३३२ ॥**

बहुत्वनिरवकाशत्वादिकमेव प्राबल्यप्रयोजक न केवल परत्व निषेधरूपत्व वा। 'द्विविध बलवत्त्व च बहुत्वाच्च स्वभावत। तयो स्वभावो बलवानुपजीव्यादिकश्च स' इति तत्त्वनिर्णयोक्तिं समर्थयमान केवल परत्वस्य प्राबल्यप्रयोजकत्वेऽतिप्रसङ्गमाह **स्मृत्येति** ॥ १३३२ ॥

**निषेधाद्विधिबाधश्चेद्बौद्धोक्त्या धर्मबाधनम्।**
**तथा शून्यत्वकथया ब्रह्मबाध्यं भवेत्तव ॥ १३३३ ॥**

निषेधमात्रस्य बाधकत्वप्रयोजकत्वे च दोषान्तराण्याह **निषेधादिति**। **शून्यत्वकथया** बौद्धसबन्धिन्या 'शून्य तत्त्वमविज्ञेयमि'त्यादिरूपया। यद्वा 'असदेवेदमग्र आसीदि'ति निषेधश्रुत्या 'सत्यज्ञानमनन्त' इति श्रुते। इद उपलक्षणम्। 'परत्व तु प्रमानन्तरभ्रमे व्यभिचारि दृश्यते च नक्त्वा सेडिति पर प्रति मृडेत्यादिपूर्व बाधकम्' इत्यादिक चात्र पूर्वत्र चानुसन्धेयम्। (न्याया १। १४ प ११८) ॥ १३३३ ॥

**परया भार्यया कार्यनिषेधपरया तव।**
**पतिस्त्वं गृहकृत्यानां विधाता हन्त बाध्यसे ॥ १३३४ ॥**

लोकरीत्या परन्याय अपहसति **परयेति** ॥ १३३४ ॥

**किञ्च पूर्वं निषेध्यं च तादात्म्यमभवत्तव।**
**भेदः परो निषेधो मे योऽन्योन्याभावरूपकः ॥ १३३५ ॥**

**अतस्त्वन्न्याय एवायं चित्रं मत्कार्यसाधकः।**
**यद्बलादैक्यवाक्यानां बाधिका भेदवागभूत् ॥ १३३६ ॥**

**अतो निरवकाशं यत्तदेव बलवत्तरम्।**
**दुर्बलं सावकाशं स्यादिति सर्वं मनोरमम् ॥ १३३७ ॥**

स्वव्याघातकरश्चाय परस्य न्याय इत्याह **किञ्चेति** ॥ १३३५ ॥ १३३६ ॥ ॥१३३७ ॥

**यद्यन्यतः सिद्धभेदस्यानुवादेन मे श्रुतिः ।**
**न भेदसाधिका तर्हि स्वप्रकाशत्वशक्तितः ॥ १३३८ ॥**

**सिद्धस्य ब्रह्मसत्त्वस्याप्यनुवादपरा श्रुतिः ।**
**अस्ति ब्रह्मेत्यादिरूपा न तत्सत्त्वं प्रसाधयेत् ॥ १३३९ ॥**

**असिद्धबोधकं शून्यवाक्यं स्यादैक्यवाक्यवत् ।**
**अतोऽपि ब्रह्मभेदोऽयं ब्रह्मसंमित एव हि ॥ १३४० ॥**

अवादकत्वेन भेदवाक्याना दौर्बल्य इत्येतन्निराह **तर्हीति** ॥ १३३८ ॥ ॥१३३९ ॥ १३४० ॥

**यदि प्रत्यक्षसिद्धस्य सा भेदस्यानुवादिनी ।**
**तर्हीशधर्मिको भेदो भीमसेनगदा भवत् ।**
**यतोन्यपदयुग्मेन भेदौ द्वावप्युदीरितौ ॥ १३४१ ॥**

'न च जीवेश्वरभेद· सिद्ध इत्यनुवादकत्व भेदवाक्यानाम् । आगम विनेश्वरस्यैवासिद्धे' इति तत्त्वनिर्णयानुरोधेनाह **यदीति** ईश्वरस्य अत एव तद्धर्मिकस्य तत्स्वरूपस्य भेदस्य प्रत्यक्षेण सिद्ध्यसभवात् । 'अन्य अत्ती'ति जीवधर्मिक, 'अन्य अनश्नन्नि'त्यनेनेश्वरधर्मिक इति द्वयोरपि लाभो ज्ञेय· ॥ ॥१३४१ ॥

**अथ प्रत्यक्षसिद्धस्य जीवभेदस्य च श्रुतिः ।**
**कुतोऽनुवादं कुरुते तूष्णीं वा दूषणाय वा ॥ १३४२ ॥**

**आद्ये द्विर्बद्धभेदोऽसौ कुबद्धोऽभून्न संशयः ।**
**न चेत्स्वोक्तार्थनिर्णीत्यै शासनानुसृतिर्वृथा ॥ १३४३ ॥**

**तूष्णी** समानविषयकत्वमात्रेण। **सुबद्धः** तदुक्त 'बहुप्रमाणसवादश्च दार्ढ्यहेतुरेवे'ति। **निर्णीत्यै** न्यायालयादिषु। **शासनं** शिलाशासनम् ॥ १३४२ ॥ ॥१३४३ ॥

**मानस्य मानसंवादे प्रामाण्यावधृतिः किल।**
**चित्रसत्वौषधेनाभूत्काचच्छेदेक्षिणतीक्ष्णता।**
**अतोतिबलवद्वैरात्स्यादैक्यस्य पलायनम् ॥ १३४४ ॥**

**काचच्छेदे** अक्षिदोषनिरासे। तथा अत्रापि अप्रामाण्यशङ्कानिरास दार्ढ्यहेतुरेव। यथोक्तम्। 'तच्च यावद्यावदधिक प्रमीयते तत्तदनुसारिणी नि शङ्का क्षिप्रप्रवृत्ति प्रसूते इत्यनुभवसिद्धम्। तथा च प्रामाण्यमेव स्वकार्यातिशयवशेनातिशयवदुच्यते इति। **पलायनं** बाध। यथोक्त 'बहुप्रमाणनिषेधादेवैकस्याप्रामाण्य दृष्ट शुक्तिरजतादौ' इति ॥ १३४४ ॥

**द्वितीये दूषणं किं तदैक्यवाक्यं यदीष्यते।**
**तदाऽन्योन्याश्रयो दोषो वैर्याश्लेषोपमस्तव ॥ १३४५ ॥**

द्वितीये दूषणार्थ अनुवाद इति पक्षे। किं तद्दूषणम् ॥ १३४५ ॥

**दूषणार्थानुवादित्वे सिद्धभेदपरश्रुतेः।**
**निरङ्कुशैक्यवागैक्यमुक्त्वा तां दूषयेत्स्वयम् ॥ १३४६ ॥**

**सिद्धेऽस्या दूषकत्वे च दूषणार्थानुवादिनी।**
**सा स्यादिति न कस्य स्यादन्योन्याश्रयदूषणम् ॥ १३४७ ॥**

भेदश्रुते· अनुवादित्वे तत एव दुर्बलत्वे सिद्धे सति, ऐक्यवाक्य भेदवाक्याबाधेन निरङ्कुश सत् स्वार्थपर स्यात्। ततश्च भेदवाक्यस्य दूषक स्यात्। सिद्धे तस्य दूषकत्वे भेदवाक्यमनुवादक स्यादिति अन्योन्याश्रय इत्याह **दूषणार्थेति** ॥ १३४६ ॥ १३४७ ॥

**श्वानं गृहाण भिक्षा मे मास्त्वित्याभाणकं स्मर ।**
**यदन्योन्याश्रयशुना दंष्ट्रा परशुनार्दिते ।**
**दूरेऽभूद्दूषणार्थानुवादित्वान्नस्य भोजनम्   ॥ १३४८ ॥**

तथा च श्वानदशनभिया भिक्षाया इव अन्योन्याश्रयभिया अनुवादित्वोक्तिस्त्वया त्याज्येत्याह **श्वानमिति** ॥ १३४८ ॥

**दृढप्रत्यक्षवैरोऽपि श्रुतिरैक्यं कथं वदेत् ।**
**अबाधितो हि वाक्यार्थो योग्यतावश्यकी**
**न किम् ॥ १३४९ ॥**

'न च प्रत्यक्षसिद्ध अन्येन केनापि बाध्य दृष्ट' इति तत्त्वोद्योत हृदि कृत्वाऽऽह **दृढेति** । वाक्यप्रामाण्यस्य प्रमाणविरोधाभावलक्षणयोग्यताघटितत्वादिति भाव ॥ ॥१३४९ ॥

**यदा प्रत्यक्षबाधायाप्यैक्यवाक्यं व्रजेत्तव ।**
**तदा बलवती भेदश्रुतिर्हन्याद्धि पृष्ठतः   ॥ १३५० ॥**

'प्रत्यक्षानुमानसिद्धत्वे भेदस्य तद्विरोधादेवाप्रामाण्यमभेदागमस्य । तेन च तस्याप्रामाण्ये नानुवादकत्व भेदवाक्यानाम् । न हि बलवतोऽनुवादकत्व दाढर्यहेतुत्वात्' इति तत्त्वनिर्णयमनुरुध्याह **यदेति** । **प्रवर्तते** अपौरुषेयत्वाभिमानेन बलवती । तदा न्यायसाम्येन बलवती भेदश्रुति दैवादागत प्रत्यक्षादिप्रमाणान्तरसवादेन ऐक्यवाक्यापेक्षया बलीयसी च । **हन्यात्** अभेदश्रुतिं स्वार्थात्प्रच्यावयेत् ॥ १३५० ॥

**अथ भेदश्रुतिं रोद्धुंयदा निववृते ततः ।**
**तदा तां पृष्ठतो हन्यात्स साक्षी बलवत्तरः   ॥ १३५१ ॥**

**निववृते** प्रत्यक्षस्य स्वभावप्राबल्यनिमित्तात् बलवत्तरा भेदश्रुतिसवादेन सुदृढा च ॥ १३५१ ॥

**तस्मादुभाभ्यां युद्धेन क्लिश्येदैक्यश्रुतिस्तव ।**
**अतस्तां क्लेशनाशाय शीघ्रमर्थान्तरे नय ॥ १३५२ ॥**

**शीघ्रं** प्रामाण्यरूपप्राणरक्षणाय । **अर्थान्तरं** सादृश्याद्यैक्ये ॥ १३५२ ॥

**किञ्च प्रत्यक्षबाधाय नालं वाक्यशतान्यपि ।**
**अन्योन्याश्रयदोषेण तथा दोषान्तरेण च ॥ १३५३ ॥**

**किञ्चेति** उक्त हि परेणापि गीताभाष्ये (अ. १८) अग्नि अनुष्ण, अग्नि· न प्रकाशते इति ब्रुवत् श्रुतिशत अपि प्रामाण्य नाश्नुते । अतीन्द्रियविषयकत्वात्तत्प्रामाण्यस्ये'ति ॥ १३५३ ॥

**प्रत्यक्षबाधे वाक्यं तदैक्यं वक्ति ह्यबाधितम् ।**
**वाक्येनैवाक्षबाधे च कथं नान्योन्यसंश्रयः ॥ १३५४ ॥**

**वाक्येनैव यदाक्षस्य दृढस्यापि प्रबाधनम् ।**
**गङ्गायां घोष इति वाक्कुर्याद्घोषवतीं नदीम् ।**
**साक्षाद्बाधेन तत्त्यागे गतमैक्यं भवत्करात् ॥ १३५५ ॥**

**अन्योन्यसंश्रय इति** । न च वैपरीत्यं शक्यम् । प्रत्यक्षस्य जात्या अनुपसञ्जातविरोधित्वात् शीघ्रगामित्वात् विशेषविषयत्वात् निरवकाशत्वात् बहुप्रमाणसवादित्वाच्च प्राबल्यादिति भाव । विस्तर न्यायामृते (१-१०) । एव प्रत्यक्षस्य शाब्दबाध्यत्वे बाधकानि तत्रैव (१-१३) प्रकरणे व्युत्पादितान्यनुसन्धेयानि । तदुक्त **'यजमान** प्रस्तरत्व यथा नार्थ· श्रुतेरभूत् । ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषत' इति । अनु ॥ १३५४ ॥ १३५५ ॥

**त्यज वा लक्षणावृत्तिं भज वा तत्त्वविन्मतम् ।**
**व्रज वाऽन्यत्रवाणीमुत्सृज्य वा बुधसंसदि ॥ १३५६ ॥**

वैदिकत्वाभिमानेन कथाप्रवेशमभिलषतो द्वयी गतिः परस्य । प्रत्यक्षापेक्षया शब्दस्य दौर्बल्य वा इति अन्यतरपक्षाश्रयणम् । दौर्बल्ये लक्षणापक्षमवधीर्य विशिष्टयोरैवैक्यमङ्गीकर्तव्यम् । तच्च तवानिष्टम् । 'कथमेकत्वमनयोर्घटते विपरीतयो । प्रत्यक्षेण विरोधोऽयमुभयोरुपलभ्यते' इति त्वद्भाष्यकारवचनात् । प्राबल्ये तदविरोधाय तत्त्ववाद्युक्तदिशा सादृश्यैक्यमर्थ स्वीकुरु । तथा च दत्तजलाञ्जलि स्वरूपैक्यवाद । तथा चागतिकतया छद्मवैदिकवेषनिर्मोकेन वैदिकसभाया बहिष्कृतो भूयारित्याह **त्यजेति** ॥ १३५६ ॥

**दृढभेदश्रुतेर्वैराद्दृढप्रत्यक्षवैरतः ।**
**नाभेदमागमो वक्ति जीवस्य परमस्य च ॥ १३५७ ॥**

'निर्दोषश्रुतिसाक्षिभ्या प्रमिते ब्रह्मजीवयो । सर्वशक्त्यल्पशक्तित्वे मिथ्येति च न युज्यते' इत्याह **दृढेति** ॥ १३५७ ॥

**अतः प्रत्यक्षयोग्यार्थे प्रत्यक्षं बलवत्सदा ।**
**अतीन्द्रियार्थमात्रे तु प्रबला वागिति स्थितम् ॥ १३५८ ॥**

एव च प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृत इति वचन अतीन्द्रियार्थविषय एव वा बहुविषयकत्वेन वा इति निष्टङ्कितमित्याह **अत इति** तदुक्त तत्त्वनिर्णये 'प्रत्यक्षादिरागमस्य प्राबल्येऽपि नोपजीव्यविरोधे प्रामाण्य' इति । 'न चानुभवविरोधे आगमप्रामाण्यम् । आगमप्रामाण्यानुभवस्यैवाप्रामाण्यप्राप्तेरि'ति च ॥ १३५८ ॥

**अक्षसिद्धानुवादेऽपि का हानिरिति चिन्त्यते ।**
**याथार्थ्यमेव मानत्वं तस्य हानिर्न काचन ।**
**न चेत्स्मृतिरमानं स्यात्स्मृतिकर्तृव्यपेक्षया ॥ १३५९ ॥**

अपि च अनुवाद. कथ दोष. । याथार्थ्यस्याहाने· । अन्यथा स्मृतीना श्रुत्यर्थानुवादित्वेनाप्रामाण्यं प्रसज्यते इत्याह **न चेदिति** ॥ १३५९ ॥

**एकस्यामानमन्यस्य कथं मानं भवेद्वद ।**
**प्रमात्वमप्रमात्वं च न ह्येकत्रैव धर्मिणि ॥ १३६० ॥**

समानविषयकत्वे द्वयोरपि प्रामाण्य वा स्यात् अप्रामाण्यमेव वा । न तु अन्यतरस्य प्रामाण्य अपरस्य चाप्रामाण्यम् । **धर्मिणि** विषयसप्तमी । समानविषयकत्वे इत्यर्थ । वस्तुनो द्वैरूप्यत्वापत्तिरन्यथा इति भाव ॥ १३६० ॥

**अनपेक्षितमेकस्य परस्यान्नत्वमानता ।**
**परबोधनकाले तु तस्यापि तदपेक्षितम् ॥ १३६१ ॥**

अणुवादे कथञ्चिद्वैयर्थ्यमेव स्यात् । न त्वेवामानत्वमित्याह **अनपेक्षितमिति** । तदपि न सर्वत्र । तदुक्त 'सर्वाविवादस्थल एव कथञ्चिदनुवादकत्वम्' । अत्र तु अद्वैतवादिना एव विवाददर्शनान्न तदित्याह **परेति** ॥ १३६१ ॥

**प्रत्यक्षसिद्धभेदस्याप्यपलापे कृतो द्यमम् ।**
**परं बोधयितुं भेदवादी वादोऽप्यपेक्षते ।**
**अक्षसिद्धानुवादात्तन्न दोषः कोऽपि दृश्यते ॥ १३६२ ॥**

वा अद इति पदच्छेद । **न दोष** इति । तदुक्त 'प्रत्यक्षादिना भेदो येनानिश्चितस्तदर्थपर वाक्यमित्युत्तरमि'ति (तत्त्वनिर्णय ४३९) ॥ १३६२ ॥

**दूषणार्थानुवादे तु दूषणेनैव दूष्यता ।**
**अक्षसिद्ध्या न दोषोऽभूत्किं शून्यत्वं न दूष्यते ॥ १३६३ ॥**

किं चानुवादित्व कुतो दोष । कि प्रबलदूषणसद्भावात् उत तद्विषयस्यान्येनैव सिद्धत्वात् । आद्ये तेनैव दुष्टत्वे किं सिद्धत्वोक्तिदुर्व्यसनेन । द्वितीये प्रबलदूषणाभावात् उत्सर्गेन एव प्रामाण्यसिद्धे अनुवादित्वेनापि कीदृशो दोष स्यादित्याह **दूषणेति** । **शून्यत्वमिति** । अक्षासिद्धमपीत्युपस्कर्तव्यम् ॥ १३६३ ॥

**दूषणं नैव भेदेऽस्ति भेदं तत्साधयेच्छ्रुतिः ।**
**अक्षासिना छिन्नपदा यद्धग्राभूत्परश्रुतिः ॥ १३६४ ॥**

इद च कृत्वाचिन्तया अनुवादस्यादोषत्वसमर्थनायोक्तम् । वस्तुतस्तु नात्र बाधकमस्त्यपीत्याह **दूषणमिति** ॥ १३६४ ॥

**अपि चामानतस्सिद्धिर्दूषणेनाप्यपेक्ष्यते ।**
**दृढमानेन सिद्धिस्तु भवेद्दूषणदूषणम् ॥ १३६५ ॥**

अपि च प्रमाणाभासेन प्रतिवादिसिद्धोऽर्थो भवति दूषणाधिकारी । सुदृढप्रमाणेन सिद्धत्वे तु तन्निरसनाय प्रवृत्त दूषण स्वयमेव तेन दूषित भवतीत्याह **दृढेति** ॥ १३६५ ॥

**दूषणेनैव मानस्यामानत्वेऽन्योन्यसंश्रयः ।**
**अतोऽक्षसिद्ध्या दोषोक्तिरदोषज्ञत्वसाधिका ॥ १३६६ ॥**

वैपरीत्ये प्रागुक्तमन्योन्याश्रय स्मारयति **दूषणेनैवेति** ॥ १३६६ ॥

**विरज्येतोत्तमश्लोकगुणानामनुवादतः ।**
**क इत्यादिव्यासवाक्यान्यनुवादं स्तुवन्ति हि ॥ १३६७ ॥**

अनुवादो न केवल न दोष किन्तु मोक्षहेतुरित्यत्र भागवत प्रमाणयति **विरज्येतेति** । 'निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोतृमनोऽभिरामात् । क उत्तमश्लोकगुणानुवादात् पुमान्विरज्येत विनाऽतिमुग्धात्' इति भागवते अनुवाद स्तूयते ॥ १३६७ ॥

**निवृत्ततर्षप्रेयस्त्वं भवस्यौषधता तथा ।**
**मनःश्रोत्रप्रियत्वं च मिथ्याज्ञान्यतिदूरता ॥ १३६८ ॥**

स्तुतिपरधर्मानाह **निवृत्तेति** ॥ १३६८ ॥

**महामानत्व एवैते युज्येरन्धर्मराशयः ।**
**अमानत्वे तु भज्येरन्निति मन्यामहे वयम् ॥ १३६९ ॥**

**अतः प्रमाणसंवादादनुवादो महत्तरम् ।**
**मानमित्येव जानीहि न लुनीहि सतां मतम् ॥ १३७० ॥**

तथा च अनुवादस्य परमप्रामाण्यसिद्धिर्दुर्वरित्याह ॥ १३६९ ॥ १३७० ॥

**स्यादेकैकमते शङ्का सर्वस्याभिमते तु न ।**
**अन्नं हि कस्य वा नान्नं प्रत्यक्षं मानमेव तत् ॥ १३७१ ॥**

सर्ववादिसप्रतिपत्तेरपि प्रत्यक्ष बलवत्तर प्रमाणमित्याह **स्यादिति**। तत्सिद्धमन्न केनाप्यन्येन प्रमाणेन अपोद्यत इत्याह **अन्न हीति**। तदुक्त 'न हि अन्नत्वे दुर्घटे तस्यानन्नत्व भवति। दृष्ट्यबाधितदृष्टस्य। न हि युक्तिपरा जित क्षुधिते नान्नमत्ती'ति (तत्वो-) ॥ १३७१ ॥

**अतो नादिमतप्राप्ततदैक्यस्यानुवादनम् ।**
**तद्धैक आहुरसदेवेदमग्र इति श्रुतौ ।**
**ब्रह्मासत्त्वानुवादाभं दोषार्हमिति शोभते ॥ १३७२ ॥**

अतो भेदश्रुतिभिर्निषेधार्थमैक्यस्यैवानुवाद इति युक्तम्। अनादौ वेदे कथ सादिमतप्राप्तमनूद्यत इति चेन्न। मतानामप्यनादित्वात्। तदुक्त अनादिकालतो वृत्ता-समया हि प्रवाहत' इति (अनु २-२-१) अन्यथा त्वयाऽखण्डवादानारम्भप्रसङ्ग। 'तद्धैक आहु असदेवेदमग्र आसीदिति' इति बौद्धमतानुवादस्य वेदे दर्शनाच्च इत्याह **अत इति** ॥ १३७२ ॥

**दोषानर्हाक्षसिद्धस्य त्वनुवादोऽपि वादवत् ।**
**न चेद्बहुमहावाक्याशास्यमैक्यं परस्परम् ।**
**अनुवक्ति भिदा श्रुत्या भेत्तुं सुन्दोपसुन्दवत् ॥ १३७३ ॥**

**दोषानर्हेति।** तदुक्त तर्कताण्डवे (१-४-७५) 'द्वारिणा द्वार सत्त्वेनार्थविषयकग्रहणे द्वारिणोऽपि सत्त्वेनार्थविषयते'ति। अनुवादमात्रस्य दोषत्वेऽतिप्रसङ्गमाह **न चेदिति।** नवकृत्व उक्ताना तत्त्वमसिवाक्याना वा महावाक्याना वा परस्पर अनुवादकत्वेन भेदश्रुत्या बाधनापत्ते। अनुवादत्वे पूर्वापरीभावस्याप्रयोजकत्वात्। प्रत्यक्षप्राप्तानुवाद श्रुतिप्राप्तानुवाद इति तु वैषम्यमात्रम् ॥ १३७३ ॥

**इत्यैक्यमपि शोच्यं स्यात्तन्मानान्तरसिद्धता।**
**दार्ढ्यायैवेति वक्तव्यं सर्वैरपि विवेकिभिः ॥ १३७४ ॥**

**शोच्यं स्यात् इति** तदुक्त तत्त्वनिर्णये (४३०) तथा सति अभ्यासादेरप्यप्रामाण्यहेतुत्व स्यादिति ॥ १३७४ ॥

**सर्वार्थान्स्वत एवाह प्रलयेऽपि सती श्रुतिः।**
**सृष्टौ तदुदितानर्थान्सर्वे वेदानुसारतः ॥ १३७५ ॥**

**अनुमिन्वन्ति पश्यन्ति वदन्ति च ततस्ततः।**
**अतोऽन्यदनुवादि स्याच्छ्रुतिस्त्वन्यानपेक्षिणी ॥ १३७६ ॥**

लौकिकप्रमाणप्रवृत्ते पुरा प्रलय एव सर्वार्थप्रतिपादिका श्रुति नानुवादित्वशङ्काऽर्हा इत्याह **सर्वार्थाविति** ॥ १३७५ ॥ १३७६ ॥

**किञ्चानुवक्ति यन्नित्यं नानित्यमनुवर्तते ॥ १३७७ ॥**

**किञ्चेति** अनित्य नित्यमनुवक्ति नित्य नानित्यमनुवर्तते इति योजना ॥ ॥१३७७ ॥

**ये केऽन्य इति वा साऽन्यप्रोक्ततामपि यत्स्फुटम्।**
**दूष्यानुवादे वदति तत्स्वोक्तं न निषेधति ॥ १३७८ ॥**

**इति मन्यामहे दूष्यं दूषणं चैकवाक्यगम् ।**
**करोति शाखान्तरगातच्छाखान्तरवर्तिनाम् ।**
**न दूषणाय यतते वाक्यानामिति मे मतिः ॥ १३७९ ॥**

'यद्वदन्तीति वचन परिहारे विशेषयुक्ति च विना अनुवादकत्वायोगात्' इति वादावली हृदिकृत्वाऽऽह **ये के इति** । अनुवादकलिङ्गाभावे सोक्तत्वस्यैव प्राप्त्या न तन्निषेध इत्याह **तदिति** । किञ्चैकस्मिन्नेव महावाक्ये अनुवादनिषेधौ दृष्टौ । न तु शाखान्तरस्य शाखान्तरस्थेन निषेध इत्याह **करोतीति** ॥ १३७८ ॥ १३७९ ॥

**तस्मादृक्संहितावाक्ये सयुक्तिकमुदीरितम् ।**
**कुतस्सा दूषयेत्स्वार्थं सूक्तेऽस्मिन्नास्ति दूषणम् ॥ १३८० ॥**

**सूक्तं चेदं तदैव स्यात्तत्त्वमेव वदेद्यदि ।**
**अतत्त्वकथकं सूक्तमिति च व्याहतं वचः ॥ १३८१ ॥**

प्रकृते तु भेदवाक्यानि शाखान्तरस्थसूक्तगतानि । अतोऽपि न निषेध इत्याह **तस्मादिति** । सूक्तनाम्नाऽपि न तदुक्तस्य निषेधार्हतेत्याह **सूक्तेति** । अन्यथा दुरुक्ततैव तस्य स्यादित्याह **व्याहतं इति** ॥ १३८१ ॥

**उदितेऽनुदिते होमविधात्र्यपि न दूष्यते ।**
**अविरुद्धा त्वियं वाणी कुतो वा दूष्यतां व्रजेत् ॥ १३८२ ॥**

एकत्रैवोदितयोरपि शाखाभेदाश्रयणेन मीमासकैरविरोधो व्यवस्थाप्यते । भेदवाक्यानि तु भिन्नस्थानस्थितानि अविरुद्धानि च । अत एषा दूषण अनुचिततरमित्याह **उदित इति** ॥ १३८२ ॥

**अतो भेदश्रुतेरग्रे क एकः प्रतितिष्ठति ।**
**विरुद्धधर्मौ नीचोच्चौ जीवेशौ द्वाविमौ विना ॥ १३८३ ॥**

साहित्यमुद्रया भेदश्रुतेरप्रतिभटना रञ्जयति **अत इति**। यथा वीरभटस्याग्रे एकमात्रस्य नावस्थिति तथा भेदाख्यभीमस्याग्रे नैक्यवाक्यस्यावस्थिति ॥ जीवेशाविव कृष्णार्जुनौ तु अनुकूलावेवेति ध्वनि ॥ १३८३ ॥

**अनुवादादिरूपोऽयमित्याकारास्ति न श्रुतिः।**
**त्वद्वाक्येन ममाश्वासः कल्पनाबीजमुच्यताम्॥ १३८४ ॥**

**ऐक्योक्तेरन्यथायोगात्परं कल्प्यमिदं त्वया।**
**सा त्वद्यापि रणोद्योगादव्यावृत्तपदद्वया ॥ १३८५ ॥**

**वृत्त्यन्तरे क्षिप्तपदा मानत्रयभयार्दिता।**
**मुख्यार्थेनाकरोच्छ्रद्धामग्न्या सेचनवागिव ॥ १३८६ ॥**

किञ्चानुवादे बीज कि तथात्वप्रतिपादकश्रुति, त्वद्वाक्य, उत ऐक्यवाक्। नाद्य तदभावादित्याह नेति। न द्वितीय मम त्वयि अनाश्वासात्। न तृतीय । पदद्वयस्य सावकाशितत्वेन तदसाधकत्वात्। अन्यत्र पादद्वयेति ध्वनि । मुख्यार्थस्य 'अग्निना सिञ्चती'ति शक्ये वाक्ये इव प्रत्यक्षेण बाधादिति भाव ॥ १३८५ ॥ १३८६ ॥

**अतो यथाश्रुतो वाक्यस्यार्थो वाच्यो मनीषिभिः।**
**अविरुद्धः स्वपरतस्तथा मानान्तरादपि ॥ १३८७ ॥**

अविरुद्ध इति। ऐक्य तु स्वपरविरुद्ध सकलप्रमाणविरुद्ध चेति भाव ॥ ॥१३८७ ॥

**अविद्यमानो भेदोऽयं यद्युपास्त्यर्थमुच्यते।**
**तर्हि त्र्यक्षस्सहस्राक्षः सहस्राक्षस्त्रिलोचनः ॥ १३८८ ॥**

**कुतो न कीर्त्यते ध्यातुं तस्माद्यद्वस्तु यादृशम्।**
**तत्तथैव वदेद्वेदो ध्यातुं वा द्रष्टुमेव वा ॥ १३८९ ॥**

यदुक्त विवरणे 'श्रवणमङ्गि। प्रमाणस्य प्रमेयाद्यवगम प्रत्यव्यवधानात्। मनननिदिध्यासने तु चित्तस्य तदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुता प्रपद्येते इति। तदेव अङ्गाङ्गीभावेन समानविषयकत्वावश्यभावेऽपि निदिध्यासनापरपर्याय-ध्यानस्य अविद्यमानविषयकत्व श्रवणस्य विद्यमानविषयकत्व चाहु। भेदस्य च अविद्यमानत्व केवलमुपासनार्थ तदुक्तिर्भेदश्रुतिषु इति सङ्गिरन्ते। तदेतदपाकर्तु उपक्रमते **अविद्यमानेत्यादिभिः।** **तस्मादिति** तदुक्तमनुव्याख्याने (४-१-५) 'न किञ्चिदन्यथा ज्ञेय ध्येय वा तेन कुत्रचित्। किमु सर्वोत्तमो विष्णुरि'ति ॥ १३८९ ॥

**सत्यं वदेति योऽन्यस्याऽप्यसत्योक्तिं निवारयेत्।**
**स वेदः सर्वमर्यादारक्षको नानृतं वदेत् ॥ १३९० ॥**

**यो यो देवो यया कृत्या येन लिङ्गेन यैर्गुणैः।**
**वर्तते श्रुतिरप्येषा तं तं ब्रूते तथा तथा।**
**न व्यत्यासात्क्वचिद्वक्ति ततस्सत्यव्रतैव सा ॥ १३९१ ॥**

**नेति** 'नाविद्यमान ब्रुवते वेदा ध्यातु न वैदिका' इति प्रमाणात् ॥ १३९० ॥
॥१३९१ ॥

**किञ्चोपास्त्यै भिदोक्तिश्चेदैक्योक्तिश्च कथं न ते।**
**उपासीतेति तु पदं नोभयत्रापि दृश्यते ॥ १३९२ ॥**

**उभयत्र** 'तत्त्वमसि द्वा सुपर्णेत्यत्र ॥ १३९२ ॥

**कल्पना चेत्क्व सा न स्याद्वस्तुतस्त्वैक्यमेव ते।**
**सर्वप्रत्यक्षतो बाधादुपास्यं स्यादसिद्धि तत् ॥ १३९३ ॥**

**अनृतात्पातकं वक्ति यो वेदो न स कुत्रचित्।**
**वदेदनृतमन्यार्थमिति मन्यामहे वयम् ॥ १३९४ ॥**

उपस्थितेति पद द्वासुपर्णेति श्रुतौ कल्प्यते इति चेदैक्यवाक्येऽपि कल्प्यताम्। किञ्च ऐक्यवाक्य एव प्रमाणविरुद्धे तत् कल्पन न्याय्यमित्याह **सर्वेति** ॥ १३९३ ॥ १३९४ ॥

**न चेन्मोहार्थमनृतं वेदो वक्तीति वादिनः।**
**बौद्धाद्याः केन दूष्यन्ते भूष्यन्ते वा श्रुतेर्गुणाः ॥ १३९५ ॥**

**श्रुतेरनृततां क्वापि वदतीति वचस्तु यत्।**
**श्रुतिप्रामाण्यरक्षायै तदन्यार्थं वदेद्बुधः ॥ १३९६ ॥**

यत् 'नैद यदिदमुपासत' इति वच । तदित्यनेन सबन्ध ॥ १३९५ ॥ ॥१३९६ ॥

**अतो नेदं यदिदमित्यादिवाक्यं न बाधकम्।**
**वाच्योऽन्योर्थः श्रुतेर्गुप्त्यै त्वयापि च मयापि च ॥ १३९७ ॥**

अतः श्रुतिप्रामाण्यरक्षायै । अन्योऽर्थ इति । तदुक्त ता चन्द्रिकाया (१-१-७) श्रुतै श्रद्धालुना श्रुत्योर्विषयभेदेन तात्त्विकविषयत्वस्यैव वक्तव्यत्वाच्चेति ॥ ॥१३९७ ॥

**उपासनार्थं धनवान्किमनुश्रियते त्वया।**
**अधनो वानरः कश्चित्स्वानुभूतिं विचारय ॥ १३९८ ॥**

**विषनिर्हरणे शक्तो ध्यातव्यो गरुडस्त्वया।**
**सर्पदष्टेन किमुत काकोलूकादिपक्षिणः ॥ १३९९ ॥**

**विघ्नध्वंसाय विघ्नेशो विद्याप्त्यै शारदा त्वया।**
**मृत्युञ्जयो मृत्युजित्यै कुतस्संसेव्यते वद ॥ १४०० ॥**

लोकानुभवविरुद्धा चैषा प्रक्रियेत्याह उपासनार्थमिति ॥ १३९८ ॥ ॥१३९९ ॥ १४०० ॥

अविद्यमानस्सविता सन्ध्योपास्त्यै किमीर्यते ।
स्वामानतां स्वयं कर्तुं किमुन्मत्तवचः श्रुतिः ॥ १४०१ ॥

उन्मत्तवचः । अह मूक इति वच· ॥ १४०१ ॥ १४०२ ॥_

सत्यं वदेति या वाणी वक्ति धर्मानुशासनम् ।
असत्यं किल सा वक्ति ध्यातुं सर्वत्र सर्वदा ॥ १४०२ ॥

यत्न प्रतीके न हि स इत्थं सूत्रकृतैव हि ।
अविद्यमानस्योपास्तिर्न क्वाप्यस्तीति
साधितम् ॥ १४०३ ॥

'न प्रतीके न हि स ' इति सूत्रकृता अविद्यमानोपासना प्रतिषिद्धा चेत्याह **यत इति** ॥ १४०३ ॥

यतः प्रतीकं नैवात्मा तत आत्मत्वभावना ।
न तत्रेति हि सूत्रार्थस्तवापि च ममापि च ॥ १४०४ ॥

तस्मादविद्यमानस्य भेदस्योत्कीर्तनं श्रुतौ ।
उपासनार्थमिति यन्मतं तत्त्वविगर्हितम् ॥ १४०५ ॥

तत्रापि स अर्थ मान्य । यथाऽऽह 'न प्रतीकेष्वात्रमतिं बध्नीयात् । न हि उपासक प्रतीकानि' इति ॥ १४०४ ॥ १४०५ ॥

स्थूलोपास्तावरुन्धत्यास्ताराप्यारात्स्थितेक्ष्यताम् ।
भेदोपास्त्या त्वभेदस्य विरुद्धस्य कथं दृशिः ॥ १४०६ ॥

यदपि जल्पित सविशेषभेदोपासना निर्विशेषाभेदसाक्षात्कारस्य द्वार इति । यथाऽऽह 'निर्विशेष पर ब्रह्म साक्षात्कर्तुमनीश्वरा । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैरि'ति तदपि निराह **स्थूलेति** । तत्र समीपस्थत्वात् द्वारत्वसभवेऽपि

प्रकृते अभेदाभावात्मकस्य विरुद्धस्य द्वारत्वमसभवीत्याह **विरुद्धस्येति** ॥ ॥१४०६ ॥

**सोपासनैव तां स्थूलां किमण्वीकृत्य दर्शयेत्।**
**किं वा भिन्नकटाहस्याप्यभेदो भेदचिन्तया ॥ १४०७ ॥**

यदि पुनस्तदेव तदिति उपदेश तर्हि तथा ज्ञातवतो विरोचनस्येव सूक्ष्मज्ञानेच्छानिवृत्तिरेव स्यात्। सूक्ष्मोपदेश पश्चादनाकाक्षित एव। तज्ज्ञानस्य तज्ज्ञानहेतुत्वासभव एव। न हि उपासना अघटितघटनाशक्तिमती येन स्थूलामपि स्वसामर्थ्येनाण्वीकुर्यादित्याह **सेति**। तथा सत्यतिप्रसङ्गमाह **किमिति** ॥ १४०७ ॥

**उत्कर्षश्चेदुपास्य स्यान्मिथ्यार्थोऽपि मते तव।**
**नीचजीवोच्चताहेतुस्तादृगैक्यं न नो भिदा ॥ १४०८ ॥**

**अविद्यमानभेदस्य नोपासा तेन शोभते।**
**अविद्यमानमेवैक्यमुपास्यं स्यात्सुखेन ते ॥ १४०९ ॥**

**मते तवेति** यदाह 'क्षत्तरि खलु राजदृष्टि क्रियते। ननु राज्ञि क्षत्तृदृष्टिरिति। **तादृक्** नीचे उच्चत्वबुद्धि। **नः** अस्मदभिमता **भिदा** भेदोपासना **न** त्वदुक्तानुसारिणी। अत त्वत्प्रक्रियया ऐक्यस्यैवोपासन तेन च मिथ्यात्व युक्तमिति भाव ॥ १४०८ ॥ १४०९ ॥

**यदि ध्यानाय मिथ्यार्थं प्रथयेत्प्रथिता श्रुतिः।**
**तदा दृष्ट्यै तवैक्यं च मिथ्यार्थं न कुतो वदेत्॥ १४१० ॥**

किञ्च मिथ्याभूतभेदोपासनेन सत्यैक्यदृष्टिर्भवतीति ते मतम्। तथा माऽस्तु कार्यकारणयोर्वैरूप्यप्रसङ्गात्। अद्वितीयश्रुति· भेदमिव अविद्यमानमेवैक्यमुपदिशतीत्यस्तु। तस्यान्यतरपक्षपाताभावात्। एव च मिथ्याभेदोपासनेन मिथ्यैक्यदृष्टि· तेन च अविद्यानिवृत्ति इत्यस्तु। घटवृत्त्या घटाविद्यानिवृत्तिरिव। तथा

चोक्तवैरूप्यमपि परिहृत भवति । कृत भेदस्यैवाविद्यमानत्वग्रहणदुर्व्यवसानेनेत्याह **यदीत्यादिभिः** ॥ १४१० ॥

**घटवृत्त्येव तद्वृत्याऽप्यविद्यानाश इष्यताम् ।**
**मिथ्यार्थदृष्ट्याऽप्यानन्दः किं न तात्कालिको नृणाम् ।**
**अतस्तयाऽपि मुक्तिः स्याद्यथा प्रागुक्तयादृशिः ॥ १४११ ॥**

न च मिथ्यादृष्ट्या फलसिद्धिरदृष्टेति शङ्क्यम् । मिथ्याभूतरूप्यदृष्ट्या तात्कालिकानन्दानुभवस्यापि दर्शनात् । इत्याह **मिथ्येति** ॥ १४११ ॥

**द्वयोरेकस्य सत्यत्वे निर्वैरस्यास्तु लाघवात् ।**
**अभेदस्ते जगद्धन्ति भेदः सर्वं च रक्षति ॥ १४१२ ॥**

एवमपि अन्यतरस्य सत्यत्वपक्षपाते भेदस्य सत्यत्वमेवाङ्गीकारार्ह निर्वैरत्वात् । तत्कुत इत्यत आह **अभेद इति** ॥ १४१२ ॥

**सर्वमस्मीत्युपासीतेत्यैक्योपास्तिस्तव श्रुता ।**
**भेदक्र्च नस्तथा नाह त्वन्नयस्त्वां निहन्त्यहो ॥ १४१३ ॥**

**तव ऐक्योपास्तिः ।** त्वदभिमतैक्यस्यैवोपास्यत्वम् । **श्रुता** 'सर्वमस्मीत्युपासीत तद्व्रत' इति छान्दोग्ये । **नः भेदक्र्च** अस्मदभिमतभेदप्रतिपादिका ऋक् तु । **तथा न** श्रुता । 'सर्वं भिन्नमित्युपासीत' इत्येवरूपाया ऋच क्वाप्यभावात् । **त्वन्न्यायः** उपास्य मिथ्या इति न्याय । **त्वां निहन्ति** त्वदभिमतैक्यस्यैव मिथ्यात्व सपादयति ॥ १४१३ ॥

**किञ्चोपास्या यदि भिया तया सिद्धं समीहितम् ।**
**तं यथोपासते देवं तथैव भवतीति हि ॥ १४१४ ॥**

**श्रुत्या मुक्तावुपास्यस्य यत्सत्त्वमवधार्यते।**
**तस्मादुपास्यो भेदोऽयं मुक्तौ चासीन्निराकुलः।**
**अत एव मृषोपास्तिर्न चकास्ति श्रुतेर्मते ॥ १४१५ ॥**

किञ्चोपासनाया फलविधायिनी 'यथा यथा उपासते तथैव भवती'ति श्रुति उपासनाफलयोरेकरूपतामवधारयति। एव च भेदोपासनया सिध्यन् मोक्षकालीन भेद पारमार्थिक एव सेत्स्यतीत्याह **निराकुल इति** ॥ १४१४ ॥ १४१५ ॥

**ततोनुपास्यं नैर्गुण्यं न कदापि भवेन्नृणाम्।**
**सगुणं तु सदोपास्य स्वयं च सगुणो भवेत्॥ १४१६ ॥**

**नैर्गुण्यं** तत एव ऐक्य अनुपास्यम्। सगुणत्वे ऐक्यायोगात्। तेन प्रकृतोपसहार। अनुपास्यमिति हेतुगर्भ विशेषणम्। यस्मात् त्वया नैर्गुण्य तत एवैक्य चोपास्यतया नाङ्गीकृत तस्मात् तदुभय कदाऽपि मोक्षेऽपि न भवेत्। यथा यथोपासते तथैव भवतीति श्रुते। त्वयाङ्गीकृतभेदोपासन तु सगुणोपासनमेव। अत तदुपासनेन मोक्षेऽपि श्रुत्यनुसारेण सगुण एव भवतीत्याह **सगुण इति। सगुणः** स्वरूपभूततत्तद्योग्यानन्दादिशुभगुणाविर्भाववान् ॥ १४१६ ॥

**मुक्तौ च स्वस्य नैर्दोष्यं यदवश्यमपेक्षितम्।**
**अतोऽज्ञानक्लेशनाशजन्माद्यं न स्मरेद्धरौ।**
**इति सिद्धं ततोऽवद्य शून्योऽप्यासीद्रमापतिः॥ १४१७ ॥**

**मुक्ताविति।** 'प्रीत्या मोक्षपरत्वाच्च तात्पर्यं नैव दूषणे' इति भगवत्पादोक्ते ॥ ॥१४१७ ॥

**अनुपास्यमतत्त्वं च कुतो वक्ति श्रुतिः क्वचित्।**
**तस्मादापाततो दोषश्रुतिवद्भाति या श्रुतिः।**
**साऽप्युपास्य गुणार्थैव न दोषार्थेति चागतम्॥ १४१८ ॥**

**तस्मादापाततः इति।** 'चिन्त्या अचिन्त्याश्च तथैव दोषा श्रुताश्च नाज्ञैर्हि तथा प्रतीताः' । इति श्रुते ॥ १४१८ ॥

**उपास्त्यनर्हमैक्यं ते न मोक्षे नारिसंसृतौ ।**
**उपास्त्यभावान्मुक्तौ न नेदानीमावृतत्वतः ॥ १४१९ ॥**

उपास्त्यनर्हत्वेन उपास्त्यभावात्, उपासनाफलयोरेकरूपताया स्थितेरैक्य मुक्तौ न एव आवृतत्वात्ससारेऽपि नेति त्वद्रीत्यैव कदाऽपि ऐक्यस्य अनवस्थितिरेवेत्याह **उपास्तीति** ॥ १४१९ ॥

**तस्मादुपास्यं सगुणं ब्रह्मैवासीद्धि निर्मलम् ।**
**मुक्तिदत्वाद्विमुक्तिश्च तस्यासादृश्यमित्यपि ॥ १४२० ॥**

**तथैवेति वदन्ती सा श्रुतिराह ततोऽपि मे ।**
**भिदैव सुस्था ब्रह्मैक्यं पदाहतमभूत्तव ॥ १४२१ ॥**

निर्मलमित्यनेन शबलस्य व्यवच्छेद' ॥ १४२० ॥ १४२१ ॥

**उपास्योपासकत्वस्य मुक्तावप्यनुवर्तनम् ।**
**तथैवेति हि सर्वस्याप्यवधृत्या श्रुतिर्जगौ ॥ १४२२ ॥**

'तथैव भवती'ति श्रुतौ सादृश्योक्त्या मुक्तावपि स्वामिभृत्यभावेन उपास्योपासकभावोऽनुवर्तते इति एव सादृश्य, एव देवाना बहुगुणै ब्रह्मणा त्वखिलैरित्येव उपासनाया तारतम्येन ससारिष्वानन्दतारतम्यस्येव 'श्रोत्रियस्य चाकामहतस्य' इत्युक्तदिशा तत्रापि मुक्तौ तारतम्य, इत्येव प्रमाणाविरुद्ध सादृश्य ऊहनीयम् । तदेतदाह **सर्वस्येति** ॥ १४२२ ॥

**यतस्सारूप्यमोक्षोऽयं सर्वोपास्ति कृतां श्रुतः ।**
**अतस्सालोक्यसामीप्यसायुज्येषु च स ध्रुवः ॥ १४२३ ॥**

एव 'उपास्ते' इति सामान्यप्रयोगेण चतुर्विधमोक्षभाजामपि 'तथैव भवति' इत्युक्त पूर्वोक्त इत्थभाव साधारण इति ज्ञापितो भवतीत्याह **यत इति** ॥ १४२३ ॥

**श्रुतिरेषा बलवती सर्वश्रुत्युक्तसंपदम्।**
**स्वज्ञातिरक्षणोद्युक्तानापहर्तुं विमुञ्चति ॥ १४२४ ॥**

**बल्वती** सावधारणेन फलकथनरूपतात्पर्यलिङ्गवत्त्वेन च । सर्वा या श्रुतय उपासने फले च तारतम्य अभिधात्र्य ताभिरुक्ता साधनफलयोस्तरतमभावेन सदृशरूपता सपद **अपहर्तुं** मिथ्यार्थपरतया अन्यथयितु तदुक्त भाष्ये (३,३,३) 'ज्ञान चोपासन चैव मुक्तावानन्द एव च । यथाधिकार देवाना भवत्येवोत्तरोत्तर' इति ॥ ॥१४२४ ॥

**उपासते हि यदिदं नेदं ब्रह्मेति तु श्रुतिः।**
**उपास्यमानप्रतिमा नैव ब्रह्मेति शंसति ॥ १४२५ ॥**

'यन्मनसा न मनुते येनाऽऽहुर्मनो मतम्। तदेव ब्रह्मत्व विद्धि नेद यदिदमुपासते' इति मा प्रति शङ्करवाक्यम्। तत्र उपास्यस्य मिथ्यात्व, ततश्च उपासनाया मिथ्याभूतार्थविषयकत्व मुखत प्रतीयते। तन्निराह **उपासते इत्यादिभिः।** **प्रतिमा** मानसवासनापरिणतवस्त्वित्यर्थ । सन्निधानात् ब्रह्मप्रतिबिम्बभूतम्। **नैव ब्रह्मेति** ॐ तथाऽन्यत्प्रतिषेधात् ३ २ ३७ इति सूत्रे प्रतिषेधात् ॥ १४२५ ॥

**ब्रह्मणस्सन्निधानाच्च तदुपास्तिर्दिदृक्षताम्।**
**राजद्वारोपास्तितोऽपि राज्ञः स्याद्धि प्रसन्नता ॥ १४२६ ॥**

एव तर्हि ब्रह्मसाक्षात्कारार्थिन कुतस्तदुपासते इत्यतो ब्रह्मानुग्रहद्वारा तद्दर्शनोपायत्वादित्याह **ब्रह्मण इति।** तदुक्त 'ब्रह्मैव प्रतिबिम्बे यदतस्तेषा फलप्रदम्' इति। तत्र लौकिकदृष्टान्त **राजेति** ॥ १४२६ ॥

**उपासते सदा भोगैर्नरा यदुदरंभराः ।**
**जीवरूपमिदं ब्रह्म नेत्यर्थं चाह सा श्रुतिः ॥ १४२७ ॥**

श्रुते· अनुगुणमर्थान्तरमाह **उपासत इति भोगैः** फलपुष्पादिसमर्पणै । यत् राजादिक जीवचैतन्यम् । उदरभरा इति निन्दनेन मा गृध कस्य चिद्धन इति निषेधो ज्ञाप्यते । तत् ब्रह्म न ॥ १४२७ ॥

**तव त्वतिविरुद्धस्योपास्त्यैव स्यात्कथं फलम् ।**
**महाविरुद्धमग्न्यर्थी किमम्बुमथनं चरेत् ।**
**किं वा शुक्तेरुपास्त्यैव रूप्यप्राप्त्या धनी**
**भवान् ॥ १४२८ ॥**

निर्विशेषसाक्षात्कारस्य सविशेषोपासन द्वारमिति परप्रक्रियाऽत्यन्त विरुद्धा इति सदृष्टान्तमाह **अग्नीति शुक्तेरिति च** ॥ १४२८ ॥

**किञ्च शाखाग्रचन्द्रैक्यं ध्यातव्यं किल ते मते ।**
**स्थूलैवारुन्धतीत्वेन ध्येया सूक्ष्मत्वसिद्धये ।**
**एवं चैक्यमुपास्यं वा भेदो वाभूद्विचारय ॥ १४२९ ॥**

स्थूलारुन्धतीदृष्टान्त त्वत्प्रतिकूल एव । यथा तत्र स्थूलताराया अरुन्धतीनक्षत्रस्यैक्य चिन्त्यते तथा अत्रापि ऐक्यमेव उपासनाविषय इत्यापातादित्याह **किं चेति** ॥ १४२९ ॥

**स्थूलभास्वरताराया ध्याने सूक्ष्माल्पभास्वरा ।**
**तारैव दृश्यते व्योम नीरूपं न हि दृश्यते ॥ १४३० ॥**

**एवं च सगुणोपास्त्या निर्गुणेक्षोपमानसा ।**
**यद्ध्येयस्सगुणोऽत्रापि प्राप्योऽपि स गुणो**
**यतः ॥ १४३१ ॥**

स्थूलताराया सूक्ष्मनक्षत्रस्य चोभयेषा शुक्लभास्वर रूपमस्तीति तद्दर्शनयो द्वारद्वारिभाव इति वक्तु युक्तम्। एव सगुणोपासन सगुणदर्शनस्यैव द्वार भवेत्। नत्वेव निर्गुणस्येत्याह **स्थूलेति** ॥ १४३० ॥ १४३१ ॥

**अस्माकं तु मनोरूपप्रतिमास्थूलभास्वरा।**
**उपास्यमाना स्तान्तस्थां ज्ञानानन्दमयप्रभाम् ॥ १४३२ ॥**

**अतिसूक्ष्मां हरेर्मूर्तिं दर्शयेदिति वादिनाम्।**
**तवोपमैवानुपमाबलमासीद्विवेचने ॥ १४३३ ॥**

मन्मते नैष दोष इत्याह **अस्माकमिति** अनुपमेति उद्देश्यभूतोपमाया विशेषणम्। न बलमिति विधेयस्य। तेन न स्त्रीलिङ्गानुपपत्ति ॥ १४३२ ॥ ॥१४३३ ॥

**अरणीस्थानलप्राप्तिररण्योर्मथने यथा।**
**तथानुकूलान्यसेवाऽप्यन्यप्राप्त्यै भवेन्मम।**
**तुहिनानुसृतिः किं स्याद्दहनप्राप्तये वद ॥ १४३४ ॥**

अनुकूलस्यैव द्वारभाव ननु प्रतिकूलस्येत्युभयत्र दृष्टान्तमाह **अरणीति तुहिनेति च** ॥ १४३४ ॥

**गुरोश्चरणकैङ्कर्यं गुरुकैङ्कर्यमेव यत्।**
**अतस्तत्प्रतिमाध्यानमपि तद्ध्यानमेव नः ॥ १४३५ ॥**

**तद्ध्यानमेव** तस्य तत्र सन्निहितत्वेन फलप्रदत्वादिति भाव ॥ १४३५ ॥

**एवं चात्मैव सेव्योऽभूद्ध्यातव्योऽभूत्स एव हि।**
**श्रुतयः स्मृतयस्तस्मादुपास्यं प्राहुरीश्वरम् ॥ १४३६ ॥**

**श्रुतयः स्मृतयश्चेति** "आत्मानमेव लोकमुपासीत" "नमस्यन्तश्च मा भक्त्या नित्ययुक्ता उपासत" इत्यादयः ॥ १४३६ ॥

**अधिष्ठानतया तत्र ह्युपास्यं यदमुख्यतः ।**
**न तद्ब्रह्मेति च प्राहुर्मुख्योपास्यं च तं जगुः ॥ १४३७ ॥**

'न प्रतीके न हि स' इति सूत्रोक्तमाह **अधिष्ठानतयेति**। तथा च नाम्नि ब्रह्मेत्युपासीत इत्येवार्थ ॥ १४३७ ॥

**वस्तुतस्सूक्ष्मतारायास्समीपस्थेति लौकिकः ।**
**स्थूलां तारां दर्शयन्ति तद्भावं तत्र को वदेत् ॥ १४३८ ॥**

द्वारमपि द्वारत्वेनैवोपदिशाति न तु तदेव तदिति । अतो मिथ्योपास्तेर्न कोऽपि दृष्टान्त इत्याह **वस्तुतस्त्विति** ॥ १४३८ ॥

**शाखाग्रदेशे नेन्दोश्च स्यादादेशो विवेकिनाम् ।**
**शाखाग्रैक्यं तु को वक्ति मिथ्योपास्तेः क्व**
**तेऽस्ति तत् ॥ १४३९ ॥**

**क्वेति** धनिकाना इन्द्रचन्द्राद्युक्तिस्तु प्रशासामात्र न तु द्वारतया तवैक्याभिप्रायेण इति भाव ॥ १४३९ ॥

**किञ्चैवमप्युपास्येऽस्मिन्भेदे स्याद्ब्रह्मणोऽन्यता ।**
**मिथ्यात्वं तु कुतो हेतोरघटो नास्ति किं पटः ॥ १४४० ॥**

अस्तु वा भेद उपास्य भिन्नस्य मिथ्यात्व कुत । अघट पट घटाद्भिन्न इति ज्ञात इत्येतावता पटस्य मिथ्यात्वमित्याह **किञ्चेति** ॥ १४४० ॥

**उपासते तु यदिदं नेदं ब्रह्मेति तु श्रुतिः ।**
**यदुपास्यं न तद्ब्रह्मेत्याह तन्नास्तिता कुतः ॥ १४४१ ॥**

तथा च श्रुत्या उपास्यस्य ब्रह्मभिन्नत्वमेवायाति न मिथ्यात्वमित्याह **उपासत इति** ॥ १४४१ ॥

**न चेत्तद्विदितादन्यदेवेति श्रुत्युपक्रमात्।**
**ज्ञेयं च ब्रह्म नेति स्तां ज्ञानोपास्ती मृषार्थयोः ॥ १४४२ ॥**

नेद यदिद उपासते इत्यत्र उपास्याद्भिन्नत्वोक्तिमात्रेण यदि उपास्य मिथ्येति ब्रूषे तर्हि 'अन्यदेव विदितात्' इति तत्रैव ब्रह्मण ज्ञेयादन्यत्वोक्त्या ज्ञेयस्यापि मिथ्यात्वप्राप्त्या ज्ञानोपासने उभे अपि मिथ्याभूतार्थविषयके स्यातामित्याह **न चेत्** ॥ ॥१४४२ ॥

**सामस्त्याज्ञानमात्रेण ज्ञेयादन्यद्यदीष्यते ।**
**तर्ह्युपास्यादन्यदस्तु समस्तोपास्त्यशक्तितः ॥ १४४३ ॥**

यदि अविदितात् इत्यत प्राक् साकल्येनेति पद अध्याहृत्य साकल्येनावेद्य ब्रह्मेत्यर्थो वर्ण्यते तर्हि उपासते इत्यत पूर्वमपि तत्पदाध्याहारेण साकल्येनोपास्य नेत्येवभावो वर्ण्यता इत्याह **समस्तोपास्त्यशक्तित इति**। सामस्त्येन ब्रह्मोपास्तावन्येषामशक्तित इत्यर्थ ॥ १४४३ ॥

**आत्मा वेत्येकवाक्योक्ते ज्ञानोपास्ती कथं द्वयोः ।**
**अनन्तोपास्ति विधयो बाध्यं तेनोक्तिमात्रतः ॥ १४४४ ॥**

आत्मेति 'आत्मा वाऽरे द्रष्टव्य· श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्येकस्मिन्वाक्ये दर्शन निदिध्यासन चेति ज्ञानोपास्ती विधीयेते। तत्र एकस्यैव आत्मशब्दवाच्यस्य ज्ञेयत्वे सत्यत्व उपास्यत्वे तु मिथ्यात्वं इति विरुद्ध द्वैरूप्य न घटते। अत अनन्ताना उपासनाविधायकवाक्याना त्वदुक्तिमात्रेण मिथ्योपासनार्थकत्व न युक्तमिति भाव ॥ १४४४ ॥

**अतः श्रुतिस्मृतिशतैर्विहितोऽपास्ति गौरवात्।**
**अन्यार्थमनुकूलं वा भजेदर्थमियं श्रुतिः ॥ १४४५ ॥**

**इयं** श्रुति नेद यदिदमुपासते इति श्रुति· ॥ १४४५ ॥

**साक्षिसिद्धमिदं जीव ते रूपं ब्रह्म नो पते ।**
**यदा स तत्परं ब्रह्मेत्याह सेयं श्रुतिः किल ॥ १४४६ ॥**

**तस्माज्जीवेशभेदस्य साधिकेयमभूच्छ्रुतिः ।**
**उपास्यस्य तु मिथ्यात्वं निर्निमित्तमभूत्तव ॥ १४४७ ॥**

तलवकारभाष्योक्त श्रुतेरर्थान्तरमाह **साक्षीति**। हे जीव **इद** दु खित्वबद्धत्वादिना साक्षिप्रमित जीवचैतन्य ब्रह्म न। किन्तु **यत् ते उप आस** यत् **'सयुजौ'** इति श्रुत्युक्तदिशा तव समीपे एकस्थानस्थित आस्ते तदेव पर ब्रह्मेति ॥ ॥१४४६ ॥ १४४७ ॥

**तृणं दग्धुं न शक्तोऽग्निर्मरुच्चालयितुं किल ।**
**गतागतोक्तिप्रत्युक्तिव्यापारैश्चेतनौ हि तौ ।**
**अशक्तमेवं चैतन्यं देवानामस्ति तद्धृदि ॥ १४४८ ॥**

**विलक्षणतमं ह्येतच्चैतन्यद्वितयं यदा ।**
**सुराणामपि हृद्यस्ति नराणां हृदि का कथा ॥ १४४९ ॥**

**विरुद्धार्थक्रियाकारि वैलक्षण्यमिदं तयोः ।**
**कथं ह्युपास्त्या मिथ्या स्यात्किमुपास्ति-**
**र्विषाङ्कुरः ॥ १४५० ॥**

तलवकारोपनिषद्युक्ता कथा जीवब्रह्मभेद सस्थापयतीत्याह । **अग्निरित्यादिना**। अग्निमरुदादिदेवा अपि तत्प्रेरणा विना तृणदाहचालनादावप्यशक्ता 'यक्षस्य परमात्मन अन्तर्यामिण प्रभावेणैव तैरसुरा पराजिता इति स्पष्ट तत्र वर्ण्यते । एव श्रुतियुक्तिसिद्धो भेद नोपास्यत्वमात्रेण बाधमर्हतीति भाव ॥ ॥१४४८ ॥ १४४९ ॥ १४५० ॥

**यथा यथा ज्ञानिनस्तमधीश्वरमुपासते ।**
**वस्तुस्थित्या तथैवासौ भवतीशो न चान्यथा ।। १४५१ ।।**

**इत्येकवचनान्तस्य भवतीत्यस्य सत्त्वतः ।**
**अर्थोऽयमपि च श्रौतो मिथ्योपास्तिस्ततोऽपि न ।। १४५२ ।।**

श्रुतेरर्थान्तर वदन् उपास्यस्य सत्यत्व स्थिरीकरोति **यथेति**। उपासते इति बहुवचनस्य भवति इत्येकवचनस्य चैककर्तृत्वेऽनुपपत्त्या उपासते इत्यत्र त इति भवतीत्यत्र असौ इति पद अध्याहृत्यार्थो वर्णनीय इत्याह **तमिति असाविति च**। **तथैव** उपासनानुसारेण भिन्न सविशेष एव न तु पुन अभिन्नो निर्विशेषश्चेत्याह **वस्तुस्थित्या इति** ।।१४५१ ।। १४५२ ।।

**प्राग्विभक्तेर्विपरिणत्यार्थोऽत्र तु यथा श्रुतः ।**
**त्रयोर्थास्सर्ववेदेष्वित्यस्ति यद्व्यासशासनम् ।। १४५३ ।।**

**त्रयोऽर्थाः इति** 'त्र्यर्थता श्रुतिषु वित्त' इति वचनात् ।। १४५३ ।।

**अहो न चरमन्त्येते तथैवात्महनश्च ते ।**
**उपासते ये त्वसत्यमित्याह श्रुतिगीतिका ।। १४५४ ।।**

**अतो विनिन्दितामेतां कथं वक्ति श्रुतिस्सती ।**
**तेनोपास्यं समस्तं च सत्यमित्यागतं बलात् ।। १४५५ ।।**

'न च रमन्त्यहो असदुपासनया आत्महनो जना' इति श्रुतिगीतिकाया मिथ्योपासनस्य निन्दितत्वाच्च न पराभिमत श्रुत्यर्थ इत्याह **अहो इति** ।। १४५४ ।। ।।१४५५ ।।

**ध्यानाय मननं तस्मै श्रवणं दर्शनाय तत् ।**
**इति तेऽपि मतं तस्माद्दृष्टिध्यानेन भिन्नयोः ।। १४५६ ।।**

**न चेत्तवाश्रुतध्यानमश्नुते क्षणमेव वा ।**
**आपतेत द्वयं चापि न युक्तं नापि ते मतम् ॥ १४५७ ॥**

अपसिद्धान्त च परस्याह **ध्यानायेति** । तस्मै **मननाय** 'श्रवणज ज्ञान पूर्ववृत्त' इति सुधोक्ते । **तत्** श्रवण दर्शनायेति ते मत इत्यन्वय । स्वमते शब्दस्यापरोक्षज्ञानहेतुताया दूषितत्वात् (न्याया ३ । ९ । प ६३५) स्वमते तु निदिध्यासनमेवाङ्गि श्रवण तु तदङ्गमित्यन्यदेतत् । श्रवणध्यानदर्शनाना समानविषयकत्व हि परस्य सिद्धान्त । **न चेत्** ध्यानापरोक्षयो· समानविषयकत्व न चेत् ॥ १४५६ ॥ १४५७ ॥

**श्रवणं करणं तत्त्वसाक्षात्कारश्च तत्फलम् ।**
**श्रवणादेव च ध्यानं तत्रान्योऽर्थः कुतोऽपतत् ॥ १४५८ ॥**

**अन्यः अर्थः** श्रवणाविषय· मिथ्याभूत ॥ १४५८ ॥

**किञ्चासंभावनोच्छित्त्यै मननं किल ते मते ।**
**ध्यानं च विपरीतार्थभावनोच्छित्तये किल ॥ १४५९ ॥**

**तद्ध्यानं विपरीतार्थविषयं चेत्कथं ततः ।**
**विपरीतार्थविषयभावनोच्छिद्यते वद ॥ १४६० ॥**

**विपरीतेति** । श्रवणाद्विपरीतेत्यर्थ ॥ १४५९ ॥ १४६० ॥

**न चेदुन्मत्तवार्ता स्याच्छास्त्रवार्ता तवाखिला ॥ १४६१ ॥**

**उन्मत्तवार्ता** पूर्वोत्तरविरोधात् सकलप्रमाणविरोधादपसिद्धान्ताच्च ॥ ॥१४६१ ॥

**तन्निर्गुणार्थश्रवणे ध्यानं निर्गुणगोचरम् ।**
**त्वयापि सर्वथा वाच्यं न चेदङ्गाङ्गितैव न ॥ १४६२ ॥**

अङ्गाङ्गिता त्वन्मते श्रवणस्याङ्गिता ध्यानस्याङ्गता । वस्तुगत्या वैपरीत्यम् । सर्वथा समानविषयकत्वमावश्यकमेवेति भाव ॥ १४६२ ॥

**यतः फलैक्ये सति सा बोध्यैक्ये च फलैकता ।**
**सत्यार्थश्रवणे तस्मात्सत्यार्थस्यैव भावना ॥ १४६३ ॥**

**मिथ्यार्थश्रवणे तु स्यान्मिथ्यार्थस्यापि भावना ।**
**तस्मादुपास्यो भेदोऽस्तु सत्योऽप्यस्तु श्रुतीरितः ॥ १४६४ ॥**

फल त्वन्मते निर्विशेषसाक्षात्कार । बोध्य निर्विशेषम् । तथा च श्रवणस्य तद्विषयकत्वे ध्यानस्यापि भेदोपासन त्वन्मते दुर्घटम् । श्रवणस्य मिथ्यार्थत्व व्यापक, तच्च त्वया नाङ्गीकृतम् । तच्च व्यावर्तमान ध्यानस्य मिथ्यार्थकत्व व्यावर्त्य सत्यार्थकत्व व्यवस्थापयति । एव च भेदस्योपास्यत्वेऽपि सत्यत्वमेव सिद्ध्यतीत्याह **तस्मादिति** ॥ १४६३ ॥ १४६४ ॥

**उपास्तेरेव बलतो मिथ्यात्वं तु तवापि न ।**
**अतः पूर्वोक्तवेदर्चोऽप्यापातार्थो न यौक्तिकः ॥ १४६५ ॥**

ऋक् 'नेद मदिद' इत्यादिका ॥ १४६५ ॥

**योग्यार्थे तां निनीषोस्ते गुरुरासीज्जगद्गुरुः ।**
**अतो भेदश्रुतेरर्थं न भेत्तुं कोऽपि शक्नुयात् ॥ १४६६ ॥**

ते गुरुः इति तेन त्वया अकामेनापि मद्भाष्यकृदुक्त अर्थ एव उपेय इति भाव ॥ १४६६ ॥

**पदद्वयाविरुद्धोऽयं श्रुत्यर्थः केन चाल्यते ।**
**तत्पदाभ्यां विरुद्धं तु तदैक्यं चलनोचितम् ॥ १४६७ ॥**

तत्त्वमसीति वाक्यस्य भेदे निरवकाशत्व, ऐक्ये तु सादृश्यादिपरत्वेन सावकाशत्व इत्याह **पदद्वयेति** ॥ १४६७ ॥

**पश्येज्जीवो यदा रुग्मवर्णं कर्तारमीश्वरम् ।**
**पुरुषं ब्रह्मपितरं तदा त्यक्त्वा तमोऽञ्जनम् ।**
**विधूय सकलं कर्म परं साम्यमुपैति च ॥ १४६८ ॥**

'यदा पश्य· पश्यते रुक्मवर्ण कर्तारमीश पुरुष ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जन परम साम्यमुपैति' इति श्रुतिं अर्थतोऽनुवदति **पश्येदिति** ॥ १४६८ ॥

**इति जीवेशभेदस्य साक्षात्कारेण हि श्रुतिः ।**
**परमं मोक्षमाचष्ट मुक्तस्यापि भिन्नताम् ॥ १४६९ ॥**

**न ह्यञ्जनाख्यतमसः कर्मणोः पुण्यपापयोः ।**
**क्षयः परमसाम्यं च महामोक्षमृते भवेत् ॥ १४७० ॥**

अनया श्रुत्या सिद्धान्तसकलप्रमेयसिद्धिप्रकारमाह इतीत्यादिभि । **भेदस्येति** । कर्तृत्व-ईशत्व- पुरुषत्वलक्षणपूर्णत्व-चतुर्मुखयोनित्वादिविरुद्ध-धर्मकथनेनेति भावः । मोक्षस्य परमत्वसिद्धिप्रकारमाह **न हीति अञ्जनं** अविद्याख्य तम । पुण्यपापविधूनने विशेष 'तदधिगम'नयभाष्यटीकाऽनुसारेणावसेय ॥ ॥१४७० ॥

**साकारस्य सवर्णस्य कर्तुस्सर्वेश्वरस्य च ।**
**साक्षात्कारोऽस्य भेदादेः किं न**
**साक्षात्कृतिर्वद ॥ १४७१ ॥**

**अस्य** भिन्नस्य । **भेदादेः** आदिपदेन अकारादिभेदकधर्माणा ग्रहणम् । **किं न इति** । तेषा तत्स्वरूपत्वादिति भाव ॥ १४७१ ॥

**यदा तदेतिशब्दाभ्यां पारंपर्यनिषेधनात् ।**
**साक्षान्मोक्षोपयोगित्वं ज्ञानस्यास्य निगद्यते ॥ १४७२ ॥**

साक्षादिति । 'स्वोदयात्फलद ज्ञान' इत्युक्ते· । प्रसादस्तु ईश्वरगत न अधिकारिनिष्ठ इति भाव ॥ १४७२ ॥

**अतस्साकारतावर्णः कर्तृत्वेशत्वपूर्वकः ।**
**महिमा ब्रह्मपितृता भिदा चाबाध्यतामगात् ॥ १४७३ ॥**

**यतस्साम्यं द्वयोरेव ततो मोक्षेऽपि भिन्नता ॥ १४७४ ॥**

अतः मोक्षोपयोगिज्ञानविषयत्वात् ॥ १४७३ ॥ १४७४ ॥

**एवं च तत्त्ववाद्युक्ततत्त्वसर्वस्वमेव हि ।**
**तत्त्वमासीदतत्त्वस्य दर्शनान्न हि मुक्तता ।**
**अतोऽपि शङ्का पङ्कस्य नावकाशोऽत्र कश्चन ॥ १४७५ ॥**

अत्र भेदे तत्पारमार्थ्ये च ॥ १४७५ ॥

**भिन्नाभिन्नादिकल्पोक्तदूषणैर्भेददूषणम् ।**
**जात्युत्तरं हि तत्सर्वं यत्खण्डनकृताकृतम् ।**
**व्यावहारिकभेदस्याप्यपलापप्रसङ्गतः ॥ १४७६ ॥**

पूर्वं अभेदपक्षेऽपि समानः प्रसङ्ग इत्युक्तम् । इदानी व्यावहारिकभेदपक्षेऽपि इत्युक्ते· पूर्वोक्ताद्भेद ॥ १४७६ ॥

**भेदभेदेऽनवस्थानमभेदे चैकशेषता ।**
**भेदाभेदे विरोधश्चेत्येतद्धि तव दूषणम् ॥ १४७७ ॥**

तद्दूषणप्रकार खण्डनसौकर्यायानुवदति **भेदभेदे इति** तदुक्त वादावल्या 'तत्तद्भेदस्य भेदान्तरभेदेऽनवस्थानादि'ति । **एकशेषता**। इत्युपलक्षणम् ।

सबन्धितया प्रतीति अपर्यायशब्दवाच्यत्व इत्यादिसकलभेदव्यवहारानुपपत्तयो ग्राह्या । अत चतुर्थप्रकारस्य अनिर्वचनीयत्वस्य सिद्धिरिति परस्य हृदयम् ॥ ॥१४७७ ॥

**आत्माश्रयानवस्थाद्यैर्दोषैर्भेदस्य दूषणे ।**
**व्यावहारिकताऽप्यस्य कथं स्याद्या मता तव ॥ १४७८ ॥**

यदि भेददर्शन वास्तव स्यात् तर्हि अन्योन्याश्रयादिक स्यात् इति खलु आपादनीयम् । तत्र च व्याप्तिवैधुर्यमिति वादावल्युक्तदूषणे स्थिते तस्य स्फुटत्वाद्दोषान्तरमाह । **व्यावहारिकतेति** । तथा च प्रतितर्कपराहति ॥ १४७८ ॥

**किं घटः पटहेतुस्ते पटो वा घटहेतुकः ।**
**किं स्वयं स्वोपरिघटः किं स्याद्घटपरंपरा ॥ १४७९ ॥**

**तद्व्यावहारिकेऽप्यर्थे दोषा न स्युरिमे कथम् ॥ १४८० ॥**

**अतस्ते व्यवहाराय समाधानं हि यद्भवेत् ।**
**तदेव पारमार्थ्येऽपि समाधानं भविष्यति ॥ १४८१ ॥**

व्यावहारिकत्वेऽपि उक्तदोषाणा न परिहार इत्याह । **किं घटः इति** । उत्पत्तौ दोषमुक्त्वा प्रवृत्तावप्याह **किं स्वयमिति** ॥ १४८० ॥ १४८१ ॥

**किञ्च ते परमार्थैक्ये विकल्पो दूषणानि च ।**
**भवन्त्येतानि सर्वाणि ततस्तच्च मरिष्यति ॥ १४८२ ॥**

स्वाभिलषितस्याभेदस्याप्यसिद्धेरिति उक्त स्मारयति इद चोपलक्षणम् । ब्रह्मण्यपि प्रपञ्चाद्भिन्न अभिन्न वा इत्यादि विकल्पदोषा समा एवेति वादावल्युक्त च ग्राह्यम् । ततश्च ब्रह्मापि अनिर्वचनीय स्यादिति ॥ १४८२ ॥

**मृतसञ्जीवनं तत्र यत्स्याद्भेदेऽपि तद्भवेत् ।**
**अतो यत्किञ्चिदेवैतदिति सर्वं मनोरमम् ॥ १४८३ ॥**

यत् विशेष । यत्किञ्चिदिति तदुक्त उदयनेन 'एतामेव जातिमवष्टभ्य शुष्कतर्कवादिनम् । बौद्धचार्वाकवेदान्तिना बालव्यामोहहेतव कण्ठकोलाहला' इति ॥ १४८३ ॥

**या श्रुतिर्नेति नेत्यात्मा गृह्य इत्यादिरूपिणी ।**
**साऽप्यात्मानं जडाज्जीवाद्भिन्नं वर्णयति स्फुटम् ॥ १४८४ ॥**

**जडं नात्मा जीवचिच्च नात्मेत्यर्थो भवेन्मम ।**
**तव द्विधा निषेधस्याभावेन द्वौ नञौ वृथा ॥ १४८५ ॥**

नेति नेति इति द्विरभिधानसार्थक्याय योग्यमध्याहारमाह **जडं न जीवचिच्च नेति** । परार्थे तु तद्वैयर्थ्यमेवेत्याह **तवेति** ॥ १४८५ ॥

**यथा घटो नेति पटो गृह्य इत्युदिते सति ।**
**घटादत्यन्तभिन्नोऽसौ पटस्सिद्ध्येन्न चापरम् ॥ १४८६ ॥**

अनेन भेदस्यैव सिद्धिर्न मिथ्यात्वमित्यत्र दृष्टान्तमाह **यथेति** ॥ १४८६ ॥

**तथा जडजगन्नेति गृह्यो जीवजगच्च न ।**
**इत्यात्मा गृह्य इत्युक्ते कथमत्यन्तभिन्नता ।**
**जडजीवाख्यजगतो न सिद्ध्येत्परमात्मनः ॥ १४८७ ॥**

**द्विर्निषेधबलाज्जीवजडयोश्च ग्रहो ध्रुवः ।**
**मिथ्यात्वाशानुपूर्वोक्तिनिदर्शनपराहता ॥ १४८८ ॥**

प्रकृते सङ्गमयति **तथेति** ॥ १४८७ ॥ १४८८ ॥

**अन्यमीशमिति प्राह जीवादन्यमधीश्वरम् ।**
**श्रुतिः प्राग्द्वासुपर्णेति प्रोक्तवाक्यसमाख्यया ॥ १४८९ ॥**

**घटकुड्यवदन्यत्वे साम्यं स्यात्तेन तं श्रुतिः ।**
**ईशमाह गुणाख्यं च महिमानं पुनर्जगौ ॥ १४९० ॥**

'जुष्ट यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक' इति श्रुतिं भेदे प्रमाणयति **अन्यमिति** ॥ १४८९ ॥ १४९० ॥

**त्रितयज्ञानतो जीवो वीतशोको भवेत्किल ।**
**इतिशब्देन तज्ज्ञानं सप्रकारकमाह च ॥ १४९१ ॥**

**त्रितय** अन्य ईश महिमान चेत्येतत्रितय **सप्रकारकमिति ।** निष्प्रकारकज्ञानस्यालीकत्वादिति भाव ॥ १४९१ ॥

**साक्षान्मोक्षप्रदत्वोक्त्या तत्त्वमासीदिदं त्रयम् ।**
**तस्मादभेदस्साम्यं च नैर्गुण्यं च निराकृतम् ॥ १४९२ ॥**

**साम्यं** अत्यन्तसाम्यम् । परम साम्यमित्यत्रोक्त साम्य च जरामरणादिराहित्येनैवेति सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च इति गीतायामेव विवरणात् ॥ १४९२ ॥

**वीतशोक इति प्राह यतस्स ज्ञानिनः फलम् ।**
**ततो जीवेशभेदेऽस्यास्तात्पर्यं चावगम्यते ॥ १४९३ ॥**

**तात्पर्यं** फलरूपतल्लिङ्गोक्त्या ॥ १४९३ ॥

**एष सर्वेश्वर इति काचिद्वक्ति तमीश्वरम् ।**
**स सर्वस्य वशी सर्वस्येशान इति चापरा ।**
**अतस्सयुक्तिकः स्वामिभृत्यभेदः श्रुतौ श्रुतः ॥ १४९४ ॥**

**सयुक्तिकः** इति तत्रैव वाक्यशेषे सर्वज्ञत्वसर्ववशित्वादियुक्तीनामुक्तत्वादिति भावः ॥ १४९४ ॥

**य आत्मनि सदा तिष्ठन्नात्मनोऽन्तर इत्यपि।**
**तेऽन्तर्याम्येष इत्याद्याः श्रुतयस्सूत्रसूचिताः।**
**जगुर्जीवेशयोर्भेदं शतशोथ सहस्रशः ॥ १४९५ ॥**

'य आत्मनि तिष्ठन्' इति श्रुति अद्वैतिभाष्येऽपि भेदपरत्वेनाङ्गीकृता (भेपब्रसू प४७) ॥ १४९५ ॥

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः।**
**इति गीतासु भेदोऽयं सयुक्तिकमुदाहृतः ॥ १४९६ ॥**

**सयुक्तिकमिति।** प्रवेश-भरणकर्तृत्वादि भेदकधर्मोक्ते ॥ १४९६ ॥

**विद्यात्मनि भिदा बोध इति भागवते हरिः।**
**विद्या केति पुरा पृष्टो भिदा बोधं**
**किलोक्तवान् ॥ १४९७ ॥**

**आत्मनि** जीवसमुदायधर्मिक· परमात्मप्रतियोगिक·। यद्वा आत्मशब्देन परमात्मग्रहणे तद्धर्मिको वा भेद ग्राह्य। भिदा अबोध इति पदच्छेदे प्रश्नोत्तरयो स्फुटाऽसङ्गतिरित्याह **क इति** ॥ १४९७ ॥

**चेतनेष्वात्मसु भिदा जात्येकवचनादियम्।**
**अबोध इति च च्छेदे बोधच्छेदो भविष्यति।**
**बोधाभावं हि को बोद्धा विद्यां बुद्धिमते**
**वदेत् ॥ १४९८ ॥**

**राजा तत्पुरुषो मेने नान्यस्य पदसेवनम्।**
**बहुव्रीहेस्तु चोरस्य स्याच्चास्यान्यानुयायिता ॥ १४९९ ॥**

बहुव्रीहिस्तु जघन्यत्वात् सभवति तत्पुरुषे नाश्रयणीय इति साहित्यमुद्रयाऽऽह **राजेति। नान्यस्येति।** स्वपदमात्रमात्रप्रधानः। **चोरस्य** चौर्येण बहुव्रीहिमत ॥ १४९९ ॥

**श्रेष्ठं पदं समारूढः कथं नीचो बुभूषति।**
**शङ्कास्कन्दितमूर्तिस्सा विद्या नोर्ध्वं यियासति ॥ १५०० ॥**

दम इन्द्रियनिग्रह इत्यादिपूर्ववाक्येषु उद्देश्यवाचकपदाना पूर्व पाठात्तत्रायानुरोधेन विद्यामुद्दिश्य भिदा बोधत्व विधीयते इति अवश्य वाच्यम्। अन्यथा प्रायपाठविरोधापत्ते। इन्द्रियनिग्रह इत्यादिषु तत्पुरुषत्वेन विधेयत्व सभवति विशेष्यपदत्वात्। भिदाबोध इत्यत्र बहुव्रीह्याश्रयणे तस्य विशेषणपदत्वापत्त्या विशेष्य पदान्तरमध्याहार्यम्। तथा च अध्याहार एव दोष। अनुवादकमेव विद्यापद विधेयकोटौ विशेष्यत्वेन सबध्यते इति चेत्तत्राह **श्रेष्ठमिति।** अनुवादक हि पद श्रेष्ठम्। शङ्काऽऽस्कन्दितमूर्तित्वात्। तत्तादृश अनुवादपर **ऊर्ध्वं** विधेयपरस्य भिदाबोध इति पदस्य विशेष्यता **न यियासति।** अन्वयायोग्यमिति भाव। विरुद्धत्रिकद्वयापत्ते ॥ १५०० ॥

**स्थानान्तरेष्वदृष्टो स्यानस्थानद्वयस‍ङ्गमः।**
**स्त्रीपुंसयोश्च योगोऽयं सूते दोषकुमारकम् ॥ १५०१ ॥**

अध्याहारपक्षे दोषान्तरमाह **स्थानान्तरेषु इति।** पूर्वत्र शमो मन्त्रिष्ठताबुद्धे॰ इत्यादौ सर्वत्र केवल उद्देश्यपरपदानि विधेयपरपदेभ्यो नियमेन पूर्वमेव प्रयुक्तानि। अत्रैव पुन तस्य उभयत्र सङ्गम विरुद्ध॰। किञ्चैवमपि बहुव्रीहेर्विशेषणपदत्वेन विशेष्य समानलिङ्गवत्त्वस्य नियते, भिदायाः अबोधो यस्या सा भिदाबोधा अविद्येत्येव स्यात् न पुन॰ भिदाबोध इति। दोष साहित्यमुद्रयाऽऽह **स्त्रीपुरुषयोरिति। योगः** विशेषणविशेष्यभावेन प्रयोग ॥ १५०१ ॥

**अध्याहारो बहुव्रीहिवृद्ध्यै किं स्याद्विचारय ॥ १५०२ ॥**

'यत्रानवसरोऽन्यत्र' इत्युक्ता अध्याहारमर्यादामुल्लङ्घ्य कुतोऽय स्वच्छन्दाध्याहारो बहुव्रीहिसमासपक्षस्य क्षपणकर एव न पोषक इति श्लेषेणाह **बह्विति**। अधिक· आहार· सञ्चितस्य व्रीहे· क्षपणहेतुरेव यथा तथेति ध्वनि ॥ ॥१५०२ ॥

**तर्हि सत्सदसच्चासन्न च कालजवोऽपि न।**
**यदा शास्त्रं समाकृष्य शयीत सलिले हरिः॥ १५०३ ॥**

**आरुवन्दे हि देवेषु वायुस्तस्य प्रसादतः ॥ १५०४ ॥**

**तदा प्रागसतो जन्म सतो मृतिमथात्मनि।**
**भिदां च ये पणमृते स्मरन्तीशसृतेर्गताः ॥ १५०५ ॥**

**तेषामुपविशाम्नाय ध्वनिं वैकुण्ठवासिनाम्।**
**इत्याह श्रुतिगीतायां भगवान्बादरायणः ॥ १५०६ ॥**

**मूर्तामूर्ताख्यभूतानां लयो ब्रह्मलयः किल।**
**कालस्य रूपमात्रं तु तदाप्यस्ति जवोस्य न।**
**जरामरणयोग्यस्य जवार्हजगतः क्षयात् ॥ १५०७ ॥**

एतद्वाक्यस्य भेदपरत्व पूर्वोदाहृतश्रुतिगीतिकावाक्यविवरणेन द्रढयति **तर्हीत्यादिभिः**। अत्र भेदस्मरणस्य मुक्तिकालीनत्ववर्णनेन भेदस्य तात्त्विकत्वम्। सदसन्नेति मूर्तामूर्तात्मकजगत्प्रलयोक्त्या परान्तकालत्वोक्ति । **सलिले** 'अप्रकेत सलिलमासीत्' इत्युक्तप्रलयोदधौ। महोदधिशयोन्तक इत्युक्ते । **सृतेः गताः** 'अस्माल्लोकात्प्रेत्य' इत्युक्त्या मुक्ताः। परमात्मनि जगज्जन्ममरणादिकारणत्व-लक्षण महिमानमनुसन्धाय स्वभावशक्त्या फलनैरपेक्ष्येण आत्मनि भिदा स्मरन्ति ॥ ॥१५०३ ॥ १५०४ ॥ १५०५ ॥ १५०६ ॥ १५०७ ॥

**नित्यवेदात्मकं शास्त्रमपकृष्य स्वहृद्गुहाम्।**
**प्रवेश्य शेते किल स वटपत्रपुटे प्रभुः ॥ १५०८ ॥**

अपकृष्य पदसमन्वयपरत्व समापाद्य ॥ १५०८ ॥

**एवं च ब्रह्मकल्पान्ते सन्ति सन्तस्स्मरन्ति च।**
**जगतां जन्ममरणे परमात्मनि सर्वतः ॥ १५०९ ॥**

**भिदां चेत्यागतं स्पष्टं शयानस्य तु देहिता।**
**स्मर्तृणां बहुता चार्थात्प्राप्ता शब्दार्थविन्मते ॥ १५१० ॥**

**यतो जडद्वयं मुक्तो मुक्ताश्च बहवो भवन्।**
**तेनाद्वितीयतामुक्तौ शुक्तौ रूप्यमभूत्तव ॥ १५११ ॥**

देहिता इति मुक्तप्राप्यस्य साकारता, स्मरन्तीति बहुवचनेन मुक्ताना बहुत्व यदेति शास्त्रमिति च कालो वेद इति जडद्वयस्य इत्यादिसिद्धि। तेन 'यत्र तु सर्वमात्मैवाभूत्' इत्यत्र अद्वैतिभि कल्पित अद्वितीयतावादो निराकृतो ध्येय ॥ ॥१५०९ ॥ १५१० ॥ १५११ ॥

**जीवन्मुक्तिर्हि देहादौ सति मुक्तिरियं परा।**
**परान्तकालादपरो मुक्तेः कालो न यौक्तिकः ॥ १५१२ ॥**

सकलप्रपञ्चनाशश्रवणान्नेय जीवन्मुक्ति किन्तु परममुक्तिरेव। जीवन्मुक्तौ देहादीनामवस्थितेरित्याह जीवदिति। मुक्तेः परममुक्ते अपरः कालः अपरमुक्तिकाल इति यावत् ॥ १५१२ ॥

**तदापि भेदस्तद्बोधश्चास्ति श्रौतस्मृतेर्बलात् ॥ १५१३ ॥**

**आत्मनीति हि सप्तम्या यद्भेदाधारतोदिता।**
**अतस्तत्परमं तत्त्वं विद्या तद्बोध एव हि ॥ १५१४ ॥**

**बोध:** स्मरन्तीत्युक्त । सन्तत हरिस्मरण तद्धर्मिकभेदस्मरणमेवेति हृदय । **आधारता** भेदव्याप्तलिङ्गम् । **श्रौतस्मृते:** श्रुतिगीतिकाया पञ्चमवेदस्य । **तद्बोध एव** भिदाबोध न तु भिदाया अबोध ॥ १५१३ ॥ १५१४ ॥

**भेददृष्ट्याऽभिमानेन निस्सङ्गेनापि कर्मणा ।**
**इत्याह स प्रभुर्व्यासो मोक्षसाधनबोधने ॥ १५१५ ॥**

मोक्षसाधनेषु प्राधान्येन भेदसाक्षात्कारस्य भागवते पठनादपि न अबोध विद्याशब्दार्थ इत्याह **भेदेति**। दृशिर्हि साक्षात्कार । 'दृष्ट्वैव त मुच्यते' इत्युक्तब्रह्मसाक्षात्कार अपि भेदसाक्षात्कार एव। भेदस्य तद्धर्मिकस्य तत्स्वरूपत्वात् ॥ १५१५ ॥

**भगवत्यभिमानो हि भक्तिर्निस्सङ्ग कर्म च ।**
**निवृत्तिस्सैव विद्वद्भिर्विरक्तिरिति चोच्यते ॥ १५१६ ॥**

**अभितो** हरे **मानेन** बहुमानेन आग्रहेण च। **निःसङ्गेनापि कर्मणा** फलाभिसन्धिरहितनिवृत्तकर्मणा च मुक्त· सन् 'कर्तृत्वात्सगुण ब्रह्म पुरुष पुरुषर्षभम् । स सगत्य' इत्युत्तरवाक्येनान्वय· ॥ १५१६ ॥

**भेददृष्टिं च तत्पंक्तौ ज्ञानाख्यां यां पुरा जगौ ।**
**अकाराख्यकुठारेण किं तां हन्ति मुरान्तकः ॥ १५१७ ॥**

**पुरा जगौ** भागवते तृतीयस्कन्धे । **तां** भेददृष्टिम् । **किं हन्ति** । दशमस्कन्धे भिदाया अबोधेन इत्युक्तिकुठारेण कथ निषेधति । स्वव्याघातापातात् । **मुरान्तकः** । ऐक्यवादिन· मुरासुरस्य सहर्ता ॥ १५१७ ॥

**तदबोधस्तवैवासीद्भेदोयमकुतो भयः ॥ १५१८ ॥**

**अबोध:** विपरीतबोध । **तव** अपव्याख्यातु· ॥ १५१८ ॥

**द्विरूपाप्येकरूपाया रथि सारथितां व्यधात् ।**
**सेयं वाक्पार्थकल्पा मे त्वं चापार्थो भवो**
**ध्रुवम् ॥ १५१९ ॥**

साहित्यमुद्रया रञ्जयति **द्विरूपेति** । अविमर्शकाले अबोध इति वस्तुगत्या बोध इति द्विरूपेत्यर्थ । उत्तरगोग्रहणकाले पार्थ अविवेकेन कुरूणा प्राक् सारथिवत् अनन्तर रचितया यथेति ध्वनि । वाक् भागवतवाक्य **पार्थकल्पा** पार्थसदृशी ॥ **अपार्थः** प्रत्युत्तरासमर्थ ॥ १५१९ ॥

**अतो मम गृहान्नीता भवतोऽप्युत्तरा कृतीः ।**
**गा गृह्णामि न सन्देहस्त्वं तु दुर्योधनो भवः ॥ १५२० ॥**

**मम गृहात्** सदागमात् **नीताः** दुराग्रहेण अन्यथा योजिता । उत्तररूपा. गा वाक्यानि । गृह्णामि याथातथ्येन योजयामि । **दुर्योधनः** कथायामसमर्थ ॥ ॥१५२० ॥

**यथैषा पुरुषेच्छाया एतस्मिन्नेतदाततम् ।**
**इति श्रुत्या यतो बिम्बप्रतिबिम्बत्वमुच्यते ॥ १५२१ ॥**

बिम्बप्रतिबिम्बभावस्वरूप निर्धारयन् तच्छ्रुत्या भेदसिद्धिप्रकार दर्शयति **यथेति** । 'छाया यथा पुसदृशी पुमधीना च दृश्यते । एवमेवात्मका सर्वे ब्रह्माद्या परमात्मन ' इति वाक्यशेष ॥ १५२१ ॥

**श्रुत्या सर्वोपसंहारी दृष्टान्तोयमुदीरितः ।**
**उपमा शास्त्रतत्त्वज्ञा मुख्यां तामुपमां विदुः ॥ १५२२ ॥**

**सर्वोपसंहारी** असति प्रमाणविरोधे सर्वधर्मै दार्ष्टान्तिकसाम्यस्य उपसहारपरा ॥ १५२२ ॥

**छाया हि पुरुषाकारा पुरुषाधीनचेष्टिता।**
**भिन्ना च जीवे तादृक्त्वं सिद्धं दृष्टान्तशोधने ॥ १५२३ ॥**

**छायाख्यतमसः पुंसो भिन्नता सर्वसंमता।**
**पुनराधेयतोक्त्या सा सतात्पर्यमुदीर्यते ॥ १५२४ ॥**

छायाशब्देन उक्त भेद पुन· एतस्मिन् इति ब्रह्मण आधारत्वेन एतदिति जीवजातस्य च आधेयत्वेन उक्त्या सतात्पर्य ज्ञाप्यते इत्याह **सतात्पर्यमिति** ॥ ॥१५२४ ॥

**जीवस्य भृत्यता चायाच्छायाशब्दप्रयोगतः।**
**अनुकूलं प्रियं भृत्यं छायेत्याहुः प्रियंवदाः ॥ १५२५ ॥**

आहुरिति आर्षरामायणे सीताया राम वनगमनोद्यत प्रति वचन 'पादच्छाया भविष्यामि' इति। तवानुकूला प्रिया सेवापरा च इति हि तत्र छायाशब्दार्थ· ॥ ॥१५२५ ॥

**प्रतिबिम्बत्वमप्यस्य तच्छब्दादेव सिद्ध्यति।**
**प्रतिबिम्बं प्रतिच्छायेत्याहुर्यदनुशासने ॥ १५२६ ॥**

**साम्यं यत्किञ्चिदेवेति दृष्टं दृष्टान्त एव हि।**
**न हि ज्ञानबलादेश्च च्छाया पुरुषसंमिता ॥ १५२७ ॥**

बिम्बप्रतिबिम्बयोरपि सर्वत्र यथायोग्यमेव साम्य न तु सर्वथा। अत छाया ज्ञानबलादे न हि पुरुषसमिता इति योजना। अत पूर्वोक्त प्रियत्व सेवकत्व च सात्त्विकजीवापेक्षयैवेति विवेको बोध्य। इतरेषा तु सादृश्य तदधीनत्व-तत्सदृशत्वादिनैवेति भाव· ॥ १५२७ ॥

**आधारता स्वामिता च तथा साकारता हरेः।**
**सिद्धा पुरुषदृष्टान्तात्तच्छब्दात्पूर्णताऽपि च ॥ १५२८ ॥**

**यद्विशेष्यपदं दार्ष्टान्तिकेऽप्यावर्त्यमेव तत्   ॥ १५२९ ॥**

दृष्टान्तगत पुरुषपद दार्ष्टान्तिकेऽपि आवर्तनीयम्। तस्य एतस्मिन् इति दार्ष्टान्तिकगतेन पदेनान्वय । अत्र तस्य पुरुसनोतीति व्युत्पत्त्या पूर्ण इत्यर्थ । **एतत् आततमिति** जीवजातस्य तस्मिन्नाश्रितत्वोक्ते । अन्नात्पुरुष इत्यत्र पुरुषशब्दस्य देहपरत्वेऽपि स वा एष पुरुषोऽन्नरसमय' इत्यत्र रसशब्देन विशेषणात् सारभूतविष्णुप्रतिपादकत्वमिव एकस्य अर्थद्वय योग्यतया युक्तम्। तेन च दृष्टान्तबलेन दार्ष्टान्तिके सिद्धान्गुणानाह **साधारतेति** ॥ १५२८ ॥ १५२९ ॥

**यथा तथेत्युक्तसाम्यं शब्दसाम्येति शोभते ।**
**छायाख्योपमया जीवमेवैतदिति वाग्जगौ   ॥ १५३० ॥**

**शब्दसाम्ये** एतस्मिन् **पुरुषे** = पूर्णे परमात्मनि **एतत्** छाया छायोपम जीवजात इत्येव उभयत्र पुरुषशब्दस्य छायाशब्दस्य च साम्ये इत्यर्थ ॥ १५३० ॥

**साकारस्य सदृक्षो यत्साकारः स्यान्न चापरः ।**
**न चेद्यथातथाशब्दौ वितथाविति मे मतिः   ॥ १५३१ ॥**

**साकारः** जीव । जीवचिता साकारत्व मौक्तभोगादिना गुणसौरभे प्रागुपपादितमिति भाव ॥ १५३१ ॥

**बाधितं तु विना सर्वं साम्यं तौ नैव मुञ्चतः ।**
**किं न सर्पोपमारज्जौ सर्पाकारेण केवलम्   ॥ १५३२ ॥**

**केवलं इति।** न तु अभिसर्पणादिता। तथा च सादृश्याभिव्यञ्जको धर्म प्रमाणाविरुद्ध एव क्लृप्त इति भाव. ॥ १५३२ ॥

**रूपं रूपं प्रतीन्द्राख्यहरेर्जीवस्तनौ तनौ ।**
**प्रतिरूपो बभूवेति स्पष्टं तद्रूपरूपिता   ॥ १५३३ ॥**

**उक्ता श्रुतौ ततोऽप्येतौ साकारौ तत्कृतोपमौ ।**
**इति सिद्धं तथा तत्र बिम्बस्येन्द्रत्वमीरितम् ॥ १५३४ ॥**

**परमैश्वर्यरूपं तज्जीवाः सर्वेऽप्यतादृशाः ।**
**अतो विसदृशत्वं च तयैव प्रोक्तमेतयोः ॥ १५३५ ॥**

तद्रूपरूपिता । तस्य इन्द्रस्य परमैश्वर्यशालिन हरे आकारेण किञ्चित्सदृशाकारवत्त्वम् ॥ १५३३ ॥ १५३४ ॥ १५३५ ॥

**एवं च प्रतिरूपोऽयं रूपाद्विसदृशत्वतः ।**
**भिन्नश्छायावदित्यच्छारत्नच्छायापि हृत्तमः ।**
**तिरस्करोति तेनोक्ताप्युपमाऽसकलोपमा ॥ १५३६ ॥**

बिम्बप्रतिबिम्बभावोक्त्या भेदस्यानुमानेन सिद्धौ प्रयोगप्रकारमाह एव चेति । ज्ञानच्छाया अनुमानाख्या । हृत्तमः ऐक्यविषयक अन्यथाज्ञानम् । असकलोपमा न अत्यन्तसादृश्यपरा ॥ १५३६ ॥

**विष्णोश्च बिम्बता तस्माद्भिन्नस्यैवात्र वर्ण्यते ॥ १५३७ ॥**

**किञ्चित्साम्यादधीनत्वाज्जीवस्य प्रतिबिम्बता ।**
**विष्णोश्च बिम्बता किं न भिन्नयोरेव वर्ण्यते ॥ १५३८ ॥**

तस्मात् परमैश्वर्यवाचीन्द्रशब्दप्रयोगबलात् ॥ १५३७ ॥ १५३८ ॥

**बिम्बस्य प्रतिबिम्बैक्यं न स्मरोक्तं न विस्मर ॥ १५३९ ॥**

उक्तं छायाशब्देन उक्त भेदम् ॥ १५३९ ॥

**छायापुरुषदृष्टान्ताद्बिम्बस्य परमात्मनः ।**
**प्रतिबिम्बात्मकाज्जीवाद्भेदस्योक्तश्रुतौ श्रुतेः ॥ १५४० ॥**

तदेव विवृणोति छायेति ॥ १५४० ॥

**प्रत्यक्परागभावतो हि विषयो विषयी न ते ।**
**मूलभाष्ये कथं तर्हि पराक्प्रत्यगभिन्नता ॥ १५४१ ॥**

**अतः प्रत्यक्परागभावात्प्रतिबिम्बस्तु बिम्बतः ।**
**भिन्नो विसदृशत्वाच्च ज्ञानज्ञेयवदेव हि ॥ १५४२ ॥**

किञ्च त्वयाऽप्यध्यासभाष्ये विषयविषयिणोर्भेदसाधने युष्मदस्मत्पदोक्त पराक् प्रत्यग्भाव हेतुकृत । स एव च मया बिम्बप्रतिबिम्बयो भेदेऽपि हेतूक्रियते । अतो न केवल विसदृशत्वत, किन्तु त्वदुपगतेन अनेनापि हेतुना भेदसिद्धिर्निष्प्रत्यूहेत्याह **अत इति** ॥ १५४२ ॥

**सत्यश्चायमबाध्यत्वाद्ब्रह्मवत्प्रतिबिम्बकः ।**
**न हि सादृश्यमप्यस्य कार्त्स्न्येनैक्ये तु**
**का कथा ॥ १५४३ ॥**

**अबाध्यत्वात्** न चासिद्धि· । नाय प्रतिबिम्ब इति वा मास्त्यत्र प्रतिबिम्ब इति वा बाधस्याननुभवादेव । कालान्तरे देशान्तरे निषेधस्तु न त्रिकालसर्वदेशस्थनिषेध साधयतीति भाव· । विसदृशत्वहेतु न भेदेऽप्रयोजक । हेतूच्छित्तिरूपबाधक-सद्भावादित्याह **न हि इति** ॥ १५४३ ॥

**किं विमर्दो मृगमदे दर्पणप्रतिबिम्बिते ॥ १५४४ ॥**

विसदृशधर्मा· न्यायामृते (२ ।३२ प ६०७) एकीकृत्य उक्ता· । न्यूनाधिक-परिमाणत्व-चलत्वा-चलत्व-उपाधिसयुक्तत्वासयुक्तत्व-त्वगादिग्राह्यत्वाग्राह्यत्व-प्रत्यक्त्वपराक्त्वरूपेण कस्तूरी तत्प्रतिबिम्बयो· सौरभतदभावरूपेण गुडतत्प्रतिबिम्बयोर्माधुर्यतदाभरूपेण वह्नितत्प्रतिबिम्बयोरौष्ण्यतदभावरूपेण पर्वततत्प्रतिबिम्बरूपयोर्गुरुत्वतदभावरूपेण इत्यादिना सगृह्योक्ता अनुसन्धेया· । ते च भेदसाधका । तथा च भेदे अनेकानि अनुमानानि प्रमाणयति किमित्यादिभि । **विमर्दः** परिमल· ॥ १५४४ ॥

**परिमाणस्पर्शगन्धगुरुत्वैकत्वतोऽन्यता ।**
**व्योमाग्निपुष्पगिर्यर्केष्वस्त्येव प्रतिरूपतः ॥ १५४५ ॥**

परिमाणादिभेदकधर्मेभ्य हेतुभ्य क्रमेण व्योमादिषु प्रतिरूपत प्रतिबिम्बप्रतियोगिकवैसादृश्यस्य विद्यमानत्वात् त्वदन्यता अस्त्येव इति योजना ॥ ॥१५४५ ॥

**रूपमात्रेण सादृश्यं वैसादृश्यं त्वनेकधा ।**
**किं ते वार्यन्तरस्थाब्दस्तनितैर्वनिता हताः ॥ १५४६ ॥**

**रूपमात्रेण** आकारमात्रेण । वैसादृश्य तूक्तरीत्या सुबहुधा । अत अत्यल्पमेव सादृश्यम् । शब्दतदभावाभ्या वैसादृश्ये दृष्टान्त **अब्दस्तनितैः** मेघगर्जनै ॥ ॥१५४६ ॥

**किञ्चिद्वैसादृश्यतो हि न गौर्गवयता(मगा)मियात् ।**
**वैसादृश्ये त्वनेकस्मिन्दृश्ये पश्यैकता कुतः ॥ १५४७ ॥**

'यदा पश्य पश्यते' इत्यत्र पश्यतीति **पश्यो** जीव । **दृष्यः** रुक्मवर्णादि ईश । अत मुक्तावपि तथैव भवतीत्यत्रोक्त सादृश्य निर्दु खत्वादिरूपेणात्यल्पमेव । जगद्व्यापारवर्जमित्यादिनोक्त वैसादृश्य त्वनेकप्रकारम् । अतो मुक्तावपि जीवेशयोरपि भेद एव ॥ १५४७ ॥

**वृत्तिवैचित्र्यतश्शब्दमात्रेणैक्यं विरुद्धयोः ।**
**किं गङ्गापदसङ्गेऽपि तीरस्य स्यात्प्रवाहिता ॥ १५४८ ॥**

एव विरुद्धधर्मेषु सत्स्वपि, यत्र क्वचित्प्रतिमुखे मुखशब्दप्रयोग. स, तीरे गङ्गापदमिव अमुख्यवृत्यैव नेयः इत्याह **वृत्तीति** ॥ १५४८ ॥

**द्वाविमाविति विस्पष्टदृष्टेरपि तयोर्भिदा ।**
**द्वाविमाविति पार्श्वस्थो यतः पश्यति तौ सदा ।**
**अतः प्रत्यक्षतोऽप्यत्र भेदस्सिद्धो विवेकिनाम् ॥ १५४९ ॥**

द्वाविमौ बिम्बप्रतिबिम्बौ न त्वेक इति पार्श्वस्थस्थाबाधितप्रत्यक्षेणापि तयोरत्यन्तभेदसिद्धिरित्याह **द्वाविति** ॥ १५४९ ॥

**न द्वाविमावेक एवेत्यैक्यधीरस्ति किं क्वचित् ।**
**तस्मादबाधितं भेदप्रत्यक्षमभवद्धि तत् ॥ १५५० ॥**

अबाधमुपपादयति नेति ॥ १५५० ॥

**तदेवेदं मुखमिति व्यवहारस्तु साम्यतः ।**
**स एवायं राम इति यथा चित्रस्थिताकृतौ ॥ १५५१ ॥**

**चित्रसिंहो यथा सिंहो मुखं प्रतिमुखं तथा ॥ १५५२ ॥**

यत्र क्वापि प्रतिमुखे तदेवेद मुख इति व्यवहार स तु चित्रलिखितरामे रामशब्द इव रूढोपचार इत्याह **तदिति** ॥ १५५१ ॥ १५५२ ॥

**कथं न दह्यते वक्त्रं तप्तवार्यन्तराविशत् ।**
**कथं च न व्रणं वक्त्रे कांस्यादर्शप्रवेशिनि ॥ १५५३ ॥**

ऐक्ये बाधकान्तराण्याह **कथमिति**। तप्तवार्यन्तराविशत् इति वाक्यविशेषणम् ॥ १५५३ ॥

**करस्थे दर्पणे हस्ती यद्यष्टैश्वर्यतो विशेत् ।**
**कथं शिशुस्तं बिभृयाद्गजशालोद्यमो वृथा ॥ १५५४ ॥**

**अष्टाशीतिसहस्राणि विस्तीर्णो योजनस्य यः ।**
**दर्पणेऽल्पप्रमाणेऽसौ कथं विशति चन्द्रमाः ॥ १५५५ ॥**

परिमाणवैसादृश्यानङ्गीकारे बाधकमाह **करस्य इति कथं विशेदिति** अणिमैश्वर्याभावेनेति भाव· । कथ **त** बिभृयादिति प्रसङ्गान्तरम् । अणिमैश्वर्यमन्तरेति भाव । **वृथेति** दर्पण एवाम्स्थानसभवात् । अष्टैश्वर्य इति परिहास ॥ १५५४ ॥ ॥१५५५ ॥

**यदि तप्तोदकेत्युष्णे वक्रमेव विशेन्नृणाम् ।**
**तदा दाहो भवेत्तस्य कवोष्णादपि यस्य भीः ॥ १५५६ ॥**

**नृणा** अग्निस्तम्भाद्यैश्वर्यविकलानाम् ॥ १५५६ ॥

**यद्यम्बुनि चिरं नृणां वक्रमेव विशेत्तदा ।**
**शिक्षा स्यात्तस्करस्येव यद्बिभेत्यघमर्षणात् ॥ १५५७ ॥**

**अम्बुनि** शीताम्बुनि । अत पूर्वस्माद्विशेष । **अघमर्षणात्** अल्पशीतस्पर्शात् ॥ १५५७ ॥

**नैमित्तिकं हि तत्कार्यं निमित्ते सति जायते ।**
**तदपाये नाशवच्च सूर्यात्पद्मविकासवत् ॥ १५५८ ॥**

**त्रपुसीसस्वर्णसर्पिश्चन्द्रकान्तद्रवत्ववत् ।**
**जलौष्ण्यवद्ग्रहग्रस्तमर्त्यसत्वविशेषवत् ॥ १५५९ ॥**

नैमित्तिक प्रतिमुखनाशो मुखसन्निधिरूपनिमित्तकारणनाश· प्रयोजक । तत्र अनेकानि निदर्शनानि **सूर्यात्** **इत्यादीनि**। सावित्रतेजोऽपगमात् पद्मविकासनाशवदिति भाव ॥ द्रवत्व त्रपुसीसादिभि प्रत्येक सबध्यते । अग्निसन्निधान तत्र निमित्तम् । मर्त्यस्य बलविशेषे ग्रहावेश निमित्तम् ॥ १५५८ ॥ ॥१५५९ ॥

**औपाधिकं प्रतिमुखं मुखे सत्येव दृश्यते ।**
**मुखस्यापगमे चास्य न दृष्टत्वाष्टता च न ॥ १५६० ॥**

दार्ष्टान्तिके योजयति **औपाधिकमिति**। **अस्य** मुखसन्निधिरूपनिमित्तस्य। **नष्टत्वात् दृष्टता न**। नाशे सति नाशात् अनन्तर दृष्टता न ॥ १५६० ॥

**निमित्तं बिम्बसान्निध्यं कर्ता नारायणः प्रभुः।**
**उपादानमुपाधिश्चेत्कार्यं वार्यमिदं कथम् ॥ १५६१ ॥**

मुखव्यतिरेकेण प्रतिमुख, मिथ्या, प्रत्येक तत्कारणाभावादिति केचित्समास्थिता। तान् असिद्धियुक्त्या दूषयति **निमित्तमिति**। **वार्यं** अपलापार्हम् ॥ १५६१ ॥

**कार्यात्मना विवरणाद्विकारो दर्पणस्य च।**
**तन्तोरिवानुमन्तव्यो हन्तव्योऽर्थः कथं वद ॥ १५६२ ॥**

**विकरणात्** विक्रियादर्शनात्। **विकारः** सूक्ष्मोऽपीति शेष। तत्र दृष्टान्त **तन्तोरिवेति**। मृदादेरिव स्थूलविकारस्य तत्राप्यदर्शनात्। **अर्थः** प्रमित। **हन्तव्यः** अपलपनीय ॥ १५६२ ॥

**बहिर्विकारशून्यस्य जठरस्य यथान्तरे।**
**गुल्मग्रन्थिविकारः स्यात्तथा यं च भविष्यति ॥ १५६३ ॥**

आन्तर एवाय विकार इत्यत्र दृष्टान्तो **गुल्मेति** ॥ १५६३ ॥

**घटात्मना विकरणं मनसो योऽनुमन्यते।**
**प्रतिबिम्बात्मनोपाधेर्विकारोऽयं कुतोऽस्य न ॥ १५६४ ॥**

अन्तःकरण निर्गत्य घटाद्यात्मना परिणमते। अतो घटे वृत्तिव्याप्यत्वमेव दृश्यत्वमिति हि मायिनो मतम्। अणुनो मनसो घटात्मना विकारः असभवी अपि स्वमताग्रहमात्रेण स्वीकृतः। तस्य तादृशस्य तव प्रमितदर्पणविकारानङ्गीकारो निर्निबन्धन इत्याह **घटेति** ॥ १५६४ ॥

**द्वारं विना यत्प्रवेष्टुं नालं मृण्मयभित्तिषु ।**
**कथं कांस्यं दृढद्रव्यं तद्विशेन्मृदुलं मुखम् ॥ १५६५ ॥**

पूर्व व्रण स्यादिति दूषितम् । इदानी प्रवेश एव दुर्लभ इति दूषयति **द्वारमिति** ॥ १५६५ ॥

**यदि वक्त्रं जलस्यान्तःप्रविष्टं सत्प्रदृश्यते ।**
**पराग्भावस्तर्हि कुतो न हि मज्जन्मुखेस्त्यसौ ॥ १५६६ ॥**

प्रत्यक् पराग्भावरूप वैसादृश्य ऐक्ये बाधकमाह **यदीति। मज्जन्मुखे** **बिम्बे** ॥ १५६६ ॥

**जलस्थं चेद् बहिर्न स्याद् बहिस्स्थं च जले कुतः ।**
**मज्जन्मुखमिवैकत्वादेकत्रैव भवेद्धि तत् ॥ १५६७ ॥**

पार्श्वस्थस्य द्वे इमे इति प्रागुक्त प्रत्यक्षबाध ऐक्यस्य स्मारयति **जलस्थेति** ॥ ॥१५६७ ॥

**यद्यादर्शे मुखं सत्ते दोषोऽयं दुस्तरस्तदा ।**
**न चेत्तदाधारता धीर्भ्रमत्वान्नैव साधिका ॥ १५६८ ॥**

**न चेदिति** । आदर्शे मुख वस्तुगत्या विद्यमान न चेत् । **धीः** आदर्शे मुख इति मुखाधारता धीः । **साधिका** ऐक्यस्येति शेष· ॥ १५६८ ॥

**या च दर्पणसंबन्धाच्चक्षुषः पृष्ठतो गतिः ।**
**मुखस्यैवेक्षणं चोक्तं तच्चित्रमिति मे मतिः ॥ १५६९ ॥**

**नयच्छैलान्निववृते न क्रूरादनलादपि ।**
**तच्चक्षुः पश्यतस्स्वास्यं जलात्किल निवर्तते ॥ १५७० ॥**

दर्पणाभिहता दृष्टि परावृत्य स्वमाननम्। व्याप्नुवन्त्यभिमुख्येन व्यत्यस्त दर्शयेन्मुखम्। इति परस्य ऐक्ये प्रक्रियान्तरमपि दूषयति **या चेत्यादिभिः** ॥ ॥१५६९ ॥ १५७० ॥

**यतः शिलाया योगेऽपि दारुप्रोतमुखश्शरः।**
**यथागतं तथा याति पृष्ठं पृष्ठं मुखं मुखम्॥ १५७१ ॥**

अस्मिन्पक्षे प्रत्यक् पराग्भावे। दुरुपपाद इत्याह **यतः इति** ॥ १५७१ ॥

**ततश्चक्षुः परावृत्तिरपि स्यादीदृशी परम्।**
**पुंवर्त्कि वक्तुमुचिता निवृत्तिः स्वेच्छया जडे॥ १५७२ ॥**

परावर्तन पुधर्म अचेतने चक्षुषि न घटते इत्याह **स्वेच्छयेति** ॥ १५७२ ॥

**एवं चेत्कुड्यकुम्भादि दृष्ट्वा दृष्ट्वा निवृत्तिमत्।**
**किं चक्षुरीक्षते स्वास्यं तस्ये इनतपोधिकम्॥ १५७३ ॥**

**एवं चेत्** = अचेतनस्यापि सत येन केनचित्प्रतिहतस्य परावृत्तिरङ्गीक्रियते चेत्। **स्वास्यं** स्वाधारभूत मुखम्। **इह** दर्पणविषये। तप इत्यपहास ॥ १५७३ ॥

**किञ्चैवं सति तद्बुद्धेराकारः स्यादिदं मुखम्।**
**इत्येव दर्पणादीनां सत्येवं दर्शनं च न।**
**दर्पणे मुखमित्येवमाकारस्त्वष्टमो रसः ॥ १५७४ ॥**

**एव सति** मुखमात्रस्य दर्शने सति। (इद मुख इत्याकार)। **तद्बुद्धेः** = परावृत्य मुखमात्र विषयीकुर्वत्या बुद्धे स्यात्। न तु दर्पणे मुख इति सार्वजनीन आकार। दर्पस्य बुद्ध्या उल्लेख· सप्तमो रस। मुखाधारतया उल्लेखस्तु अष्टमो रस ॥ १५७४ ॥

**अथार्धार्धाभिसंबन्धाद्द्विधाभूतस्य चक्षुषः।**
**धीद्वयं यदि जायेत हीयेत तव धीस्तदा ॥ १५७५ ॥**

ननु चक्षुषि भागद्वयमङ्गीक्रियते । एकेन भागेन परावृत्य मुखस्य अपरेण च दर्पणस्य च दर्शन सभवतीति चेत् न अनानुभविक धीद्वय कल्पयत तव धीरेव हीयेत ॥ १५७५ ॥

**विरुद्धदिग्द्वयस्थार्थसंबन्धस्त्वेकचक्षुषः ।**
**यतो न दृश्यते नृणां ततोऽप्येतदसङ्गतम् ॥ १५७६ ॥**

कि च चक्षुषा एकस्या दिशि सतोर्द्वयोर्युगपद्दर्शनसभवेऽपि विरुद्धदिक्सस्थितयो मुखदर्पणयो सहैव दर्शनमसभावितमित्याह **विरुद्धेति** ॥ ॥१५७६ ॥

**किञ्चैवमपि धीर्द्वन्द्वं कथं स्यान्मनसाणुना ।**
**समूहालंबना धीश्चेत्स मोहालम्बनो वदन् ॥ १५७७ ॥**

इद धीद्वद्व न मनसा उत्पत्तु युक्तम् । चक्षुषा सह मनसोऽपि बहिर्निर्गमनमङ्गीकुर्वतस्तव अजोर्मनसो धीद्वयजननाय द्विधाभावायोगात् । समूहालबनमेकमेवेद ज्ञानमिति तु मोहमूलम् । तथा सति इमौ मुखदर्पणौ इति तदाकार स्यात् इत्याह **किञ्चेति** ॥ १५७७ ॥

**किञ्चावाङ्मुखपुंसोक्षिपरावृत्येक्षतां मुखम् ।**
**तद्रुद्धबहुदूरस्थमित्रमैत्री कुतो वद ॥ १५७८ ॥**

अवाङ्मुखस्य जले स्वमुख सूर्यमण्डल चेति द्वयमपि दृश्यते इत्यविवादम् । तत्र तव प्रक्रियया परावृत्त्य स्वमुखस्य दर्शनमिति कथञ्चिद्वक्तु शक्यत्वेऽपि सूर्यमण्डलदर्शन दु:शकम् । तत्र हेतु **तद्रुद्धस्य** मुखेन प्रतिबद्धस्य बहुदूरस्थस्य चेति । मित्रमैत्री सूर्यदर्शनम् ॥ १५७८ ॥

**किञ्चैवं सति भूषास्थरत्नलक्षेषु बिम्बितम् ।**
**मुखं स्वमीक्षमाणस्य धीः स्यादेकं मुखं**
**त्विति ॥ १५७९ ॥**

अनेकोपाधिस्थले अनेके प्रतिबिम्बास्तावद् दृश्यन्ते। तदपि अशक्यमापन्नम्। बिम्बस्यैकत्वादेव। न हि रत्नरूपोपाधिभेदे मुखस्यापि भेद इत्याह **किञ्चैवमिति** ॥ १५७९ ॥

**कपोलः कल्पकस्तत्ते दोष्णो योग्यो न चक्षुषः ॥ १५८० ॥**

इय द्वैधीभावप्रक्रिया स्वकपोले कल्पयितु न शक्या। स्वकपोलस्य स्वचक्षुदर्शनायोगात्। अत इय सर्वाऽपि कल्पना स्वकल्पनामूलैव। एतादृशस्य कुकल्पकशीलस्य तव कपोलस्य न चक्षुःसयोग किन्तु स्वहस्तेन ताडनरूपाभिघात एव समुचित इत्याह **कपोल इति**। तदुक्त भगवत्पादै 'कशावेत्रादिक तस्य तस्करस्योत्तर भवेत्' इति ॥ १५८० ॥

**अतस्तत्तादृशं वस्तु लघुभूतं हि जन्यते।**
**बिम्बोपाध्योः सन्निधानात्कथं स्याद्धि**
**तदेव तत्॥ १५८१ ॥**

तथा च प्रतिबिम्बो बिम्बाद्भिद्यते तत्कारणविलक्षणकारणजन्यत्वात् यवाङ्कुरात्कलमाङ्कुरवत् इति प्रयोगोऽभिमत । न चासिद्धि इत्याह **बिम्बोपाध्योः सन्निधानादिति**। तदेव निमित्तकारण अदृश्यादिक च। दर्पण उपादान त्विति समर्थितम्। न चाप्रयोजकतेत्याह **तादृशं** तदधीनत्वे सति तेन सदृश कथ तदेव स्यात्। विरुद्धधर्माधिकरणत्वात्॥ १५८१ ॥

**प्रतिबिम्बस्य मिथ्यात्वे सत्यबिम्बाद् भवेद्भिदा।**
**प्रतिबिम्बस्य सत्यत्वे द्विस्वभावत्वतो भिदा॥ १५८२ ॥**

मिथ्याभूतस्यापि साधकत्वसाधनावसरे, असत्येन प्रतिबिम्बेन बिम्बानुमानमुदाहरन्तो मायावादिन क्वचित्प्रतिबिम्बो मिथ्येत्यभिप्रयन्ति। क्वचिदभेदाशयेन सत्य इति। तत्र आद्ये दोषमाह **प्रतिबिम्बस्येति**। तथा च तयोरभेदोक्ति स्वव्याहता। द्वितीयस्तु तयो विरुद्धस्वभावत्वादनुचित इति वदति **द्विस्वभावत्वादिति**। तथा च सर्वथा तयोर्भेदो निराबाधः॥ १५८२ ॥

**कथं च प्रतिबिम्बस्य मिथ्यात्वं यौक्तिकं विदाम्।**
**न ह्यस्ति बाधिका नायं प्रतिबिम्ब इति प्रमा ॥ १५८३ ॥**

बाधाभावान्मिथ्यात्व न युक्त इत्याह **विदां** प्रामाण्यस्वतस्त्ववादिनाम् ॥ ॥१५८३ ॥

**दृष्टा बाधितकार्यस्याप्यन्यथानुपपत्तितः।**
**कल्प्यं स्यात्कारणं सर्वं यथेशः कलमाङ्कुरात् ॥ १५८४ ॥**

दर्पणस्य उपादानत्वाभावमुपेत्यापि प्रतिबन्द्याप्रतिबिम्बसत्यता परेणैवाङ्गीकारयति **दृष्टेति।** तदुक्त भगवत्पादै: 'न हि अन्नत्वे दुर्घटे तस्यानन्नत्व भवति' इति । प्रपञ्चित च प्राग्गुणसौरभे 'प्रमाणदृष्टघटना कार्या सैव यथामति । न शक्यते चेत्सर्वेशाचिन्त्यशक्त्यैव सेत्स्यति' इति ॥ १५८४ ॥

**अस्तूपाधिविकारोऽसौ तद्गरूपरसादिवत्।**
**निमित्तमात्रजन्यो वा भावोऽप्येको-**
**ऽस्त्वभाववत् ॥ १५८५ ॥**

कार्यस्य प्रमितत्वेन दर्पणस्य स्पष्ट विकारदर्शनेऽप्युपादानत्व कथञ्चिदुपपाद्यमित्याह तद्गरूपरसादिवत् इति । अस्तु इत्यनेन सिद्धान्ते द्रव्यस्य स्वगुणादीन्प्रति उपादानत्वाभावेनानास्था द्योतयति। नायमस्ति च नियमे। यत्कार्यमात्र सोपादानकमेवेत्याह **अभाववदिति।** प्रध्वंसरूपकार्यस्य निरुपादानत्वदर्शनात् ॥ १५८५ ॥

**उपादानस्य चादृष्ट्या कार्यदृष्ट्या च तादृशी।**
**अवस्था कल्प्यतेऽभावे भावे किं न तथाविधे ॥ १५८६ ॥**

तत्र प्रमितत्वात्कार्यस्य तथा भावः अगत्या कल्पनीय इति चेत्सममत्रापीत्याह **कल्प्यते अभावे इति। तथा विधे** = प्रमिते ॥ १५८६ ॥

**सर्वथा दृष्टकार्यस्य ह्यपलापो न युज्यते ।**
**न चेदीशप्लुतं त्याज्यं नारिकेलफले जलम् ॥ १५८७ ॥**

**न चेत्** प्रमितस्य कथञ्चिदुपपादकान्तर कल्पयित्वा निर्वाहो न क्रियते चेत् । **त्याज्यं** अपलपनीयम् ॥ १५८७ ॥

**अतः स्वाप्नपदार्थस्य प्राहुः संस्कारजन्यताम् ।**
**न स्वप्न इति बाधस्याभावादर्थक्रियाकृतेः ॥ १५८८ ॥**

**प्राहुः** मनोगताश्च सस्कारान्स्वेच्छया परमेश्वर· । प्रदर्शयति जीवाय स स्वप्न इति गीयते इत्यादिश्रुतिस्मृतय । उक्त च परैरपि वासनामयी सृष्टि श्लिष्टेति उत्तरमाह उच्यते इति (बृ शा आनन्द ४ । ३ । १०) [भेपब्र.सू १ प १९४] ॥ ॥१५८८ ॥

**मुखशब्दः प्रतिमुखे सोपचारः कथं न ते ।**
**मुखं प्रति स्थितं यत्स्यात्तद्धि प्रतिमुखाभिधम् ॥ १५८९ ॥**

प्रतिमुखमिति सज्ञाभेदेनापि मुखात्तस्य भेदसिद्धिरित्युपपादयति **प्रतिस्थितं** आभिमुख्येन पराक्त्वेन स्थितम् । यत्र क्वचित् प्रतिमुखे य मुखशब्दप्रयोग स उपचारादेवेति सुबहुधा प्राङ् निदर्शितमिति भाव ॥ १५८९ ॥

**कथं तदेव च मुखं तस्मात्प्रत्यक्परावि्स्थतेः ।**
**संज्ञाभेदात्कर्मभेदाद्बिम्बोऽन्यः प्रतिबिम्बतः ॥ १५९० ॥**

सौरभार्थमुपसहरति **कथमिति। तदेव** प्रतिमुखमेव । तथा हि । प्रतिमुखमेवमुख इति किमत्यन्तसादृश्यधीरुपन्यस्ता प्रत्यभिज्ञा वा । नाद्य । तयैक्यासिद्धे । अन्त्ये असिद्धि· । चैत्रप्रतिबिम्बमेव दृष्ट न तु चैत्र इति भेदानुभवबाधितत्वात् । स्वनेत्रगोलकादौ स्वस्याभिज्ञाभावेन प्रत्यभिज्ञाऽयोगात् (न्या २ । ३२ - प ६०७) । तस्मादित्यस्यैव विवरण प्रत्यगित्यादिहेतुत्रयेण । प्रत्यक्पराग्भावादित्यनेन पार्श्वस्थस्य इमौ बिम्बप्रतिबिम्बौ इति भेदे प्रत्यक्ष

प्रमाणयति । **संज्ञाभेदात्** बिम्ब प्रतिबिम्ब इति च नामभेदात् । अङ्गीकृत च मीमासकै नामभेद स्वाभिधेयभेद प्रयोजयतीति । ज्योतिरित्यादिनामधेयेन तन्नामकयागस्य प्रकृतज्योतिष्टोमादियागाद्भेद· 'सज्ञा चोत्पतिसयोगादि'त्यत्रोक्त । (तर्कताण्डव द्वि.प प ३६९) । **कर्मभेदात्** दाहशोष = शब्दव्यवहारादिकर्मभेदात् । प्रतिबिम्बस्य बिम्बाधीनैव क्रिया इत्येव कर्मभेदाच्च । यथोक्त गीताभाष्ये 'न हि प्रतिबिम्बस्य स्वातन्त्र्येण क्रिया' इति । दार्ष्टान्तिकस्य एतत्सौरभपरमप्रमेयस्य जीवेश्वरभेदस्य समर्थनपरतयाऽपि श्लोकोऽय योजनीय । तथा हि मुखशब्दस्य उत्तमपरत्वात्परमात्माऽर्थ । 'मणिर्मुख प्रधान चेत्युत्तमस्य वचो भवेत्' इति स्मृते । तथा च 'कथ तदेव च मुख' इति वचनविन्यासेन 'अर्थाच्छ्रुतेश्च गुणतो निजरूपतश्च नित्यान्य एव **कथमस्मि स इत्यपि स्यात्'** इति भगवत्पादोक्ति सवादयति । **प्रत्यगिति** अन्तर्यामीत्यर्थ । अस्य भेदव्यवस्थापकत्व अन्तर्यामिनये व्यक्तम् । अत्र च विषदीकृतम् (श्लो २१२-२८५) **संज्ञाभेदः** अनन्त आनन्दमय आत्मा, इत्यादिभि· भगवदसाधारणसज्ञाभिर्ज्ञापितो भेद । (श्लो १-१३३) **कर्मभेदः** स्थित्यदनाभ्यामिति सूत्रोक्त पिप्पलादनानदनरूप । एतेभ्यो हेतुभ्य **बिम्बः** विष्णु । **प्रतिबिम्बतः** । बहुवचनात्पञ्चम्यर्थे तसि जीवेभ्य ॥ १५९० ॥

**वादिराजाख्ययतिना साधिता युक्तिमल्लिका ।**
**भेदसौरभसर्वस्वमथ विष्णोर्न्यवेदयत् ॥ १५९१ ॥**

**इति**

**श्रीमत्परमहसपरिव्राजकाचार्यश्रीमद्वादिराजतीर्थश्रीमत्पूज्यचरणविरचितायां युक्तिमल्लिकायां भेदसौरभं सपूर्णम् ॥**

**युक्तिमल्लिका** एतद्ग्रन्थाभिमानिनी भारती । **साधिता** सव्यापारीकृता । व्यापारश्च प्रसन्नतैव । इदमेव हि देवताया स्वेन साधनं नाम । प्रसन्नता प्रापिता इति यावत् । **भेदसौरभसर्वस्वं** भेदस्य यत्सौरभ तज्ज्ञानस्य मोक्षहेतुत्वसमर्थनरूप तद्रूप समस्त अर्हणम् । 'विविक्तदृष्टिस्तदुतार्हण मे' इति भागवतोक्ते । विष्णो सर्वस्व विष्णो न्यवेदयत् इति आवृत्त्या योजनीयम् । तथा च अर्घ्यं सिन्धोरित्यत्रेव

तदीयस्यैव तस्मिन् समर्पण इति कर्मणि अभिमानत्याग· ज्ञापित । **विष्णोः** प्रीतये इत्युपस्कार । **न्यवेदयत्** स्वप्राणनाथस्य मातरिश्वन· द्वारा। तस्यैव समर्पणाधिकारात्। तदुक्त 'तस्मिन्नपो मातरिश्वा दधाति' इति। मङ्गलप्रयोजनकेनाथशब्देन अन्तेऽपि मङ्गलमनुष्ठितमिति ध्येयम्। आनन्तर्याभिधायकेन अनन्तर करिष्यमाणविश्वफलसौरभयो तत्पूजात्वेन सङ्कल्पन च।

यत्कारुण्यवशेनेय विवृती रचिता मया ।
श्रीसत्याभिज्ञतीर्थार्या प्रीयन्ता ते सदा मयि ॥

**इति श्रीपूज्यपादश्रीसत्याभिज्ञतीर्थश्रीचरणचरणाराधकेन श्रीसत्यप्रमोदतीर्थमुनीन्द्रेण विरचिता भेदसौरभविवृतिः संपूर्णा ॥**

॥ श्रीकृष्णार्पणमस्तु ॥